Book No. 6

॥ श्रीरस्तु ॥

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥



# Srimath Vedantadesika Granthamala

GENERAL EDITOR

SRI KANCHI. P. B. ANNANGARACHARYAR



Address:—

Granthamala Office, 39, Sannidhi Street,

CONJEEVERAM. (S.I.Ry.)

1941.

॥ श्रीरस्तु ॥

# श्रीमद्वेदान्तदेशिकग्रन्थमालायां

[व्याख्यानविभागे प्रथमसम्पुटम्]

## ईशावास्योपनिषद्भाष्यम्, चतुःश्लोकीभाष्यम्, स्तोत्रभाष्यम्, गद्यभाष्यं च ।



पर्यवेक्षकः परिष्कारकश्च

॥ श्रीकाञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥



प्रकाशनादि सर्वाधिकारी

विद्वान् अ. संपत्कुमाराचार्यः, M A.

३९, सन्निधिवीथी, कञ्जीवरम् ।

[इदमेव पुस्तकप्राप्तिस्थानम्]

1940

Price 2—0—0] ॥ एतन्मूल्यं रूप्यद्वयमात्रम् ॥ [Postage Etxra

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

## [व्याख्यानविभागे प्रथमसम्पुटम्]

---:o:---

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्ताचार्यविरचितम्

# ॥ ईशावास्योपनिषद्भाष्यम् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

....................

येनावास्यमिदं सर्वं चेतनाचेतनात्मकम् । विशुद्धसद्गुणौघं तं वासुदेवमुपास्महे ॥ १ ॥

सर्वेशानस्सहजमहिमा सर्वभूतान्तरात्मा सर्वान् दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः ।
कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यस्सिद्धोपायः स्फुरति पुरुषो वाजिनां संहितान्ते ॥ २ ॥

ईशावास्यमिदं सर्वमित्यादि यदनूद्यते । शिष्यं प्रति गुरोरेतद्ब्रह्मविद्यानुशासनम् ॥ ३ ॥
संभूतोदाहृतं सर्वं विनियोगपृथक्त्वतः । विद्यार्थं स्यादिति व्यक्तं निबन्धोऽस्य तदन्ततः ॥ ४ ॥

ईशावास्यमिदँ सर्वं यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १

तत्र प्रथममचिद्विकाराधिष्ठितस्य स्वतन्त्रात्मभ्रमादिपरिजिहीर्षया सर्वस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तिमभिप्रेत्याह—*ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगदिति । इदं—तत्तत्प्रमाणसिद्धमीश्वरव्यतिरिक्तं चिदचिदात्मकम्, ईशा —*ज्ञाज्ञौ द्वावजावीशनीशौ इत्यादिषु जीवादत्यन्तविलक्षणतया प्रख्यातेन सर्वनियन्त्रा पुरुषोत्तमेन, वास्यं—व्याप्यमित्यर्थः । सर्वाधारे स्वस्मिन् स्वेन वसनीयं वा । स्मर्यते हि—

*सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ इति ।

जगत्यामिति लोकान्तराणामुपलक्षणम् । जगत्—स्वरूपतो धर्मतो वा अन्यथात्वं गच्छत् भोग्यभोक्तृरूपं वस्तुजातम् । अतदात्मकं किञ्चिदपि नास्तीति द्रढयितुं—यत्किञ्चेति विशेष्यते ।

*इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः । [illegible]न्याहु क्षेत्रं क्षेत्रज्ञमेव च ॥ इत्युपबृंहितम् । ननु *रूढिर्योगमपहरतीति न्यायादीशोऽत्र रुद्रस्स्यात्, सर्वाद्यु[illegible]भावाच्च । मैवं, कारणविषयाकाशप्राणादिशब्दवद्रूढेरिह बाधितत्वात्, *एको ह वै नारायण आसीन्न ब्रह्मा नेशानः, *अन[illegible] नामानि मे धेहि इत्यादिभिः असर्वकारणत्वेन कर्मवश्यत्वेन च संप्रतिपन्ने रुद्रे सर्वावास्यत्वसर्वाधारत्वादेरसंभवात् । तद्वृत्तया प्रसिद्धे अनवच्छिन्नैश्वर्ये सर्वेश्वरे यौगिकोऽयं शब्द प्रत्येतव्यः । यद्यपि प्रसिद्धवन्निर्देशा[illegible]काशादिवाक्यवैषम्यम्, तथाप्यैन्द्रीन्यायाद्विरुद्धार्थविषयतयैव रूढिभङ्गोपपत्तिः । नचात्र *सर्वत्वमाधिकारिकमिति न्यायः, सङ्कोचाद्दृष्टेः । प्रवाहेश्वरानेकेश्वरपक्षौ तु त्रैकालिकसर्वनिर्वाहकेश्वरप्रतिष्ठापकैः प्रमाणगणैः प्रत्यूढौ । अतः *पतिं विश्वस्यात्मेश्वरमित्यादिप्रसिद्धानन्याधीनैश्वर्यम् *योऽसावसौ पुरुषः इत्यनुवदिष्यमाणं ब्रह्मेशानजनकतया [illegible]रितम् *एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः इत्यादिषु सर्वान्तर्यामित्वेन प्रख्यातम् तत एव *स ब्रह्मा स शिवः इत्यादिविभूतिभूतानां ब्रह्मशिवेन्द्रादीनां *विश्वमेवेदं पुरुषः इत्यत्र विश्वस्यैव विशेष्यतयोक्तं नारायणमेव सर्वस्य वास्यमीशं वक्तुमुचितमेतद्वाक्यमित्यलमन्यरूढिप्रसङ्गरहितासमस्तपदाध्ययनानभिज्ञाश्रोत्रियचोद्योपालम्भेन । एवं मुमुक्षोरीश्वरपारतन्त्र्यप्रबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति—***तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्**इति । **तेन**-जगता भोग्यताभ्रमविषयेण, **त्यक्तेन**—दो[illegible], उपलक्षितस्सन् **भुञ्जीथाः** । अप्रतिषिद्धयोगधर्मोपयुक्तदेहधारणमात्रोपयिकं भोग्यवर्गमित्यर्थप्रकरणाभ्यां सिध्यति । यद्वा, सर्वावास्यत्वेन प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथाः इति याज्यम् । कस्यापि बन्धोरबन्धोर्वा धनं, **मा गृधः** - माऽभिकाङ्क्षः । आह च यमः किङ्करं प्रति *परमसुहृदि इत्यारभ्य *शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः इति । इदं च धनाशाप्रहाणं परमात्मेतरकृत्स्नविषयवैराग्योपलक्षणम् । स्मर्यते हि *परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि इति ॥ १

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥** २

एवं विदुषः फलसङ्गकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं विद्याङ्गभूतं कर्म यावज्जीवमनुष्ठेयमित्याह—***कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** इति । ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय सन्योगः । शतमिति च प्रायिकविषयम् । शतं समाः जीवन् अ[illegible]नि कर्माणि कुर्वीतैव । न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्यर्थः । अस्य वाक्यस्य फलसाधनभूतस्वतन्त्रकर्मविषयत्वे विशेषहेत्वभावस्सूत्रितः—*नाविशेषात् इति । अर्थान्तरं च प्रकरणाविरुद्धम् अनन्तरसूत्रोक्तम् * स्तुतयेऽनुमतिर्वा इति । **भाष्यं**—[illegible] । * ईशावास्यमिदं सर्वमिति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । [illegible] कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चै तदेव दर्शयति—* **एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे** इति । त्वयि ब्रह्मविद्यधिकारिणि एवमेवानुष्ठेयार्थः, इतोऽन्यथा नास्तीति व्यतिरेकेणोक्तं दृढीकारार्थम् । ननु ब्रह्मविदोऽपि कर्मानुष्ठानभावाद्बन्धस्स्यादित्यत्राह— **न कर्म लिप्यते नरे** इति । प्रस्तुते ब्रह्मविदि नरे । * अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् इति विनियोगपृथक्त्वन्यायेन कर्म न स्वर्गादिफलहेतुर्भवति । विद्यानुपयुक्तकाम्यानां निषिद्धानां च विरक्तेन विवेकिना न बुद्धिपूर्वोपादानसंभवः । संभावितानामपि केषांचित् * नाविरतो

दुश्चरितात् इत्यादिबलात् स्वानुगुणा निष्कृतिस्स्यात् । तदधिगमाधिकरणे तु प्रामादिकानामेवाश्लेषः परविद्यावतामपि स्थापितः । ज्ञानाग्निदग्धाधिकारो विधिनिषेधानधिकारीति पक्षस्तु न वेदवित्संमतः ॥ २

**असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ॥ ३**

वक्ष्यमाणविद्यायां शीघ्रं प्रवृत्त्यर्थमुक्तप्रकारब्रह्मवेदनविधुरतया वित्तैषणायोगाच्च अन्यथाभवद्भिर्ज्ञानानुष्ठानैरात्मघातिनां निरयपातोऽवश्यम्भावीत्याह—* **असुर्या...जनाः**—इति । **असुर्या** - * असुरस्य स्वम् इति यत्; आसुरप्रकृतीनामनुभाव्या इत्यर्थः । **नामे**ति प्रसिद्धौ । ते - नरकसञ्ज्ञिताः भीषणतमाः लोकास्सन्ति । पुनस्तान्विशिनष्टि—**अन्धेन तमसावृताः**—गाढेनान्धकारेण व्याप्ताः । **तान्** - आलोकप्रसङ्गरहितान्, **ते** - स्वात्मघातिनः । **प्रेत्य** - तदातनदेहादुत्क्रम्य । **अभिगच्छन्ति** - कार्त्स्न्येन निरन्तरं प्राप्नुवन्ति । **येकेच** - देवजातीया मनुष्यजातीया वा, तथा ब्राह्मणक्षत्रियादयो वा । **आत्महनः** - * असन्नेव स भवति, असद्ब्रह्मेति वेद चेत् इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः ; देहपातमुखेन पातकवर्गोपलक्षणमिदम् । **जनाः** - जनिमन्तः ; संसरन्त इत्यर्थः ॥ ३

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४**

सर्वावासत्वेन प्रस्तुतमीश्वरतत्त्वं विरुद्धवदभिलापव्यञ्जितेन विचित्रशक्तियोगेन विशदयति—**अनेजदेकं मनसो जवीय** इति । **अनेजत्** - अकम्पमानम् । **एकं** - प्रधानभूतम्, स्वानधीनस्वसमानद्वितीयरहितं वा, **मनसो जवीयः** - वेगवत्तरमनसोऽप्यतिशयितजवम् । नन्विदं न जाघटीति निष्कम्पत्वं वेगवत्तरत्वं चेति ; मैवं, तात्पर्यवृत्त्या सुघटितत्वात्, सर्वस्य स्वेन नित्यव्याप्तत्वादनेजत्, सर्वदा मनसो गोचरदेशमतिक्रम्य वृत्तेः मनसो जवीय उपचर्यते । एवमुत्तरेष्वपि वाक्येषु भाव्यम् । **नैनद्देवा आप्नुवन् पूर्वमर्षत्**—प्रागेव सर्वान् प्राप्नुवत् देवा हिरण्यगर्भादयो नाप्नुवन्; एतावन्तं कालं न लेभिरे । विभुत्वेन नित्यप्राप्तमपि कर्मप्रतिबद्धज्ञानाः क्षेत्रज्ञाः विद्याविगमात्पूर्वं स्वबुद्ध्या न प्राप्नुवन्तीति न विरोधः । यथोक्तं छान्दोग्ये * तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः इति । **तद्धावतोऽन्यानत्येति तिष्ठत्** - * यः पृथिव्यां तिष्ठन् * य आत्मनि तिष्ठन् इत्यादिक्रमेण तत्सर्वत्र तिष्ठदेव धावतो गरुडादीनप्यत्येति, यावद्यावद्धावन्ति जविनस्तावतः परस्तादपि वर्तत इत्यर्थः । यथोच्यते—

* वर्षायुतशतेनापि पक्षिराडिव संपतन् । नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ॥ इति ।

अन्येषां क्वचित्तिष्ठतां धावदतिक्रमणं नास्तीति वैचित्री । अन्यदपि किञ्चिदाश्चर्यमित्याह—**तस्मिन्नपो मातरिश्वा दधातीति** । तस्मिन्नवस्थितः अप्रतिबन्धानुगुणकाठिन्यादिरहितोऽपि वायुः अपो बिभर्ति । सर्वाधारभूतेन सर्वेश्वरेण विधृतस्स मातरिश्वा तच्छक्त्यैव पाथःपयोधरनक्षत्रग्रहतारकादिकं बिभर्तीत्युक्तं भवति । स्मर्यते हि—

* द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ इति ॥ ४

**तदेजति तदु नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५**

* अनेजदेकं मनसो जवीयः इत्युक्तमर्थमादरान्मुखान्तरेणानुशास्ति - * **तदेजति तदु नैजतीति** । तत् - व्याप्तं तत्त्वं पूर्वोक्तप्रकारेण जवीयस्त्वादिना एजति - कम्पते । कम्पत इवेत्यर्थः । **तदु नैजति** तदेव वस्तुवृत्त्या न कम्पते । **तद्दूरे तद्वन्तिके**-तद्दूरेऽन्तिके च वर्तते । मूढप्रतिबुद्धपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । यथाह शौनकः—

* पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् । तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम् ॥

तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके ॥ इति ।

केचित्पदार्थाः कस्यचिदन्तर्भवन्ति न बहिः । केचिद्बहिर्भवन्ति, नान्तः । तदुभयव्याप्तिमाह—**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत** इति । तत् सर्वव्याप्तमुक्तं परं ब्रह्म । अस्य-विचित्रचिदचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः अन्तर्भवति - अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः । तदेव सर्वस्यास्य बहिरपि भवति, परिमितानां पदार्थानां भावदेश इवाभावदेशेऽपि वर्तत इति यावत् । तदेतद्व्यक्तमुक्तं तैत्तिरीये सर्वपरविद्योपास्यविशेषनिर्धारणार्थे * सहस्रशीर्षम् इत्यानुवाके—

*यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ इति ॥ ५

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥** ६

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ तद्विदस्सांप्रतिकं प्रयोजनमाह—*यस्तु....जुगुप्सत इति । ब्रह्मविन्माहात्म्ये विशेषद्योतनाय तुशब्दः । **सर्वाणि भूतानि** - ब्रह्मादिस्थावरान्तानि । अत्रात्मशब्दस्सङ्कोचकाभावात्प्रकरणबलाच्च सर्वान्तरात्मविषयः । पृथिव्यादिनिर्दिष्टान्यपि तन्मुखेन परमात्मन्यवस्थितमित्येवकाराभिप्रायः । **अनुपश्यति**—अनुस्यूतं विशदं निध्यायति । **सर्वभूतेषु चात्मानमिति** व्याप्तिमात्रपरम्, तस्य तैर्धार्यत्वाभावात् । स इति प्रतिनिर्देशोऽध्याहार्यः । **ततो न विजुगुप्सते**—ब्रह्मात्मकत्वेनानुदृष्टेषु सर्वेषु स्वात्मविभूतिन्यायात्कुतश्चिदपि न विजुगुप्सते । क्वचिदपि निन्दां न करोतीत्यर्थः ॥ ६,

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥** ७

पुनरपि सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन द्रढय(न्)ति तथानुदर्शनस्य सद्यश्शोकनिवर्तकत्वमाह— * **यस्मिन्...पश्यत** इति । **यस्मिन्**-प्रणिधानसमये । **विजानतः** - स्वतन्त्रपरतन्त्रवस्तुभेदं सम्यगुपदिष्टेन मार्गेण शास्त्रेण विविच्य जानतः । **आत्मैव सर्वाणि भूतानि अभूत्** - परमात्मैव सर्वविशिष्टः प्रतीत इत्यर्थः । देवोऽहम् इत्यादिवल्लोकवेदमर्यादया शरीरात्मभावेन जगद्ब्रह्मसामानाधिकरण्ये संभवति बाधोपचारस्वरूपैक्यादिपक्षा बहिष्कार्याः । **तत्र** - तदा, **को मोहः** - स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न संभवतीत्यर्थः । **कश्शोकः**—परविभूतिभूते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादावपि न कश्चिच्छोकस्स्यादित्यर्थः । यथाह—

* अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते ॥ इति ।

**एकत्वमनुपश्यतः**—सर्वविशिष्टैक्यमनुपश्यतः । न ह्ययमेकशब्दः एकव्यतिरिक्ताभावपरः, * ईशावास्यमिदं सर्वम् इति ईश्वरव्याप्तत्वेन प्रक्रान्तस्य कस्यचित्केनचिदपि बाधाभावात्, सर्वभेदमिथ्यात्ववेदनावेदनयोः कथञ्चिदपि तादृशैक्योपदेशादिप्रवृत्त्ययोगाच्च । न चासौ परस्परविरुद्धानां स्वरूपैक्यप्रतिपादकः, सर्वव्याघातोत्सादने स्वपरमतविवेकादिविप्लव-

प्रसङ्गात् । विशिष्टैकत्वविवक्षा तु सर्वप्रमाणानुगुण्याद्भाव्यते । ततोऽपि वरमत्र प्रकृतसामानाधिकरण्यनिर्वाहानुगुणसंबन्धविवक्षा । प्रयुज्यते हि संबन्धविशेषविवक्षया *रामसुग्रीवयोरैक्यम् इत्यादिष्वेकशब्दः । एतौ च श्लोकौ यद्यपि मुक्तविषयतया नेतुं शक्यौ, तथापि पूर्वानुगुण्यान्मुमुक्षुप्रशंसार्थत्वमुचितम् । ततश्च वैशद्यातिशयविवक्षया शास्त्रजन्यज्ञानेन तन्मूलोपासनात्मकज्ञानेन दर्शनवाचोयुक्ति । समाधिविशेषफलभूतस्त्वद्यतनसाक्षात्कार उपायत्वेनाभिहितत्वान्नात्र संशयनीयः । मोक्षोपायोपदेशपरेषु सर्वेषु वाक्येषु दर्शनशब्द उपासनविषय इति **शारीरकभाष्ये** प्रत्यपादि ॥ ७

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥ ८**

पुनरप्येनम् ईशेशितव्यतत्त्ववेदिनं वेदितव्यविशेषबोधनेन च विशिनष्टि-*स **पर्यगात्**....समाभ्यः इति । **सः** - सर्वभूतान्तरात्मभूतब्रह्मदर्शी, **पर्यगात्** - प्राप्नुयादित्यर्थः । * ब्रह्मविदाप्नोति परम् इति न्यायात्समाधिलब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादो वा, * अत्र ब्रह्म समश्नुते इतिवत् । **शुक्रम्** - अवदातम्, स्वप्रकाशरूपम् । **अकायं** - सर्वशरीरकमपि कर्मशरीररहितम् । अत एव **अव्रणम्, अस्नाविरञ्च** । **शुद्धम्**—अनाघ्राताज्ञानादिदोषम् । **अपापविद्धम्** - अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूपकर्मानालीढमित्यर्थः । * न सुकृतं न दुष्कृतम् इत्यारभ्य * सर्वे पाप्मानोऽतो निवर्तन्ते इति हि निगम्यते । एवमशेषहेयप्रत्यनीकः परमात्मा मुमुक्षोः प्राप्यः प्रापकः उपास्यश्च स्यात् । * सः इत्युक्तं ब्रह्मविदं सर्वार्थदर्शित्वेन विशिनष्टि—**कविः**—क्रान्तदर्शी । व्यासादिवत्परतत्त्वतद्गुणबोधनानुगुणप्रबन्धनिर्मातेति वाऽर्थः । मनस ईशित्री बुद्धिः मनीषा, तद्वान् - **मनीषी** । अभ्यासवैराग्याभ्यां निगृहीतान्तःकरण इत्यर्थः । परितो भवतीति **परिभूः**—परितो भवतीति परिभूः, विद्यान्तरवतः सर्वानतिक्रम्य वर्तते । कामक्रोधलोभादीन् दुर्जयानरातीन् अभिभवतीति वा । स्वयंभूः—अन्यनिरपेक्षसत्ताकः, नित्यात्मस्वरूपदर्शीति यावत् । **याथातथ्यतोऽर्थान् व्यदधात्**—परमपुरुषार्थतदुपायद्विरोधिप्रभृतीन् सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् । **शाश्वतीभ्यस्समाभ्यः**—यावद्ब्रह्मप्राप्ति सर्वप्रत्यूहशमनार्थमिति भावः । यद्वा प्रथमान्तं च द्वितीयान्तं च पदजातं क्रमात्परावरात्मविषयतया व्याख्येयम् । तदा * शुक्रम् इत्यादिकं सर्वोपाधिविनिर्मुक्तपरिशुद्धजीवपरम् । तमपि च, **सः**-परमात्मा, **पर्यगात्** परितो व्याप्य स्थितः । कवि. इत्यादिकं सुगमम् । **याथातथ्यत** इत्यादि । अर्थान् - कार्यपदार्थान्, शाश्वतीभ्यस्समाभ्यः यावद्विलयमवस्थातुं, याथातथ्यतो व्यदधात्, न पुनरैन्द्रजालिकवत्केवलं प्रकाशितवान् ॥

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ ९**

एवं विचित्रशक्तिपरमात्मविषयां कर्माङ्गिकां विद्यामुपदिश्यानन्तरं केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च निन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निश्श्रेयसावाप्तिमाह—*अन्धं **तमः प्रविशन्ति येऽविद्यामुपासत** इत्यादिना । **ये**—भोगैश्वर्यप्रसक्ताः, **अविद्यां**—कर्म, ज्ञानविधुरकर्ममात्रम् । * अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते इति हि स्मर्यते । **उपासते**—एकान्तमनसोऽनुतिष्ठन्तीत्यर्थ. । **अन्धम्** - अतिगाढम् । **तमः** - अज्ञानं, त्रिवर्गाभिषङ्गान्नान्तरीयकं नारकं तमो वा । केवलकर्मनिरतानां दु स्वानुवृत्तिमधीयते चाथर्वणिकाः ॥

* प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा. जरामृत्यू ते पुनरेवापि यन्ति ॥

इति । **ततो भूय इव ते तमो य उ विद्यायाँ रताः**—कर्ममात्रनिष्ठप्राप्यादन्धतमसादधिकं तमः स्वाधिकारोचितकर्मपरित्यागेन विद्यामात्रे रताः प्रविशन्ति । इवशब्दस्तमस इयत्ताया दुर्भहत्व द्योतयति । उकार उत्तरत्रपदेनान्वेतव्य· - विद्यायामेव रताः इति ॥ ९

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥** १०

कि तर्हि मोक्षसाधनमित्यत्राह—***अन्यदेवाहुर्विद्यया अन्यदाहुरविद्ययेति** । अत्र व्यत्ययानुशासनात्पञ्चम्यर्थे तृतीया ; अन्यशब्दानन्वयात्, * अन्यदेवाहुरसम्भवात् इति वक्ष्यमाणसारूप्याच्च । केवलकर्मण. कर्मनिरपेक्षविद्यातश्चान्यन्मोक्षसाधनमित्युक्तं भवति । **आहुः**—पूर्वाचार्या इति शेष । औचित्यादुपनिषद इति वा । पूर्वपूर्वसम्प्रदायसिद्धोऽस्माकमयमर्थ इत्याह—**इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे**-**ये** पूर्वाचार्या, **नः** - प्रणिपातादिभिस्सम्यगुपसन्नानामस्माकम्, **तत्** - मोक्षसाधनम्, **व्याचचक्षिरे** विविच्योपादिक्षन् । तेषां, **धीराणां**-परमात्मध्यानपराणां ; वचनमित्यध्याहार्यम् । *नटस्य शृणोतीतिवद्वा कथञ्चित्पञ्चम्यर्थे षष्ठी । **इति शुश्रुम**-एवंप्रकारमश्रौष्म । ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणाशक्यत्वाभिप्रायोऽत्र लिङुत्तमः ॥ १०

**विद्यां चाविद्यां च यस्तद्वेदोभयँ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥** ११

* अन्यदिति संग्रहेणोक्तं विवृणोति—**विद्याञ्चाविद्याञ्च यस्तद्वेदोभयँ सहेति** । **यः** यथावस्थितोपदेशवान् । **विद्यां**-परमात्मोपासनरूपाम् । **अविद्यां** तदङ्गभूतकर्मात्मिकां च । एतदुभयं परस्परविरोधप्रसङ्गरहितम् । **सह वेद** - अङ्गाङ्गिनोरनुष्ठेयत्वसाम्यादुभयं सह वेदेति अविशेषेण वेदनीयतोक्तिः, न पुनर्हेयोपादेययोः ज्ञातव्यत्वसाम्यात् । पूर्वमविद्याया निन्दनात्तदौचित्यमिति चेत् तर्हि विद्याया अपि निन्दिताया हेयद्वयसमुच्चयोक्तिप्रसङ्गः । तथा सत्युत्तरवाक्यमपि विघटते । **अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते** इति । अयमर्थ·—विद्याङ्गतया चोदितकर्मणा मृत्युं - ज्ञानसङ्कोचरूपं मृत्युहेतुं प्राक्तनकर्म । **तीर्त्वा** - निरवशेषमुल्लङ्घ्य । **विद्यया** - पूर्वोक्तपरमात्मानुदर्शनरूपया । **अमृतमश्नुते**—* एतदमृतमभयमेतद्ब्रह्म इत्यादिषु सर्वदोषरहितत्वेन प्रतीतं परमात्मानं प्राप्नोतीत्यर्थः । अत्रामृतशब्दस्य मोक्षपरत्वेऽपि न पुनरुक्तिः, *मृत्युं तीर्त्वेत्यस्य उपायविरोधितरणपरत्वात्, *अमृतमश्नुते इति प्राप्तिविरोधिनिवृत्तिलाभोक्तेः । अत्र * अविद्यया मृत्युं प्राप्य स्थिताः इति व्याचक्षाणाः निर्बाधं पदवाक्यस्वारस्यमुपबृंहणं च प्रस्मृत्य स्वाविद्यया स्वयमेव मृत्युं प्राप्य स्थिता· । एतदेव वाक्यमनुसंहितं वैष्णवे पुराणे ।

*इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ इति ।

इह त्वविद्याशब्द प्रकरणादौचित्याच्च विद्याङ्गकर्मविषय इत्यभाषि **भाष्यकारैः** * अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मेति, मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहितं कर्मैव * इति च । विद्यां पर्युदस्यन्नयमविद्याशब्दः क्षत्रियादिविषयाब्राह्मणशब्दादिवदासन्नतदनन्तरवृत्तिरङ्गकर्मविषय इति भावः ।

एवं * तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ । तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥

इत्याद्युपबृंहणान्यपि सुसंगतानि भवेयुः। ये पुनरिह विद्याकर्माख्यसाधनद्वयसमुच्चयं मृत्युतरणामृतत्वप्राप्तिरूपसाध्यद्वित्वं च वर्णयन्ति, तेषां कर्मज्ञानयोरङ्गाङ्गिभावं विद्ययैव मृत्युतरणं च व्यक्तं प्रतिपादयद्भिः श्रुतिस्मृतिसूत्रगणैर्यथाभाष्यमुत्तरं देयम्। विषमसमुच्चयत्वादेऽपि यथाभागं सन्निपत्योपकारकत्वसंभवे गत्यन्तरगमनिका नीतिविद्भिर्न संमन्यते॥

**अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते। ततो भूय इव ते तमो य उ संभूत्याँ रताः॥ १२**

तदेवमुपास्यं परमात्मतत्त्वं साङ्गतदुपासनरूपं च परमहितं परमपुरुषार्थपर्यन्तमुपदिश्यानन्तरं त्रिभिश्श्लोकैः प्रतिबन्धनिवृत्तिपरब्रह्मानुभवरूपयोः फलपर्वणोस्समुच्चित्यानुसन्धानं विद्याङ्गत्वेनोपादेयमित्युच्यते। तत्र प्रथममेकैकमात्रानुसन्धानं निन्दति—* **अन्धं तमः—रता** इति। * एतमितः प्रेत्याभिसंभवितास्मि. * धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि इत्यादिषु ब्रह्मप्राप्तिरूपा संभूतिरुक्ता। तां पर्युदस्यन्नयमसंभूतिशब्दः तदासन्नप्रतिबन्धविनाशमभिधत्ते। * संभूतिं च विनाशं च इत्यपि हि अनन्तरमुच्यते। तेन चात्रासंभूतिशब्देन संभूतेरनुत्पत्तिः विनाशो वा प्रतिपाद्यः। अमृतप्राप्तिहेतुतयोक्तायास्संभूतेः प्रागभावस्य प्रध्वंसस्य वा मृत्युतरणहेतुत्वेन वक्तुमयुक्तत्वात्। अत्रापि तरतेः प्राप्तिवचनत्वं पूर्ववत्प्रतिक्षेप्यम्॥ १२

**अन्यदेवाहुस्संभवादन्यदाहुरसंभवात्। इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥ १३**

**अन्यदे....स्तद्विचचक्षिरे** इति। अत्र तच्छब्दस्समुच्चित्यानुसन्धेयतया वक्ष्यमाणद्वितयं वक्ति॥ १३

**संभूतिं च विनाशं च यस्तद्वेदोभयँ सह। विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते॥ १४**

**अत्रापि** * अन्यत् इत्युक्तं विवृण्वन्विद्याङ्गमुभयानुसन्धानमाह—**संभूतिं....सहेति**। तस्यैव फलप्रदर्शनेनावश्यकर्तव्यतां स्थापयति—**विनाशेन...मश्नुते** इति। अनुसन्धीयमानेन **विनाशेन** प्रतिबन्धमपाद्य, **संभूत्या** अनुसन्धीयमानया ब्रह्म प्राप्नोति। संभूतिविनाशानुसन्धानरूपेऽङ्गे स्तुत्यर्थम्। यथोचितमङ्गिफलनिर्देशः। यद्वा * विनाशेन मृत्युं तीर्त्वा इति पूर्वोक्तमरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च विनाशो विवक्षितः। अतो विरुद्धनिवृत्तिरूपाङ्गसेवनेन समाधिविरोधिपापमपाकृत्य समाधिनिष्पत्तिरूपब्रह्मसंभूत्या तदेवाश्नुते। अत्र संभूतिविनाशशब्दाभ्यां सृष्टिप्रलयादिविवक्षया मृत्युतरणामृतप्राप्तिरूपफलविभागवचनस्यौचित्यलवोऽपि नोपलभ्यते॥ १४

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥ १५**

अथैवं फलपर्यन्तसाङ्गब्रह्मनिष्ठस्यानुसन्धेया मन्त्रा उपदिश्यन्ते। तेषु च पूषादिशब्दास्सर्ववाच्यं परमात्मानमनुसन्दधतां तद्देवताप्रणाड्या साक्षाद्वा तत्पर्यन्ताः। अत्र हि यमसूर्यादिशब्दानामेकविषयत्वं स्वरसावगतं तथा सत्येवोपपद्यते। तत्र प्रथमेन मन्त्रेण पूषन्शब्दविवक्षितं भगवन्तं प्रति प्रस्तुतां समाधिप्रतिबन्धनिवृत्तिं प्रार्थयते—**हिरण्मयेन....दृष्टये** इति। सत्यशब्दोऽत्र जीवपरः, * सत्यं चानृतं च सत्यमभवत्, *अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेषसत्यमित्यादिषु जीवेऽपि तत्प्रयोगात्। तस्य **मुखम्** - अनेकेन्द्रियावष्टम्भतया मुखवदवस्थितं मनः, **हिरण्मयेन पात्रेण अपिहितं** - रागात्मकतया हिरण्मयसदृशेन रजोमयेन पात्रेण परमात्मविषयवृत्तिप्रतिरोधकेन च्छादितम्। हृदि निहिते परमात्मविषये निरुद्धवृत्तिकमित्यर्थः। रज कथनं तमसोऽप्युपलक्षणम्। हिरण्मयशब्देन

कर्माधीनभोग्यवर्गप्रदर्शनम् । **तत्** जीवस्य मुखस्थानीयं मनः, **पूषन्** - आश्रितपोषणस्वभाव, **अपावृणु** - निरस्तपिधानं कुरु । कस्य हेतोः? **सत्यधर्माय दृष्टये** सत्यस्य जीवस्य धर्मभूताय पूर्वोक्तब्रह्मानुभवदर्शनायेत्यर्थः ॥ १५

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।**
**यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥** १६

पुनरपि तथा दृष्ट्या द्रष्टव्यं विशिषन् दृष्ट्या गुणमभ्यर्थयते—**पूषन्नेकर्षे....पश्यामि** इति । **एकर्षे**— अद्वितीयातीन्द्रियद्रष्टः, **यम** सर्वान्तर्यामिन्, **सूर्य** स्वभक्तबुद्धीनां सुष्ठु प्रेरक, **प्राजापत्य** - प्रजापतिप्रसूतस्य सर्वस्यान्तर्यामिन्, अविवक्षितप्रत्ययार्थो वा प्राजापत्यशब्दः, प्रजानां पते इत्यर्थः । **व्यूह रश्मीन् समूह तेजः** - स्वस्वरूपप्रकाशनौपयिकान् स्वोग्ररश्मीन् व्यपोह, प्रभात्मकं च तेजस्संनिहितं कुरु । **यत्** *आदित्यवर्णम् इत्यादिप्रसिद्धं सर्वेभ्यः कल्याणेभ्योऽतिशयेन कल्याणं [illegible] ते दिव्यं रूपं, तत् पश्यामि । अत्र वर्तमानव्यपदेशः उत्तरवाक्यवत्तात्कालिकानुसन्धानानुवादः । प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थोऽत्र ग्राह्य इत्यपुनरुक्तिः । तदा साधारण्यज्ञापनार्थं सदा पश्यामीति वा [illegible] ।

अथान्तरात्मनोऽहंग्रहणेनानुसन्धानमाह—**योऽसावसौ पुरुषस्सोऽहमस्मि** इति । वीप्सा अत्यादरव्यञ्जनार्था । यद्वा * योऽसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्तस्सनातनः । सर्वभूतमयोऽचिन्त्यस्स एष स्वयमुद्बभौ ॥ इत्यादिवाक्यच्छायया यत्तच्छब्दाभ्यामदश्शब्दौ विभज्यान्वेतव्यौ ; सर्वेन्द्रियप्रमाणागम्यत्वद्योतनार्थो वा । **पुरुषः** - [illegible] आदित्यवर्णविग्रहविशिष्टः सर्ववेदपठितानन्यपरपुरुषसूक्तादिप्रसिद्धो महापुरुषः । **सोऽहमस्मि**—अहंशब्दोऽत्र जीवद्वारा तदन्तरात्मपर्यन्तः । अत एवास्मीत्यपि पत्ययः स्वविशिष्टे परमात्मनि विश्राम्यति । * अस्मद्युत्तमः इत्येतावदेव ह्यनुशिष्टम् । न पुनरस्मच्छब्दस्य प्रत्यगात्मद्वारा [illegible] । एवं * तत्त्वमसि इत्यादिषु असिशब्दो निर्वाह्यः । तत्रापि * युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इत्येतावदेव हि स्मर्यते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिः । लोके तु अहं त्वमसि, त्वमहमसि इत्याद्युपचारेषूद्देश्यानुसारेण मध्यमोत्तमयोर्व्यवस्था । तद्वदत्रापि व्यवस्थोपपद्यते, उद्देश्यविषययोरेवात्र युष्मदस्मच्छब्दयोरुपपदत्वेन सूत्रपदाभिप्रेतत्वात् । **भाष्ये** तु तत्त्वमसिनिरूपणावसरे * नात्र किञ्चिदुद्दिश्य किमपि विधीयते इत्युक्तिः [illegible] व्यक्ता, उपसंहारत्वोपपादनात् । ये पुनः * तत्त्वमसि *सोऽहमस्मि इत्यादिषु कार्यकारणोपाध्याकारविधूननेन निर्विशेषस्वरूपैक्यं वाक्यवेद्यमाहुः, तेषाम् असिवदस्मिरपि खण्डकः । श्रोतर्यनुसन्धातरि च युष्मदस्मदी हि परित्यक्ते न ह्यसिना कश्चित्प्रतिबोधनीयः, न च कश्चिदस्मिना विशिष्यानुसन्धेयः । विधूननीयोपाधिविषयव्युत्पत्तिमच्छब्दसन्निधिमात्रोपजीवनेन क्वचिन्मध्यमोत्तमसंपत्तिरिति चेत् ततो वरमपरित्यक्तप्रवृत्तिनिमित्तकत्वेन निर्वहणमनुसर्तुम् । सन्मात्रस्यांशिनोऽशद्वयविशिष्टताप्रतिपादनं वदतामपि सन्मात्रविवक्षायामत्र वाक्ये त्वमहंभावायोगात्, त्वंताहंताविशिष्टं सदिति विशिष्टविवक्षायामपि प्रथमपुरुषापनिपातप्रसङ्गात् । दृश्ययोश्च [illegible] मणिक इव घटशरावाकारयोस्सदंशभूतेश्वराकारेऽपि समन्वयायोगात् त्वमहमर्थयोस्सत्ताद्याकारस्य नित्यप्रतिपन्नतया विशेषतोऽनिर्देश्यत्वादननुसन्धेयत्वाच्च न कथञ्चिदपि * तत्त्वमसि * सोऽहमस्मि इत्यादेर्निर्वाहश्शक्यः । दृष्टिविधिस्तु मोक्षार्थविद्यासु वेदान्तवादिना नाङ्गीक्रियते । यद्यप्यत्र त्वं

राजासि अहं राजास्मि इत्यादिवत्तादधीन्याद्युपचारविवक्षया मध्यमोत्तमयोस्सामञ्जस्यं, तथापि लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारन्यायेन जातिगुणशब्दगतिलाभात्तदुपेक्षा। नन्वेवं पुरुषाख्यस्वेतरात्मसामानाधिकरण्यक्लेशं परित्यज्य * योऽसावसौ पुरुषस्सोऽहमस्मि इति परिशुद्धस्वरूपमात्रानुसन्धानपरमिदं वाक्यमस्तु; मैवं, * तत्त्वमसि * त्वं वा अहमस्मि इत्यादिषु तदनुपपत्तेः; अत्रापि तत्समानन्यायतया तथैवानुसन्धानस्यौचित्यात्। ब्रह्मात्मकोऽहमस्मि इति परविद्याङ्गभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यात्॥ १६

**वायुरनिलममृतमथेदं भस्मान्तँ शरीरम्। ओं क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर॥ १७**

अनन्तरं तु परिशुद्धात्मस्वरूपमुच्यते—**वायुरनिलममृतम्**—इति। विद्याकर्मानुसारेण तत्रतत्र गन्तृत्वा-**द्वायुः**। निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्च **अनिलम्**। **अमृतं**—म्रियमाणेऽपि देहसन्ताने स्वयममृतम्। इदं विजरत्वादीनामप्युपलक्षणम्, परिशुद्धजीवविषये प्रजापतिवाक्ये * विजरो विमृत्युर्विशोक इत्यादिसहपाठात्। अत्र * वायुश्चान्तरिक्षं चैतदमृतम् इत्यादिपरामर्शाद्वाय्वादिशब्दानां भूतद्वितीयविषयत्वं न शङ्कनीयम्, पूर्वापराभ्यामसङ्गतेः। यद्यप्यमीषां परमात्मविषयत्वं विशिष्टवृत्त्या योगतो वा युज्यते, तथापि वरमिह नश्वरस्य देहस्यानन्तरं वचनात्तद्व्यावृत्तप्रत्यगात्मपरत्वम्; प्राणविषयत्वेऽप्यत्र मन्दं प्रयोजनम्। श्वेताश्वतरीयाश्च भोग्यभोक्तृनियन्तॄणां विवेचने भोक्तृशब्दविवक्षितप्रत्यगात्मानममृतशब्देनामनन्ति * क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः इति, * क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः इति च। एवं प्रत्यगात्मस्वरूपस्य * न जायते म्रियते वा विपश्चित् इत्यादिप्रसिद्धममृतत्वमभिधाय क्षेत्रज्ञशरीरस्य मृतत्वमवश्यं भावीत्याह—**अथेदं भस्मान्तं शरीरमिति**। प्रकृतादर्थादर्थान्तरविवक्षयाऽत्राथशब्दः। आत्मोत्क्रमणानन्तर्यार्थो वा। कर्मवश्यकात्स्न्र्यपरो वा। तथा च स्मर्यते * गङ्गायां सिकता धारा यथा वर्षति वासवे। शक्या गणयितुं लोके न व्यतीताः पितामहाः॥ इति, * ब्रह्मादिषु प्रलीनेषु इत्यादि च। **इदमिति** विशेषणम् ईश्वरशरीरत्वेन नित्यत्वेन च प्रमाणसिद्धानां व्यवच्छेदार्थम्। **भस्मान्तमिति** संस्कारमात्रव्यञ्जकम्; कीटान्तत्वादेरन्यत्र प्रसिद्धस्योपलक्षणं वा। शरीरशब्दे व्युत्पत्तिनिमित्तानुसारे विशरणस्वभावत्वं गम्यते। एवं * भोक्ता भोग्यं प्रेरितारं च मत्वा इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं प्रकृतं महापुरुषं प्रणवेनोपादत्ते—**ओमिति**। यथाऽऽमनन्त्याथर्वणाः * यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत इति। उक्तं च योगानुशासने * क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः * स पूर्वेषामपि गुरुः कालेनानवच्छेदात् * तस्य वाचकः प्रणवः इति। आह च सर्वज्ञः—* ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् इति। स्वयंचागायत् * ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् इति। एवं सर्वत्र द्रष्टव्यम्। अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरमभिमुखीकुर्वंस्तदनुग्रहं याचते—**क्रतो स्मर कृतं स्मरेति**। **क्रतो** - क्रत्वात्मक। यथाह * अहं क्रतुरहं यज्ञ इति। * यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति * स क्रतुं कुर्वीत * एव क्रतुः इत्यादिष्विवात्रापि प्रकरणादेव क्रतुशब्द उपासनपरो वा। तद्गोचरे तु भगवति तच्छब्द उपचारात्। **स्मर** - सानुग्रहया बुद्ध्या विषयीकुरु, * स्नेहपूर्णेन मनसा यन्नः स्मरसि केशव इतिवत्। उक्तञ्च भगवता * स्थिते मनसि इत्यारभ्य * ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गतिम्॥ इति। सर्वदा सर्वं साक्षात्कुर्वतः स्मर्तृत्ववचनमिह पूर्वकृतप्रत्यवेक्षणाभि-

प्रायम् । कृतं स्मरेत्यत्रापि तथैव विवक्षा । मत्कृतं यत्किञ्चिदनुकूलमनुसन्धाय कृतज्ञस्त्वं मां रक्षेति भावः । एताव-दन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा । स्मरन्ति हि * जायमानं हि पुरुषम् इत्यादि । स्वयमप्याह * तेषां [illegible] । क्रतो स्मर कृतं स्मर इत्यावृत्तिरुक्तार्थे त्वरातिशयात् ॥ १७

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ १८

पुनरप्यग्निशब्दवाच्यं भगवन्तं स्वापेक्षितं प्रापयेत्याह- **अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम** ॥ इति ॥ **अग्ने** - अग्निशरीरक, * यस्याग्नि-श्शरीरम् इत्यन्तर्यामिब्राह्मणम् । * साक्षादप्यविरोधं जैमिनिः इति न्यायात् अग्रनयनादिगुणयुक्तेति वा । **नय**— प्रवर्तयेत्यर्थः । **सुपथा**—शोभनेन मार्गेण । प्रतिषेधस्पर्शरहितेनोपायेनेति यावत् । **राये**—विद्यार्थशरीरसंरक्षणत्वदर्च-नाद्यनुगुणाय धनाय । विद्यार्थप्रकरणानुगुण्यात् * अतस्करकरग्राह्यमराजकवशंवदम् । अदायादविभागार्हं धनमार्जय सुस्थिरम् ॥ * अनन्तं बत मे वित्तम् इत्यादिषूक्तमलौकिकं धनमिह विवक्षितम् । एक एव मन्त्रः प्रकरणादिभिर्विशेषित-स्तत्तदनुगुणमर्थं विवक्षतीति सम्यङ्न्यायविदः । **अस्मान्**—त्वदनन्यभावान् अनन्यगतींश्च । **विश्वानि देव वयुनानि विद्वान्—देव** - अस्मदपेक्षितप्रदानानुरूपविचित्रक्रीडायुक्त । * माया वयुनं ज्ञानम् इति नैघण्टुकाः । अतो ज्ञानमुखेन उपायविशेषा इह वयुनशब्देन विवक्षिताः । सर्वान्—तत्त[illegible] चतुर्विधपुरुषार्थोपायान् यथा वत् विद्वान् त्वमविदुषोऽस्मान् नेतुमर्हसीति भावः । **युयोध्यस्मज्जुहुराणं**—बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्य-वत्तया वा बाधमानमित्यर्थः । **एनः**—अकृत्यकरणकृत्याकरणादिरूपं त्वदनुभवादिप्रतिबन्धकम्, अस्मत्तो **युयोधि**—पृथक्कुरु, विनाशयेत्यर्थः । **भूयिष्ठां ते नम उक्तिं विधेम** - * अनन्यगतिः इत्यादिगुणैरावृत्तिभिश्च भूयसीं नम उक्तिं ते विदध्महे । व्यत्ययो हि बहुलमनुशिष्टः । नम उक्तेरनुवृत्तिं वा नाथं प्रति नाथने । * नम इत्येव वादिनः इति हि मुक्तलक्षणा अपि पुरुषा मोक्षधर्मे प्रतिपादिताः । मानसकायिककर्मनमसोरभावेऽपि नम श्शब्दमात्रेण प्रसत्तुमर्हतीत्युक्तिशब्दाभिप्रायः । एवं परतत्त्वतद्विभूति[illegible] संगृह्य संहितेयं समपूर्यत ॥

व्यक्ताव्यक्ते वाजिनां संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।
वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये वेङ्कटेशः ॥

अभेदं भोक्तृणामथ च भविनामेव परतां तथा भेदाभेदं जिनसुगतनीतिं च जगति ।
असंपाद्यां मुक्तिं भवभयमलोकं च पठतामसावीशेत्यादिर्न कथमनुवाकः प्रतिभटः ॥

हरिः ओम्

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु
ईशावास्योपनिषद्भाष्यं समाप्तम्.

---

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

—————:o:—————

# ॥ चतुश्श्लोकीभाष्यम् ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

..................

**स्वशेषाशेषार्थो निरवधिकनिर्बाधमहिमा फलानां दाता यः फलमपि च शारीरकमितः ।**
**श्रियं तत्सध्रीचीं तदुपसदनत्रासशमनीमभिष्टौति स्तुत्यामवितथमतिर्यामुनमुनिः ॥**

अत्र समन्वयाविरोधसाधनफलविषयशारीरकचतुरध्यायीसमधिगतस्य भगवतस्सर्वप्रकाराभिमतानुरूपसह-(धर्मचारिणी)धर्मिणीविशिष्टतयाऽपि सर्वाधिकत्वं *कश्श्रीश्श्रिय इत्युक्तकैमुतिकन्यायकाकुगर्भया चतुश्श्लोक्या प्रकाशयन् प्रथमं श्रियः प्रतिपिपादयिषितानां विभूतिद्वयशेषित्वादीनां स्थापकमाह—

**कान्तस्ते पुरुषोत्तमः फणिपतिश्शय्याऽऽसनं वाहनं वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।**
**ब्रह्मेशादिसुरव्रजस्सदयितस्त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ १ ॥**

**कान्तस्त** इति । कान्तः-प्रियः, अनुरूपपतिरित्यर्थः । ते-सर्वमङ्गलास्पदत्वेन प्रमाणसिद्धायाः । एतत्पद-द्वयाभिप्रेतं व्यञ्जितं गद्ये * देवदेवदिव्यमहिषीमिति । * द्वाविमौ पुरुषौ लोके इत्यादिभिस्स्वेनैव निरुक्तेन परत्वव्यञ्जकेन समाख्याविशेषेण लक्ष्मीकान्तं विशिनष्टि—**पुरुषोत्तम** इति । अत्र पञ्चम्यादिविभक्तित्रयेऽपि समासश्शब्दवित्संमतः । अनेन हिरण्यगर्भादीनामपि भगवदपेक्षयाऽधमत्वव्यञ्जनात्तत्पत्नीभ्यः पुरुषोत्तमपत्न्या उत्तमत्वं सूचितम् । अवतारेऽपि ह्यसौ*नारीणामुत्तमेत्युच्यते । एवमस्याः पतिसंबन्धेन प्रकर्ष उक्तः । अथ पत्युरिव विभूतिसंबन्धेनापि प्रकर्षं वदन्नित्यसूरि-परिबृढानामपि एतदुपकरणत्वमुदाहरति—**फणिपतिश्शय्येति** । अत्र फणिपतिशब्देन सुरभिसुकुमारशीतल-विशालोन्नतत्वादिरूपाः पर्यङ्कगुणा व्यज्यन्ते । तत्प्रभावश्च, * कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वल । सङ्कर्ष-णात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥ स बिभ्रच्छेखरीभूतमशेषं क्षितिमण्डलम् ॥ आस्ते पातालमूलस्थश्शेषोऽशेष-सुरार्चितः ॥ तस्य वीर्यं प्रभावं च स्वरूपं रूपमेव च । न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥ इत्यादिषु प्रसिद्धः । स्तोत्रे च * तया सहासीनमनन्तभोगिनीत्यादौ । आसनशब्द इह काकाक्षिन्यायादुभयतो योज्यः । उक्तं ह्याद्ये

पुराणे तन्नामसहस्रे, * भोगप्रिया भोगवती भोगीन्द्रशयनासनेति, * अजिताऽर्कभैपी नीतिर्गरुडा गरुडासनेति च । * वहेयं यज्ञं प्रविशेयं वेदान् इति सौपर्णश्रुतिविवक्षितं [illegible]भिप्रेत्याह—**वेदात्मा विहगेश्वर** इति । वेदाधिष्ठातृतया वेदानामात्मा; यद्वा, तद्विशिष्टत्वेन [illegible] वेद आत्मा यस्येति विग्रहः । * सुपर्णोऽसि गरुत्मानित्यादिष्वप्यस्य वेदात्मत्वं ग्राह्यम् । एवं सर्ववेदाभिमानितया सर्वज्ञत्वमप्यस्य सूच्यते । बलादि-गुणजातमपि अमृतापहरणादिषु प्रसिद्धम् । यद्यपि विहगेश्वरशब्दः * सत्यस्सुपर्णो गरुडस्तार्क्ष्यस्तु विहगेश्वरः इति **श्रीसात्वता**दिषु प्राणादिपञ्चकाधिपतित्वेनावस्थितस्य गरुडस्य व्यूहविशेषमभिधत्ते, तथाप्यत्र विशेषकाभावाद्गरुत्मन्मात्र-विषयः । फणिपतिविहगेश्वरयोरुपादानमिह मिथो विरुद्धजातीयैरप्यविरोधेन युगपत्सेव्यत्वं सूचयति । कैमुत्यादन्येषां नित्यानां मुक्तानामप्येतत्परिजनपरिच्छदभावेनावस्थानं ख्याप्यते, तेषामप्येतदाज्ञाकरत्वमुक्तं **श्रीवैकुण्ठगद्ये** *शेषशेषाश-नादिसर्वपरिजनमित्यादिना । एवं सर्वस्या अपि नित्यविभूतेस्तच्छेषत्वं तात्पर्यतः प्रदर्शितम् । अथ लीलाविभूतौ अचिदंशस्य प्रथमं तच्छेषतामाह **यवनिका माया जगन्मोहिनीति** । अत्र यवनिकाशब्दाभिप्रेतं **गद्ये** *भगवत्स्वरूप-तिरोधानकरीमिति विवृतम् । एतद्ग्रन्थद्वयतात्पर्येण दिव्यदम्पत्योरनाश्रितापेक्षया त्रिगुणतिरस्करिण्या तिरोधेयत्वं फलितम् । मायाशब्दोऽयम् * मायान्तु प्रकृतिं विद्यात् इति प्रकृतिविषयतया **श्वेताश्वतरै**रधीतः । स च विचित्र-सृष्ट्युपकरणतया प्रकृतेराश्चर्यमयत्वं व्यञ्जयति । जगन्मोहिनीत्यनेन जीवपरमात्मादिषु विपरीतधीहेतुत्वं शब्दादिगुण परिणतिशबलितस्वविषयभोग्यताबुद्धिजनकत्वं च विवक्षितम् । [illegible] कर्मवश्यानां सर्वेषामपि विष्णु-पत्नीशेषत्वमुत्कृष्टमुखेन कैमुत्यन्यायादुपलक्षयति **ब्रह्मेशादिसुरव्रजस्सदयितस्त्वद्दासदासीगण** इति । प्रकर्षनिदर्शना-दीश्वरत्वशङ्कास्पदयोः * एतौ द्वौ विबुधश्रेष्ठौ [illegible]रेकराश्यसूचनाय व्रजगणशब्दौ । सदयित इत्युपादानेऽप्यौचित्याद्दासीशब्दस्तत्पत्न्यंशेऽन्वेतव्यः । उक्तार्थे श्रुत्यादीनि प्रमाणानि तिष्ठन्तु, असाधारण-समाख्यैवालमिति ख्यापयति - **श्रीरित्येव च नाम त** इति । *श्रयन्तीं श्रीयमाणां च शृण्वतीं शृणतीमपि * शृणाति निखिलं दोषं शृणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥ इत्यादिनिरुक्तिरिहाभिप्रेता । * निस्सङ्कल्पा निराश्रयेति नाम तु * श्रयते च परं पदमित्याद्यविरोधेन नेयम् * अकलङ्काऽमृताधारा इति पूर्वोक्तानुसाराच्च । अमृतो हि परमात्मा. तदाधारा चेयम् । अत एव हि सोऽपि श्रीनिवासश्श्रीधर इति च समा-ख्यायते । उक्तं च **श्रीसात्वते**—* यन्नेऽङ्गनाश्रयश्चास्या मूर्तिर्मम तदात्मिका इति । यन्निवेशात् सर्वत्र प्राशस्त्य-धीस्सैव हि ते समाख्येत्येवकाराभिप्रायः । निर्दोषमङ्गलगुणाकरत्वज्ञापनाय भगवतीत्युक्तिः । [illegible] यथावत् स्तोतुमशक्यतामाह—**ब्रूमः कथं त्वा**मिति ॥ त्वाम् उक्तप्रक्रियया विष्णुपत्नीत्वेन तदितरसर्वशेषित्वेन तदुचित नामधेयादियोगेन च प्रसिद्धाम् *न ते वर्णयितुं शक्ता गुणान् जिह्वाऽपि वेधस इति चतुर्मुखेनापि स्तोतुमशक्यतयोक्तां चेति भावः । **वयं** - परिमितज्ञानशक्तयः । * ब्रह्माद्यास्सकला देवा मुनयश्च तपोधनाः । त्वां स्तोतुमपि नेशानास्त्व-त्प्रसादलवं विना ॥ इति वचनानुसारेण ब्रह्मादीनां स्वस्य चात्राविशेषव्यञ्जनाय बहुवचनम् । **कथं ब्रूमः** - कार्त्स्न्येन त्वद्वर्णनमशक्यं, परिच्छिद्य वर्णनं त्वनुचितमिति भावः ।

ये पुनराहुः श्रीर्नाम भगवतस्सर्वकर्तुरधिष्ठेया प्रकृतिरिति । ये च तस्य सत्ताहन्ताप्रभाशक्तिचिकीर्षेच्छाभोक्तृतादि रूपेयम्, शास्त्रेषु तथातथा व्यपदेशदर्शनादित्याहुः । तेषां तत्रतत्रैव शास्त्रे निर्बाधेन चेतनत्वव्यपदेशेन निरासः ।

अत्राप्ययमर्थः ते त्वामिति युष्मच्छब्देन संबोधनेन च श्रियश्चेतनत्वमुपस्थापयता सूचितः । सत्तादिशब्दास्त्वस्यां भगवदन्तरङ्गविशेषणत्वाद्यभिप्रायाः । प्रकृतेरन्यत्वं तु ते यवनिकेत्यनेनापि दर्शितम् । न चास्याः प्रकृतिशब्दोपात्ततामात्रेण त्रिगुणद्रव्यतादात्म्यम्, *वासुदेवः परा प्रकृतिः * प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्युक्ते भगवत्यपि प्रसङ्गात् । * जगदुत्पादिका शक्तिस्तव प्रकृतिरिष्यते । सैव नामसहस्रैस्तु लक्ष्मीः श्रीरिति कीर्त्यते ॥ *मूलप्रकृतिरीशानी *प्रकृतेः पुरुषाच्चान्यस्तृतीयो नैव विद्यते इत्यादीनि ब्रह्मवचनान्यपि लक्ष्मीनारायणयोः प्रकृतिपुरुषरूपविभक्तविभूतिविशेषाभिमानित्वाभिप्रायाणि । **रहस्याम्नाये** तु प्रकृतौ लक्ष्म्यां च विद्याशब्दः प्रयुक्त इत्येतावताऽपि न तयोस्स्वरूपैक्यम् । तत्र हि सत्त्वोन्मेषमुखेन विद्याहेतुतया प्रकृतौ विद्याशब्दः, लक्ष्म्यां तु विद्याप्रवर्तकत्वादिति विशेषः । ये तु सत्तादिविशिष्टो भगवानेव श्रीरिति वा, श्रीरूपनित्यविग्रहान्तरविशिष्टस्स एवेयमिति वा, दैत्यमोहनभूमिकापरिग्रहन्यायेन स्वयमेव भोगार्थं परिगृहीतकादाचित्ककान्ताविग्रहस्स एव श्रीरिति वा वदन्ति ; तेऽपि तद्विषयनिर्बाधनित्यभिन्नचेतनत्वव्यपदेशकैस्तैस्तैरेव शास्त्रैर्निराकृताः । *ह्रीश्च ते लक्ष्मीश्च पत्न्यौ इति श्रुतिश्च पत्युः पत्न्याश्च स्वरूपभेदं स्वरसतो दर्शयति । न चात्रानन्यथासिद्धं बाधकमस्ति । इदमप्यत्र कान्तस्त इति व्यधिकरणनिर्देशेन व्यञ्जितम् । ये च मन्यन्ते - भगवत एव स्वरूपैकदेशः पृथगहन्तया परस्परभोक्तृत्वाय सर्वदा परिगृहीतस्त्रीरूपश्श्रीशब्दार्थः । तेन भेदाभेदव्यपदेशयोश्चेतनत्वस्य चाविरोध इति; तेऽपि ब्रह्मणस्स्वरूपतो निरवयवत्वं प्रतिपादयद्भिः प्रमाणैर्निरस्ताः । *नरनारीमयो हरिः इति ब्राह्मपुराणवचनेन तु हरेर्नारीमयत्वव्यपदेशो *ज्योत्स्नेव हिमदीधितेरिति तत्रत्यदृष्टान्तानुसारेण प्रभाश्रयस्य प्रभामयत्वव्यपदेशवत्स्वरूपभेदाविरोधेन निर्वाह्यः । एतेन बीजादेरङ्कुरोपादानांशवद्विश्वोपादानस्य ब्रह्मणः कार्योपयुक्तस्वरूपैकदेश एव स्वभावतो वा परिणतिशक्त्या वा उपाधिभेदेन वा भिन्नाहन्ताश्रयश्श्रीरिति व्यपदिश्यत इति पक्षोऽपि प्रतिक्षितः, ब्रह्मणस्स्वरूपपरिणामादेश्च **शारीरके** निरस्तत्वात् । उपहितांशभेदपक्षस्तु विग्रहाद्युपाधौ सञ्चरति निरवयवे ब्रह्मस्वरूपे सरिज्जलादौ घटादिनेवोपाधिना कस्यचिदंशस्यान्यत्राकर्षणायोगात्, घटाकाशन्यायेन पूर्वपूर्वोपहितांशपरित्यागे तु तत्तदंशरूपस्य भोक्तुरभावादुत्तरोत्तरोपहितांशानां पूर्वपूर्वांशानुभूतभोगप्रतिसन्धानानुपपत्तेः, भोक्तृसन्तत्येकतामात्रेण प्रतिसन्धाने सौगतमतोन्मज्जनेन स्थिरात्मपरित्यागप्रसङ्गाच्चात्यन्तानुपपन्नः । अवतारपरिणामोपाधिभिन्नांशवादिनो लक्ष्म्यादेर्नित्यदेहादिप्रमाणैश्च निरासिरे । एतदपि सर्वमत्र व्यधिकरणप्रयोगेनैव सूचितम् । *कीर्तिश्श्रीर्वाक्च नारीणामित्यादिसमानाधिकरणप्रयोगश्च पूर्वापरवत्स्वरूपभेदेऽपि संबन्धविशेषनिबन्धनः । *विष्णोश्श्रीरनपायिनीत्यादिभिर्व्यधिकरणप्रयोगैश्च भेदस्सिद्धः । तद्वद्भूयप्रायन्यायात् सहपठितनार्थन्तरवत् कर्मवश्यत्वं स्यात्, न स्यात्, वचनविरोधे न्यायस्यानवकाशात् । न चेदेवम् *आदित्यानामहं विष्णुः, * वृष्णीनां वासुदेवोऽस्मि, * अनन्तश्चास्मि नागानां वैनतेयश्च पक्षिणामित्यत्र कुतस्तथात्वनिस्तार. ? निर्धारणादिति चेन्न । साजात्येऽपि वैषम्यमात्रेण तदुपपत्तेः । ईश्वरत्वानीश्वरत्वकर्मवश्यत्वाकर्मवश्यत्वादौ तु प्रमाणान्तरमेव शरणमिति । इदं चास्याः कर्मवश्यवैजात्यमिह ब्रह्मादिभ्योऽप्यधिकत्वोक्त्या प्रकाशितम् । नन्वर्धलक्ष्मीकविग्रहयोगः श्रीपतेः श्रियश्च विग्रहैक्यं स्वरूपैक्यं भेदाभेदं वा सूचयति । उक्तञ्च श्रीविष्णुवैभवाधिकारैः—*त्वं यादृशोऽसि कमलामपि तादृशीं ते दारान् वदन्ति युवयोर्न तु भेदगन्धः । मायाविभक्तयुवतीतनुमेकमेव त्वां मातरं च पितरं च युवानमाहुः ॥ इति । तन्न, उभयेच्छया विग्रहमात्रस्यैकीकरणसंभवेनान्यथाप्युपपन्नतया विग्रहैक्यस्य श्रुत्यादिविरुद्धस्वरूपै-

क्यादिकल्पकत्वायोगात् । तथाप्येकेनैव परमात्मना यथाकथञ्चित्सर्वनिर्वाहे किमत्रात्मभेदस्वीकारेणेति चेन्न, क्लृप्तौ वक्तव्यस्य श्रुतौ वक्तुमयुक्तत्वात् । उक्ता च श्रुतिः प्रागेव । तदनुगुणं च **श्रीविष्णुस्मृतौ** भूमिवाक्यम् *आक्रम्य सर्वां तु यथा त्रिलोकीं तिष्ठत्ययं देववरोऽसिताक्षि । तथा स्थिता त्वं वरदे तथापीत्यादिकम् । *नानयोर्विद्यते परमित्यादिभिः पुराणवचनैः, *एकतत्त्वमिवोदितो इत्यादिभगवच्छास्त्रवचनैश्च स्वरूपैक्यमनयोरपास्तम् । लाघव-तन्मात्रावलम्बने तु सर्वेषामप्यात्मनामैक्यं प्रसजेत् ।

**आत्मभेदमनिच्छन्तो भाष्यादिषु निराकृताः । दिव्ययोस्त्विह दम्पत्योः मिथो भेदः प्रसाधितः ॥**
**सर्वेषामात्मनां यैस्तु भिन्नाभिन्नत्वमिष्यते । लक्ष्मीनारायणैक्योक्तिः तेषां सद्भिरुपेक्ष्यते ॥**
**यत्र क्वचिदभेदोक्तिर्व्यासवचने भवेत् । रामसुग्रीवयोरैक्यमित्यादिवदिहास्तु सा ॥**

अत्र निर्विशेषचिन्मात्रब्रह्मस्वरूपतिरोधानकरी मिथ्याभूता मायैव कल्पितरूपविशेषा [illegible] च्छदवती लक्ष्मीरित्युच्यते इति पक्षोऽपि तादृशब्रह्मतत्तिरोधानादिनिरासादेव निर्धूतः । इदमप्यत्र मायायाः प्रस्तुत-दम्पतिव्यतिरिक्तजगन्मोहनत्वोक्त्या प्रख्यापितम् । ननु यवनिका बहिरन्तस्स्थितयोः दृष्टिप्रसरनिरोधेन मिथोऽवलोक-नविरोधिनी लोके दृष्टा । अतः श्रियोऽपि यवनिका तथा स्यात् । मैवम्, तदधीनसर्वव्यापारया मायया तस्यास्सर्व-विषयसहजदृष्टिनिरोधायोगात् । क्षेत्रज्ञानामपि भगवन्मायया धीसङ्कोचस्य दुष्कृतोपाधिकत्वात् अकर्मवश्येषु नित्यमुक्ते-श्वरेषु तत्प्रसङ्गाभावादिति । अस्तु तर्हि कर्मवश्यतादात्म्यात्कर्मफलान्वयः, ब्रह्मादीनां कर्मवश्यत्वं तावत् *युगकोटि-सहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ इत्यादिभिः प्रसिद्धम् । किंपुनस्तत्पत्नी-नाम् । ताभिश्च तादात्म्यमस्यास्तत्रतत्र [illegible] व्यज्यते । गायत्रीकल्पेषु च सन्ध्यात्रये वर्णवाहनादिविशेषितं रूपत्रयमेकस्या एव देवतायाः प्रतिपाद्यते । उक्तं च कैश्चिल्लक्ष्मीस्तोत्रे—*गौर्देवेनेति गरुडध्वज-वल्लभेति इत्यादिभिः । अतः कर्मवश्यताद[illegible]रोहितज्ञानत्वमस्या उपपद्यत इति । तदसत् । विशेषतस्सामानाधिकरण्यस्य *यद्यद्विभूतिमत्सत्त्वमित्युक्तेन विभूत्यध्यायन्यायेन निर्वाहात् । **तापनीयोपनिषदि घृतसूक्ते** च लक्ष्म्यास्तैस्तैः शब्दा अपि निरुक्तिविशेषैस्तत्तद्विभूतियोगेन वा नेतव्याः । गायत्रीकल्पानां तु **लक्ष्मीविभूति**-भूताया एव गायत्र्याख्याया देवतायास्सन्ध्याभेदेन वैष्णव्यादिस[illegible] माहात्म्यवर्णने तात्पर्यं तत्र तत्र व्यक्तम् । तादृशाश्च वाहनादयोऽन्ये स्युः । न हि सारूप्यमात्रेण त एवैत इति निश्चयः, अनेकेषा-मेकजातीयवाहनादिदर्शनात् ।

**द्रुहिणादिषु केषांचिदीश्वरव्यक्तिनाम्रमात् । तत्पत्नीष्वपि लक्ष्म्यंशवादः श्रुत्यादिबाधितः ॥**

एतदभिप्रायेण ह्यत्रोक्तम्—**सदयितस्त्वद्दासदासीगण** इति । *अस्त्वेवं, तथापि स्वयंशमात्रापेक्षयैव श्रियो विभूतिमत्त्वमस्तु, **ब्राह्मवैष्णवादि**पुराणेषु तथा दर्शनात् । अतः श्रीमत एव सर्वविभूतिशेषित्वमिति । अत्र ब्रूमः—*दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः [illegible] परमात्मदासत्वसिद्धेः *जायापत्योर्न विभागः इति न्यायात्पतिदासानां पत्नीदासत्वमवर्जनीयम् । नन्वेवं पत्न्या अपि पतिदासत्वे सति तां प्रति दासानां दासत्वमयुक्तं स्यात् । तन्न, लोके वेदे वा क्वचिदपि पत्न्याः पतिं प्रति दासत्वाभावात् । अत एव हि *यदा यदा हि **कौसल्या** दासीवच्च सखीव चेति दृष्टान्ततयोच्यते । *अहं शिष्या च दासी च भक्ता च तव माधवेति भूमि-

वचनमप्युपचारतो नेयम् । यद्यपि पत्नीनां पतिदासत्वं, तथाऽपि पतिदासान्तराणां तद्दासत्वमपि यथालोकं युज्यते । अस्ति च सर्वेषां भगवद्दासत्वेऽपि तत्तदुपाधिभिः मिथो दासत्वम् । इह त्वेकयैवेच्छया विभूतिद्वयस्य नित्यमुभयार्थतयोपात्तत्वाद्देवताद्वन्द्वहविर्न्यायेन ब्रह्मादीनामुभयशेषत्वं युक्तमेव । **गद्या**दिषु विभूतिमध्ये तस्याः पाठोऽपि पत्यपेक्षया पारार्थ्यमात्रसाम्यादुपपन्नः ।

**आत्मान्तराणां सर्वेषां लक्ष्मीतत्पतिदासताम् । मकारस्तु तयोर्दास इति केचिदधीयते ॥**

एवं सति भगवत्पत्न्यन्तरापेक्षया ब्रह्मादीनां दासत्वं भवतु वा मा वा, उक्तं तावदुपपन्नम् । अतः * पुन्नामा भगवान् हरिः, * स्त्रीनाम्नी लक्ष्मीर्मैत्रेय * योयो जगति पुम्भावस्स विष्णुरिति निश्चयः । योयस्तु नारीभावस्स्यात् तत्र लक्ष्मीर्व्यवस्थिता ॥ इत्याद्युक्तो विभूतिविभागस्तु लौकिकदम्पत्योर्यथोचितविनियोगानुगुणभूषणादिविभागवन्नित्येच्छानियमितविशेषाभिमानार्थं इत्यभिप्रायेण फणिपत्यादीनामप्यत्र लक्ष्मीशेषत्वोक्तिरिति । केचित्तु नानाविधवादिविप्रतिपत्तिमोहितास्सर्वथा दुर्निरूपं लक्ष्मीतत्त्वमिति मन्यन्ते । तेऽप्येवमिह निरूपणेन निर्धूताः । किञ्च सदसदनिर्वचनीयत्वादिरूपदुर्निरूपत्वं तत्तन्मतनिरासादेव निरस्तम् । येनकेनचिदाकारेण दुर्निरूपत्वं तु सर्वत्रापि संभवति, उपयुक्तांशनिरूपणस्यापि संप्रतिपन्नसाम्यान्नात्र विशेष इति ॥ १ ॥

**यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-**
**र्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।**
**तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो**
**लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥** २

अथ * कथं ब्रूम इति स्तुत्यारम्भाक्षेपहेतुतयोदाहृतं स्तोतव्यगतमुत्कर्षं मुखान्तरेण दृढीकुर्वन्नेव तदुपश्लिष्टं सौलभ्यविशेष(गुण)मनुसन्धाय स्तोतृगतदयनीयदशानिरूपणेन हेतुना स्तुत्यारम्भं समाधत्ते - **यस्या** इति ॥ यस्या इत्येतावता पर्याप्तेऽप्यत्र त इत्यधिकोपादानं धर्मिग्राहकमानसिद्धासाधारणविशेषद्योतनार्थम् । महिमानं विभूतिद्वयशेषित्वरूपं निरतिशयानुकूलगुणयोगरूपं च । आत्मन इव-स्वस्येव । त्वद्वल्लभः - त्वत्प्रियतमः । प्रभुः-सर्वविषयज्ञानशक्त्यादिमान् । प्रभुरपीत्यन्वयः । अपिरनुक्तसमुच्चयार्थो वा, त्वं च त्वद्वल्लभश्चेत्यर्थः ॥ नालं मातुमियत्तया-परिच्छिद्यानुसंधातुमसमर्थः । सर्वशक्तेः क्वचित्कथमसामर्थ्यमित्यत्राह-**निरवधिमिति** । विषयस्यापरिच्छिन्नत्वात् तत्र सर्वज्ञस्य सर्वशक्तेरपि परिच्छिन्नत्वज्ञानाभावो न दोष इति भावः । यथोक्तं **श्रीवत्साङ्कमिश्रैः**—*देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोस्सर्वज्ञता हीयते इति । ईदृशश्च महिमा **वेदार्थसङ्ग्रहे**ऽप्युक्तः—* अनवधिकमहिमा महिषीति । विवृतश्च **गद्या**रम्भे * भगवन्नारायणेत्यादिना । श्रद्धासूक्तमेधासूक्तादितिसूक्तवाक्सूक्तादिष्वेतद्विभूतिविशेषप्रतिपादकेषु विशेषतः श्रीसूक्ते च विचित्रा एतन्महिमानस्तत्तद्भाष्यकारैः प्रपञ्चिताः प्रतिपत्तव्याः । अस्या महिम्नः प्राप्यान्तर्भावज्ञापनाय नित्यनिरुपाधिकानुकूलत्वमाह— **नित्यानुकूलं स्वत** इति । तां-सर्वज्ञसाक्षिकतादृशमहिमानम् । त्वां महत्त्वसङ्गतसौलभ्यगुणयोगात् मदीयस्तोत्रश्रवणकौतुकेनाभिमुखीभूताम् । दास इति प्रपन्न इति च - प्रतिबुद्धदासभावत्वात् , प्रपन्नत्वाच्चेति (अर्थः) भावः । उभयमिदं सम्भूय * प्रेष्यस्य क्षमितव्यं म इत्यादिन्यायेन निर्भयत्वे हेतुः ।

**पृथुगद्यमुखेऽस्माभिः श्रीप्रपत्तिरियं सताम्। श्रीपतौ स्थितमैकान्त्यं न विहन्तीति गाधितम् ॥**

**स्तोष्याम्यहं निर्भयः**—अनाद्युपचितापराधस्त्वन्महिमस्तोत्रानुगुणज्ञानशक्तिरहित्याद्यैः नित्यसूरिभिः निगमैश्च कार्त्स्न्येन स्तोतुमशक्यां त्वां प्रतिबुद्धदासप्रपन्नत्वव्याजेन निर्भयस्तोष्यामीत्युक्तं भवति। एवं स्तोत्राक्षेप-तत्समाधानव्याजेन प्रवृत्तमपि श्लोकद्वयमिदं प्रकृष्टस्तुतिरूपमेव। त्वत्प्रपन्नस्य मे न कुतश्चिदप्यनोश्वराद्भयमित्यभिप्राये-णाह—**लोकैकेश्वरीति**। लोकैकेश्वरः परमात्मा तत्सर्वेषामद्वितीय ईश्वरः। ईश्वरशब्दश्चात्रान्तर्नीतशेषित्वं नियन्तृत्व-मभिप्रैति। * पति विश्वस्येति विश्वशेषित्वेन निर्दिष्टस्य शेष्यन्तरनिवृत्तिविवक्षायामात्मेश्वरमिति निर्देशात्। * यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इत्यस्यार्थश्चैवं संगृहीत - * व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदित इति। तत्र च भाष्यम्—* व्यापनभरणस्वाम्यैरर्थान्तरतयेति। ईदृशेश्वरपत्नीत्वादिह लोकैकेश्वरीत्युक्तम्। एतेन * पुंप्रधाने-श्वरेश्वरीति समाख्याऽपि गतार्था। त्वत्प्रसादे सति सर्वेश्वरादपि मे भयं नास्तीत्याह—**लोकनाथदयित** इति। दयिताशब्द इह वल्लभात्वाभिप्रायः। सर्वभयाभयहेतुभूतस्सर्वेश्वरोऽपि त्वदभिमतं नातिक्रामतीति भावः। अनेन संबुद्धिद्वयेन स्तुतिविषयत्वौचित्यातिशयोऽपि सूचितः। ईदृशीं त्वामाश्रितस्य मे त्वत्तोऽपि भयं नास्तीत्याह -**दान्ते दयां ते विदन्निति**। प्रतिबुद्धदासः कृपोत्तम्भकदीनावस्थापन्नः आज्ञातिलङ्घनाद्विरताभिसन्धिः प्रपन्न इह दान्तशब्दा-भिप्रेतः। मातृत्वप्रयुक्तवात्सल्यातिशयवत्यास्ते दान्ते पुरुषे भगवत्कारुण्यादप्यतिशयितां दया जानन्नहमेवं प्रपन्नत्वान्निर्भय इत्यन्वयार्थः। प्रश्रितमात्रपरो वाऽत्र दान्तशब्दः। तावन्मात्रेऽपि हि तस्या विशेषाभिमानः तथैवोक्तः * धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि। प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ इति। एवंविधश्च दयाविशेषः * करुणा-प्रानतमुखीत्यस्याः समाख्ययैव ख्यापितः। अष्टोत्तरसहस्रनामसु च पठ्यते—* करुणां वेदमातरमिति। करुणा-प्रचुरतयाऽसौ करुणात्वोक्तिः।

**पारम्यापह्नवः पत्यौ बाह्यानां मानबाधितः। इति ख्यापयितुं श्रीशं श्रीदृष्टान्तमिहाब्रवीत् ॥**

अथ स्यात् * आनीदवातं स्वधया तदेकमिति प्रलयदशायां स्वधाशब्दवाच्यया कयाचित्परस्य ब्रह्मणोऽननं श्रूयते। सा चात्र * स्वधा त्वं लोकपावनीति पुराणोक्ते, **महाभारते** च श्रीवासवसंवादे * अहं स्वाहा स्वधा चैवेति स्वयमेवोक्तत्वादौचित्याच्च लक्ष्मीरेव। अतस्तदधीनप्राणनत्वं ब्रह्मण इति। तन्न, स्वाधीनसर्वसत्ताकस्य तस्यान्याधीन-प्राणनत्वासंभवात्। स्वधाशब्दस्य चात्र प्रयोगदर्शनमात्रेण लक्ष्मीविषयत्वकल्पनादपि स्वस्मिन् धीयत इति व्युत्पत्त्या स्वसत्ताविषयत्वस्य कल्पयितुं युक्तत्वात्। स्वकीयं विश्वधारणसामर्थ्यमेव वा स्वधा। तथा * श्रेष्ठश्चेत्यधिकरणे **भाष्यम्**—* आनीदवातमिति तु न जैवं श्रेष्ठं प्राणनमभिप्रेत्योच्यते। अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्व-मुच्यत इति। अत्रानन्याधीनसत्ताकत्वमेव ह्यभिप्रेतम्। अस्तु वा स्वधयेति पदं लक्ष्मीविषयम्। तथाऽपि सहयोग-विवक्षैवात्र युक्ता। यथा **महाभारते**—* कृत्वा मत्स्यानि भूतानि चराणि स्थावराणि च। एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम ॥ इति। ननु * ततो भूयो जगत्सृष्टिं करिष्यामीह विद्ययेति वाक्यशेषेणौचित्यात्तत्र विद्याशब्दः प्रकृतिविषयस्स्यात्। भवत्वेवम्। तथाऽपि प्रस्तुतसहोक्तिमात्रसंभवोदाहरणमिदं युज्यत एव। यद्वा * नेनेयं सच धर्मात्मा मुहूर्तमपि जीवति इतिवत् स्वधया आनीदिति प्रेमपारतन्त्र्ये तात्पर्यम्। अथ स्यात् * मेधा श्रद्धा सरस्वती * अहं श्रद्धा च मेधा च इति स्मृत्युपबृंहितया * श्रद्धया देवो देवत्वमश्नुते, इति श्रुत्या पत्न्यधीनोत्कर्षत्वं परस्य

देवस्य प्रतीयते इति । तदपि न चोद्यम् । स्वतस्सिद्धातिशयस्य भास्करस्य प्रभान्वयेनेव * श्रियः श्रीश्च भवेदित्युक्तस्य भगवतस्स्वपत्न्याऽप्यतिशयान्तरे दोषाभावात् । अभिरूप एवाभरणेनापि द्योतमानत्वमश्नुत इत्यादिष्विवायोगव्यवच्छेदमात्रेणाप्यर्थोपपत्तौ बहुप्रमाणविरुद्धस्यान्ययोगव्यवच्छेदस्य कल्पयितुमयुक्तत्वात् । देवत्वं च निष्कृष्यमाणं देवनसंबन्ध एव, * कृत्तद्धितसमासेषु संबन्धाभिधानं त्वतलाविति शाब्दोक्तेः । तच्च देवनं विहरणादिरूपं स्वत्नलमासहितस्यैव परस्य देवस्य भवतीति सुस्थोऽयं पन्थाः । आहुश्च * यस्या वीक्ष्य मुखम् * अङ्गीकारिभिरालोकैः * क्रीडसि श्रीसमक्षमित्यादि । एवमाप्तप्रणीतान्यन्यान्यपि कानिचित् स्तुतिवाक्यानि प्रमाणानां स्ववाक्यान्तराणां चाविरोधेन स्थाप्यानि । यानि च **ब्राह्मे** पुराणे * सर्वातिशायिनी प्रीतिः * सर्वोत्कृष्टा सर्वमयी, * अनौपम्या निर्विकल्पा इत्यादीनि लक्ष्मीनामानि तान्यपि * न तत्समश्चाभ्यधिकश्च दृश्यते * यस्मात्परं नापरमस्ति किञ्चित्, * तमीश्वराणां परमं महेश्वरम्, * क्षरात्मानावीशते देव एकः, * एक इद्राजा जगतो बभूव, * शास्ता चराचरस्यैकः, * एकः शास्ता न द्वितीयोऽस्ति शास्ता, * शास्ता विष्णुरशेषस्य, इत्यादिप्रमाणगणानुसारेण भगवद्व्यतिरिक्तसर्वापेक्षया तन्महिष्याः प्रकर्षं विवक्षन्ति । तथा सति * शक्तिश्च कस्य नाधिकेति तत्रत्योक्तिरपि संगच्छते । शक्तिशब्दोऽपि ह्यत्र विहाराख्यकार्योपयुक्तविशेषणत्वाभिप्रायः पत्नीविषय एव ।

**अत्यन्तसाम्यमप्यस्यां दृष्टान्तस्वरसागतम् । स्थाप्यं नियतनिर्बाधपत्नीत्वाद्यविरोधतः ॥**

अत्र * तस्य शक्तिद्वयं तादृग्गर्मिश्च भिन्नलक्षणमिति **सात्वतोक्तं** देव्यास्तादृक्त्वमपि श्रुतिस्मृतिपूर्वापरादिप्रसिद्धपत्नीत्वाद्यनुगुणं योज्यम् । किञ्च यथा मुक्तस्य भगवता परमसाम्ये श्रुतिस्मृत्यादिसिद्धेऽपि * जगद्व्यापारवर्जमिति लक्षणभूतैराकारैर्वैषम्यं स्थाप्यते, तथेहापि भवति । * भिन्नलक्षणमिति च तत्रैवोक्तम् । आहुश्च * पितेव त्वत्प्रेयानित्यारभ्य * माता तदसि न इति । एवमनभ्युपगमे तां पुरस्कृत्य भगवदभिगमनमपि तत्रतत्रोक्तं दुश्शकं स्यात् ।

**अस्ति कर्मार्हफलदे पत्यौ कृत्यद्वयं श्रियः । निग्रहाद्वारणं काले सन्धुक्षणमनुग्रहे ॥**

उक्तं च **श्रीविष्णुचित्तैः** गद्यव्याख्यानारम्भे * मातृत्वैकरूपां श्रियं प्रपद्यते । माता हि हितादपि पुत्रस्य प्रियमेव पश्यति, पिता तूभयं पश्यति ; अतो दण्डधरत्वहीनतैवावलम्बनमस्यां दशायामासीदिति । अत्र वरदगुरूपदेशानुसारिभिः **व्यासार्यैश्चो**क्तम् * प्रतापोष्मलपितृत्वदुरासदभगवत्समाश्रयणसिद्धये पुरुषकारानुप्रविष्टवात्सल्यनिर्भरलक्ष्मीसमाश्रयणं श्रीमच्छब्दविवरणमुखेनाभिधीयत इति । नन्वस्या दण्डधरत्वाभावे * दैत्यदानवमर्दिनीत्यादिनामानि न घटेरन् । मैवम् ; * सीतायास्तेजसा दग्धां रामकोपप्रपीडितामित्यादिष्विव कोपस्य पतिसंश्रयत्वेऽप्यस्यास्तदनुमतिमहिम्नाऽपि दैत्यनिरासादिसिद्धेः । स्वासाधारणविभूतिविशेषद्वारा वा तदुपपत्तिः । तदभिप्रायेण हि पुराणेषु * सौम्यासौम्यैर्जगद्रूपैरित्याद्युच्यते ।

**यत्किञ्चिदपि वैषम्यं यदि नामात्र नेष्यते । तयोर्देहव्यवस्थाऽपि न सिध्येत्सर्वसंमता ॥**

**अव्यवस्थितिपक्षस्तु हेतुपक्षोऽयमित्यपि । अश्रुतत्वादिहानुक्तेर्दूषणं वाऽपि नार्हति ॥**

**न हि सिद्धे विकल्पस्स्यान्न संदेहोऽत्र निश्चयात् । न कालाद्यैर्विपर्यासस्तन्नित्यत्वादिसाधनात् ॥ २ ॥**

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ ३

एवं स्तुत्याक्षेपसमाधानव्याजेन स्वामित्वमौलभ्यादिकं प्रतिपाद्य स्तोतुमुपक्रान्तम्सर्वाश्रयणोयत्वाय सकलपुरुषार्थहेतुत्वमुदाहरणविशेषार्थान्तरन्यासाभ्यामुपपादयति - **ईषदिति** ॥ एतदनुग्रहैकदेशोऽपि अनन्तानिष्टनिवृत्तेरनन्ताभ्युदयसिद्धेश्च निदानमिति व्यञ्जयितुमीषच्छब्द । त्वच्छब्देन ' प्रणिपातप्रसन्ना हि ' क्षिप्रप्रसादिनीं देवीमित्यादिषूक्तस्स्वभावस्सूच्यते । सामान्यतश्च तदनुग्रहस्य सदातनत्वमुक्तं **मङ्कणसंहितायाम्** ' पद्मे स्थिता पद्मवर्णा पद्मनाभप्रिया शुभा । सदाऽनुग्रहसंपन्ना सा मे देवी प्रसीदतु ॥ इति । अष्टोत्तरनामस्तोत्रे च ' नमामि कमलां क्षान्तिं क्षमां क्षीरोदसंभवाम् । अनुग्रहपरामृद्धिमनघां हरिवल्लभाम् ॥ इति । अनिष्टनिवर्तनेष्टप्रापणानुगुणकरुणाहेतुकं निरीक्षणं करुणानिरीक्षणम् । करुणया विषयीकरणं वा निरीक्षणशब्देनोपचर्यते । तदिदमुक्तं तत्संहितायाम् * सामर्ग्यजुर्मयीं देवीं वेदगर्भां मनस्विनीम् । लोकेशेशानिमुखानां कारणं यन्निरीक्षणम् ॥ इति । तस्य विश्वसञ्जीवनतया सुधात्वरूपणम् । तया सन्धुक्षणं सम्यगुल्लासनम् । अत्र पञ्चम्युक्तं हेतुत्वं तु उदयापेक्षया रक्षणापेक्षया च योज्यम् । रक्ष्यते - निरुपद्रवमवस्थाप्यते । प्राक् - त्वदुपेक्षाकाले, तदलाभतः त्वन्निरीक्षणालाभतः, न तु त्वत्कोपतः, * कः कुप्येद्वानरोत्तमेत्यादि वदन्त्यास्तव कोपासंभवात् । त्रिभुवनशब्देन त्रैलोक्यान्तर्वर्तिनः क्षेत्रज्ञा लक्ष्यन्ते । संप्रति * ततोऽवलोकिता देवा इत्याद्युक्तायां त्वन्निरीक्षणदशायाम् । अनन्तोदयं पूर्वकालादप्यतिशयिताभ्युदयमित्यर्थः । उक्तं ह्येतत्सर्वमिन्द्रेण * त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥ इति । अत्र प्रलयादिकं विवक्षितमिति केचित् । एवमन्वयव्यतिरेकाभ्यामेतत्कटाक्षाधीनं देवादीनामैश्वर्यमिति दर्शितम् । यथाऽऽह **काश्यपः** * ब्रह्माद्याश्च सुरास्सर्वे मुनयश्च तपोधनाः । एधन्ते त्वत्पदच्छायामाश्रित्य कमलेश्वरि ॥ इति । **मङ्कणसंहितायाम्**अष्टानामपि लोकपालानां तत्पूजानिरतत्वं तद्दत्तवैभवत्वं च प्रपञ्चितं द्रष्टव्यम् । उक्तसमर्थनव्याजेन सर्वपुरुषार्थानां तत्प्रसादाधीनत्वमाह - **श्रेय** इति । अत्र त्वत्प्रसादादिति वक्तव्ये अरविन्दलोचनमनःकान्ताप्रसादादिति कथनं तथाविधप्रसिद्धिप्रकर्षद्योतनार्थम् । अरविन्दलोचनशब्देन * यं पश्येन्मधुसूदन इत्याद्यभिप्रेतं श्रीपतेरप्यनुग्रहशीलत्वं सूच्यते । तन्मनःकान्तात्वोक्तिः सर्वापेक्षितदाने तयोस्समानाभिप्रायत्वं व्यनक्ति । अत्र मनश्शब्दो बुद्धावुपचरितः, भगवतः करणायत्तज्ञानत्वाभावात् । मनःकान्ता-अभिमतेत्यर्थः । पूर्वं कान्तस्त्वं इत्युक्तम्, अत्र तु इयं भगवतः कान्तेति । एतेन परस्परानुकूलतया सर्वत्र व्यापारे सामरस्यं व्यज्यते । प्रसादात् - कृपाविशेषादिति यावत्, अस्याः क्वचिदपि निग्रहासंभवेन तन्निवृत्तिरूपप्रसादायोगात् । संसृतिशब्द इह पुरुषार्थसमभिव्याहारात्पारिशेष्याच्चैश्वर्यपरः । तेन त्रिवर्गान्तर्भूतं सर्वमभिमतमपि विवक्षितम् । अक्षरशब्दस्तु प्रत्यगात्मानुभवपरः । वैष्णवाध्वशब्देन गतिविशेषद्वारा भगवत्प्राप्तिर्लक्ष्यते । एतेषु **श्रेयः**—श्रेष्ठं सुखं तत्साधनं वा । * पुण्यश्रेयसी सुकृतं वृष इति हि पठन्ति । **नृणा**मिति सर्वक्षेत्रज्ञोपलक्षणम् । हिरण्यगर्भस्यापि **ब्राह्मे पुराणे** तदधीनैश्वर्यत्वमुक्तम् * पद्मयोनिरिदं प्राप्य पठन् स्तोत्रं ततः क्रमात् । दिव्यं चाष्टगुणैश्वर्यं तत्प्रसादाच्च लब्धवान् ॥ इति ॥

ब्रह्मादीनां यदायत्तं वैभवं यस्य सा स्वयम्। तस्य कैमुत्यनिर्णेयमीश्वरत्वं श्रियःपतेः॥

एतत्प्रसादादृते नृणां श्रेयो हि न संभाव्यत इति व्यतिरेकोक्त्याऽग्नीन्द्रादिप्रयुक्तमपि नृणां श्रेयः एतदधीनमिति व्यज्यते। **हि**शब्देन श्रीसूक्तश्रीस्तुत्यादिषु सर्वशास्त्रेषु च प्रसिद्धिर्द्योत्यते। **न संभाव्यते**-न सिध्यतीत्यर्थः। ईदृशस्यास्याः प्रसादस्येन्द्रादीनामिव कालभेदभेद्यत्वं च नास्तीति व्यञ्जनाय कर्हिचिदित्युक्तम्। ननु मोक्षप्रदत्वं भगवत एवेति सर्वत्र स्थापितम्। **श्रीसात्वते** च स्वस्य मोक्षप्रदत्वं देवानामैश्वर्यप्रदत्वं च विभज्योक्तम्। तदत्र संसृत्यक्षर वैष्णवाध्वस्विति अविशेषवचनं प्रशंसामात्रपरं स्यात्। मैवम्। **श्रीसात्वत** एव * यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम्। निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणा ॥ इति बन्धहेतुभूतगुणोदधिनिस्तरणकारणत्वेन लक्ष्मीसमाश्रयणस्य प्रतिपादनात्। उक्तं च स्वयंभुवा * सर्वकामप्रदां रम्यां संसारार्णवतारिणीम्। क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेत् ॥ इति। **ब्राह्मे च पुराणे** तन्नामान्येवं पठ्यन्ते * सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी, * भवभङ्गापहारिणी, * परनिर्वाणदायिनी, * ज्योतिष्मत्यमृतावहेत्यादीनि। **वैष्णवे** च * आत्मविद्या च देवि त्वं विमुक्तिफलदायिनीति। अत्र विमुक्तिफलदायित्वस्यात्मविद्याविशेषणत्वेऽपि तादृशविद्यायास्तदधीनत्वोक्त्या प्रकृतसिद्धिः। मोक्षहेतुभूतात्मगुणसिद्धिश्च तदधीनेति तत्रतत्रोक्तम्। एवं स्थिते गद्यारम्भोक्तन्यायेन मोक्षोपायतदधिकारयोस्तावदेतन्मूलत्वं दुरपह्नवम्। मोक्षप्रदे भगवति मुमुक्षूणां घटकतयैषा तिष्ठतीति च सर्वसम्मतम्। परिपूर्णानुभवप्रदानसङ्कल्पस्तु भगवतस्स्वस्यैव वा सपत्नीकस्य वेति यथाप्रमाणं भवतु। सर्वथा वैष्णवाध्वश्रेयःप्रदत्वमस्या इहोच्यमानं न विरुद्धमिति ॥ ३ ॥

शान्तानन्तमहाविभूति परमं यद्ब्रह्म रूपं हरे-
मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि ता-
न्याहुस्स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४

एवं श्लोकत्रयोक्तायास्सहधर्मचारिण्या भगवतस्स्वरूपविग्रहावतारेष्वयोगव्यवच्छेदं वदन्नस्या अपि तद्वत्प्रधानप्राप्यत्वं सूचयति **शान्तेति** ॥ **शान्तम्** - अशनायाद्यूर्मिभिरपक्षयादिविकारैश्च नित्यानन्वितमिति भावः। **अनन्तम्** - त्रिविधपरिच्छेदरहितम्। महत्यौ शुद्धाशुद्धे विभूती यस्य तन्महाविभूति। परमं - सर्वोत्कृष्टम्। यच्छब्दः सर्वोपनिषत्प्रसिद्धिं सूचयति। ब्रह्म - निरतिशयबृहत्त्वबृंहणत्वयुक्तं रूपं, स्वरूपमित्यर्थः। अत एव व्यतिरेकविभक्तिश्चात्र घटते। हरेः - आश्रितदोषहारिणस्सर्वेश्वरस्य, यद्वा सर्वसंहर्तुः, यथोक्तं पुराणे * ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। निगृह्य हरते यस्मात्तस्माद्धरिरितीर्यते ॥ इति। एतच्चतुर्विधप्रलयकर्तृत्वोपलक्षणम्। उक्तस्वरूपानुरूपं * मूर्तं ब्रह्म महाभागेत्यादिप्रसिद्धं सालम्बनयोगविषयभूतं दिव्यविग्रहमाह - **मूर्त**मिति। मूर्तं - स्पर्शरूपादियुक्तं परमपदपर्यङ्कादिदेशपरिच्छिन्नं चेत्यर्थः। अत्र ब्रह्मशब्देन दिव्यविग्रहस्यातिमहत्त्वं स्वसंश्रितानां धीविकासहेतुत्वं च विवक्षितम्। ततोऽपि * आनन्दो ब्रह्म इत्याद्याम्नातात्स्वरूपादपि तत्प्रियतरं तस्य निरतिशयानन्दस्य भगवतस्स्वरूपादपि सौन्दर्यादिगुणयोगादतिशयेन प्रीतिविषयभूतम्। तदिति व्यस्तं वा, प्रसिद्ध्यतिशयद्योतनार्थं यत्तदित्यन्वेतव्यम्। रूपशब्द इह दिव्यविग्रहपरः। यच्छब्देन श्रुतिषु भगवच्छास्त्रादिषु च नित्यत्वादिविशिष्टतया प्रसिद्धिस्सूच्यते। **अत्यद्भुतं** - सन्निवेशगुणविहारप्रभावादिभिरतिविस्मयावहम्। एवमादिमं रूपमुक्तम्। अथ तद्विजृम्भितानि व्यूहव्यूहान्तरविभव-

विभवान्तरादीन्याह - **यान्यन्यानीति** । यच्छब्द इहावताररहस्यप्रकरणादिप्रसिद्धिपरः । बहुवचनेन * पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः इत्याद्युक्तं भूयस्त्वं विवक्षितम् । अन्यानि - पररूपात्तदंशतया सन्निवेशवर्णादिभिश्च विलक्षणानि । यथासुखं - मनुष्यादिसजातीयावतारदशायामप्यस्य स्वाभाविकसुखादिनिवृत्तिर्दुःखं वा नास्तीति भावः । विहरत इत्यनेनावताररूपाणां स्वेच्छामात्रहेतुकत्वं क्रीडार्थत्वं च गम्यते । तेन कर्मादिमूलत्वादिशङ्का निरस्ता । एतेषु स्वरूपादिषु किञ्चिदपि श्रियाऽनन्वितं नास्तीति द्योतनाय सर्वाणि तानीत्युक्तम् । आहुः—श्रुतिस्मृत्यादीनि, तद्विदो वा [illegible] । स्वैः तवासाधारणैः, अनुरूपरूपविभवैः - अनुरूपाणां रूपाणां सम्पद्भिः । रूपाण्येव वा विभवः, प्रभूतानुकूल्यैरनुरूपरूपैरिति यावत् । रूपशब्द इहापि पूर्ववत्स्वरूपादित्रिकविषयः । [illegible] यथा [illegible] । अनुरूपत्वं च संबन्धे सति प्रकृष्टं सादृश्यम् । रत्नकाञ्चनादिन्यायेन स्वसम्बन्धिनि शोभातिशयहेतुत्वं वा । [illegible] * मद्धर्मधर्मिणी नित्यम् * नित्यैवैषा जगन्माता * देवत्वे देवदेहेयमित्यादिभिरभिहितम् । भगवच्छास्त्रे त्वस्य विस्तरः । गाढोपगूढानि-दृढसंबद्धानि वियोगानर्हाणीत्यर्थः । एतेन नञ्चियागशिष्टन्यायस्सूचितः । अपराधभीतानां भगवतस्सर्वदा शरण्यत्वार्थं प्राप्तिदशायां शर्करान्वितदुग्धन्यायेन निरतिशयभोग्यत्वार्थं च सर्वप्रकारेण श्रिया गाढोपगूढत्वोक्तिः । निरतिशयभोग्यस्यापि तादृशभोग्यान्तरोपश्लेषेणापि भोग्यत्वमविरुद्धम् । ते भगवदभिमतस्वरूपरूपादिभेदवद् इति भावः । अस्त्वेवं भगवत्स्वरूपरूपादिषु तत्तदनुरूपाकारैरस्यास्संबन्धः, क्वचित् * सर्वभूतस्थिता द्विज * यथा सर्वगतो विष्णुरित्यादिकं वचनमन्यत्र प्रशस्तपदार्थमात्रवासित्ववचनं च कथं घटेतामिति चेदत्र ब्रूमः—

> **शुभैकवासवचसां सर्वगत्वगिरामपि । अभिमानविशेषाद्यैर्विषयस्स्याद्व्यवस्थितः ॥**
> **व्यापिनी सर्वगेत्याद्यास्सुसूक्ष्मेत्यादयस्तथा । श्रीसमाख्या मिथो वैरं जह्युस्तात्पर्यभेदतः ॥**
> **शक्तिकालवशादस्या विभुत्वाद्युपपादकाः । प्रच्छन्नस्पष्टजैनाध्वनिरोधादगतीकृताः ॥**

एवं किल ते वदन्ति यथा विभुस्वभावस्येश्वरस्याघटितघटनासामर्थ्यादणुत्वम् , तथाऽणुस्वभावाया एव तस्या विभुत्वमिति । तत्र दृष्टान्तस्तावदयुक्तः । उपाध्यवच्छेदमात्रेण ह्यणुत्वमीश्वरेऽङ्गीक्रियते न तु स्वरूपतः । यदि चाघटितघटनाशक्त्याऽत्र विरुद्धद्वयसंभवः, तदा सर्वाद्वैतभेदाभेदपक्षाभ्यां किमपराद्धम् ? अथोच्येत - अणुस्वभावत्वेऽपि विकासकशक्त्याऽस्याः कदाचिद्विभुत्वमविरुद्धमिति, तथा सति समानन्यायतया सर्वेषामात्मनां स्वरूपविकासस्वीकारे विरोधो न स्यात् * न च पर्यायादप्यविरोधो विकारादिभ्य इति जैनप्रतिक्षेपसूत्रमप्यपार्थकं स्यात् । ननु च * का चाऽन्या त्वामृते देवि इत्यादिन्यायेन भगवद्भिन्ननिखिलसित्वमनन्तगरुडादिव्यनित्यभगवदिच्छानियमिताधिकारविशेषसिद्धतया श्रियस्स्तुतये भवतु, भगवत्स्वरूपे तु गाढसंबन्ध उच्यमानः [illegible] स्तुत्यै स्यात् । तत्र यद्यनुरूपत्वोक्त्या स्तुतिसिद्धिरभिप्रेता, तदा किं तदनुरूपत्वम् ? अणुत्वेन वैषम्येऽपि स्वतन्त्रशेषिणं प्रति पारतन्त्र्यशेषत्वाभ्यां विभूतित्वेनातिशयावहत्वमिति चेत्तदपि सर्वचिदचित्समानम् । न चानादिसर्वज्ञत्वादिसाम्यमिहानुरूप्यं, तस्यापि नित्यसूरिसाधारणतया तान्प्रति शेषित्वेनोक्तायास्तस्यास्तेन स्तुत्यनुपपत्तेः । अन्यथा द्रव्यत्वचेतनत्वादिभिरपि स्तोतव्यत्वप्रसङ्गात् । अथ * त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरमित्यादिवचनस्वारस्यावगताद्विभुत्वादनुरूपत्वं विवक्ष्यते, तदप्ययुक्तम् , जीवेश्वरकोटिविकल्पानुपपत्तेः । जीवत्वं ह्यणुत्वव्याप्तम् , क्वचिज्जीवे तन्निवृत्तावतिप्रसङ्गः ।

* यथा सर्वगतो विष्णुः इत्यादिव्याप्तिवचनं * सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि ! पूरितमित्युक्तसङ्घातविग्रहसंबन्धाभिप्रायं स्यात् । ईश्वरत्वे तु भगवतोऽन्यत्वे तस्य समाधिकदरिद्रत्वश्रुतिविरोध । तदनन्यत्वे दम्पतित्वाद्यनुपपत्तिः । आनुरूप्यवचनं चानर्थकं स्यात् । इमौ चात्यन्तसाम्यस्वरूपैक्यपक्षौ पूर्वमपि निरस्तौ । अत्र भेदाभेदकाल्पनिकभेदाभेदपक्षौ च प्रामाणिकैः प्रतिक्षिप्ताविति । अत्रोच्यते —यत्तावदुक्तमितरसाधारणैराकारैस्स्तुत्यनुपपत्तिरिति, तदसत्, व्यावर्त्यान्तिरवत्त्वे प्रयोजनविशेषवत्त्वे च सत्यनेकसाधारणैरपि कैश्चित् स्तुत्युपपत्तेः । स्तूयते हि सर्वेश्वरोऽपि नित्यमुक्तसाधारणैराकारैस्सर्वज्ञत्वादिभिः । यत्तु विभुत्वे जीवेश्वरकोटिविकल्पानुपपत्तिरिति, तत्र केचिदेवं परिहरन्ति - जीवत्वेऽप्यस्या विभुत्वं न विरुध्यते, जीवविषयाणुत्वश्रुतिर्हि न सर्वजीवव्यापिनी, नतत्प्रकरणसन्निहितेषु बद्धेष्वेव तत्प्रवृत्तेः, * वालाग्रेत्यादौ तु * स चानन्त्याय कल्पत इति मुक्तविषयो वाक्यशेषः आत्मनां निर्विकारत्वस्थापनाद्धर्मभूतज्ञानद्वारा व्याप्तिमभिसन्धत्ते । एवम् * सर्वमेवाविशन्नीत्यादीनि वाक्यान्तराण्यपि । एतच्च * प्रदीपवदावेश इत्यादिसूत्रे प्रदर्शितम् । नित्येषु च संप्रतिपन्नजीवसाजात्यागतस्याणुत्वस्य बाधकश्रुत्यभावादनुग्राहकसद्भावाच्च स्वीकारः । लक्ष्म्यास्तु तथैव प्राप्तस्याणुत्वस्यानन्यथासिद्धव्यापित्ववचनं बाधकम् । न च सर्वगतादिशब्दानां सार्वत्रिकावतारसर्वशेषित्वादिप्रतिपादकत्वं कल्प्यम्; यथाश्रुतस्वीकारे विरोधाभावात् । नापि मुक्तवद्धर्मभूतज्ञानद्वारा व्याप्तिकल्पनं युक्तम्; तद्वत् बाधकश्रुत्याद्यभावात् । विभुद्वयासंभव इह बाधक इति चेन्न, कालतत्त्वे नित्यमुक्तेश्वराणां धर्मभूतज्ञाने च विभुत्वस्वीकारात् । जीवलक्षणमपि परतन्त्रचेतनत्वमात्रम्, अणुचेतनत्वं त्वेतद्व्यतिरिक्तजीवविषयम् । अथवा जीवलक्षणेऽणुशब्दः परिच्छिन्नमात्रपरस्सन् अमुष्यां भगवत्पराधीनायां स्वातन्त्र्यगुणपरिच्छेदेन वर्तताम् । एवं च जन्माद्यधिकरणे **भाष्यम्***अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ता इति । अत्र ह्यन्येषां नित्यानां स्वरूपतो गुणतश्च सातिशयत्वेन व्यावृत्तत्वं, लक्ष्म्यास्तु स्वरूपतो निरतिशयत्वेऽपि पारतन्त्र्यादियोगात् गुणतस्सातिशयतया व्यावृत्तता युज्यते । तथा च जगत्कारणत्वलक्षणेऽपि व्यापारतस्सातिशयत्वाद्व्यावृत्तत्वम् । अतो जीवत्वेऽप्यस्यास्स्वरूपविभुत्वेन पतिस्वरूपानुरूप्यमिति । अपरे त्वस्याश्चेतनत्वात् अचिदन्यत्वं विभुत्वाज्जीवान्यत्वं पारतन्त्र्यादीश्वरान्यत्वं च । न हि सदसद्विलक्षणादिष्विवात्र विरोधः, जीवेश्वररूपेण विविधात्मविभागवचनेषु त्वस्या अनुक्तिरविवक्षामात्रात् । वस्तुतस्तु पतिपुत्रव्यावृत्तपत्नीन्यायेन लक्ष्म्याः कोट्यन्तरत्वम्, तत्र लक्ष्म्या अपि सत्ता भगवदधीना, भगवतस्तु वैभवं रत्नप्रभापुष्पपरिमलन्यायेन लक्ष्म्यायत्तम् । अतोऽत्रापि पतिस्वरूपानुरूप्यं पत्नीस्वरूपस्य सुगममिति । अन्ये तु स्वरूपस्थितिरेवमस्तु, तथापि सेयमीश्वरकोटिः, विभूतिद्वयशेषित्वादिमात्रेण तल्लक्षणसिद्धेः । तत्र सर्वशेषित्वादिकं भगवतः । अस्यास्तु तदितरसर्वशेषित्वादिकमिति विभागः । अनुरूपत्वं तु पूर्ववदेव, जगत्कारणत्वादिब्रह्मलक्षणं तु पतिमात्रगोचरम् । अत एव तस्य सर्वेश्वरत्वं समाधिकदरिद्रत्वं चेति । तदिदं पक्षत्रयमन्योन्यमनतिविप्रकृष्टम् । जीवादिसमाख्यानिवेशे तु मिथो विवादः ॥

**प्रागुक्तेन सहैतेषु पक्षेष्वत्र चतुर्ष्वपि । स्वतन्त्रपतिनित्येच्छासिद्धं सर्वमिदं श्रियः ॥**
**अपि चैवं न तस्येशे कश्चनेत्यादिदर्शनात् । अतश्चतुर्भिरप्येतैः पत्यावैश्वर्यविश्रमः ।**

अत एव नरसम्बधिनो नारा इति नरशब्दार्थत्वेऽप्यस्याः पतिवत्तदिच्छाधत्त प्रधानप्राप्यत्वादिकमविरुद्धम्। आकारसाम्येऽपि क्वचिद्व्यापारो भिद्यते। सर्वकर्तुर्वल्लभाप्रीत्युद्देशेन तत्तल्लीलाप्रवृत्तेस्तस्या अपि तदन्वयोक्तिरविरुद्धा। सहात्वेऽपि कार्ये लौकिकपतिन्यायेन पतिप्राधान्यव्यपदेशः पतिकर्तृकत्वमात्रव्यपदेशश्चोपपन्नः। पतिबुद्ध्यधीनस्यापि पत्न्या गुणभावस्योभयेच्छासिद्धत्वव्यपदेशस्तस्या अपि तथैवेष्टत्वाविशेषादुपपद्यत इति गमनिकेति। अत्र सर्वभूतेश्वरत्वादिवचनसाम्यादस्या गुणभाव उभयेच्छाप्रयुक्त इति केचिदाहुः॥

**अन्योन्येच्छाविघातादिनिवृत्तौ तत्परत्वतः। ऐककण्ठ्यमशेषाणामागमानां भवत्विति॥**
**पञ्चस्वेतेषु पक्षेषु कश्चिदेकः प्रमाणवान्। सलक्ष्मीकस्य साम्राज्यं सर्वथा सुप्रतिष्ठितम्॥**
**इहैवं क्वचिदंशे तु संशयेऽपि विपश्चिताम्। उपयुक्तांशवैशद्यादुपायफलसंभवः॥**
**अत्र स्वामित्वसौलभ्यफलदत्वफलत्वतः। आनुरूप्येण संबन्धः श्रीपतौ दर्शितश्श्रियः॥**

अपि चात्र द्वयार्थमनुसन्धित्सता श्रीशब्दनिरुक्तयश्च तत्रतत्र सूचिता। मन्त्वर्थस्तु नित्ययोगस्वरूपरूपादिसर्वविषयतया चतुर्थश्लोके व्यञ्जित। नारायणशब्दार्थोऽपि * कान्तस्ते पुरुषोत्तम, * शान्तानन्तमहाविभूती त्यादिभिस्संग्रहेणोक्तः। चरणशब्दोपलक्षितविग्रहयोगोऽपि * मूर्तं ब्रह्मेत्यादिना प्रदर्शित ॥

**एवं सङ्क्षिप्तसिद्धांशविशदीकारपूर्वकम्। साध्यं प्राप्यमुपायं च स्तोत्रे संदर्शयिष्यति॥**
**कविकथकसिंह इत्थं त्रय्यन्ताचार्य इत्यभिख्यातः। व्यवृणुत यामुनविहितां रमास्तुतिं वेङ्कटेशकविः॥**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु रहस्यरक्षायां चतुश्श्लोक्यधिकार ॥
श्रीचतुश्श्लोकीभाष्यं समाप्तम्

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# श्रीमद्वेदान्तदेशिकग्रन्थमाला

## रहस्यरक्षायां द्वितीयोऽधिकारः

# ॥ स्तोत्ररत्नभाष्यम् ॥



स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् । स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ॥

नमो नमो यामुनाय यामुनाय नमो नमः । नमो नमो यामुनाय यामुनाय नमो नमः ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रीमद्यामुनमुनिना नाथसहायेन नाथवानस्मि । यद्वदनचन्द्रजनिता स्तोत्रसुधा भवति सुमनसां भोग्या ॥

प्राप्यप्रापकभूते भगवति यामुनमुनेरयं प्रसृतः । दुरितानि हरति जगतां द्वयानुसन्धानसिन्धुपरिवाहः ॥

विमलममृतोल्बणरसं विगाह्य निर्विशति वेङ्कटेशकविः । यदुपतिचरणार्हमिदं यमुनातीर्थमिव यामुनं स्तोत्रम् ॥

यद्यप्यत्र न संदृष्टं परार्थप्रतिपादनम् । तथाऽपि तादृग्रूपत्वं परसङ्कल्पतः स्थितम् ॥

स्तोत्ररत्नमिदं न्यस्तमाचार्यस्तुतिसम्पुटे । निधानमिव निस्सीमं निर्विशन्ति विपश्चितः ॥

मङ्गलाचरणत्वेन ख्याता गुरुनमस्कृतिः । स्मृत्याचारानुसारेण स्तोत्रारम्भे विधीयते ॥

नमस्कारोऽत्र विज्ञेयः प्रणिपातपुरस्सरः । आचार्यादन्यतो ज्ञेया या केवलनमस्क्रिया ॥

प्रमाणमिह विज्ञेयं मैत्रेयाचरणं सताम् । * मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ॥ इति ।

प्रणिपातश्च साष्टाङ्गप्रणामः । प्रणामलक्षणं च भाष्यकारैरेव नित्यानुष्ठानलक्षणसंग्रहे प्रदर्शितम् * मनोबुद्ध्यभिमानेन सह न्यस्य धरातले । कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥ इति । नित्यानुष्ठानाधिकारिणः परमैकान्तिनो भगवत्कैङ्कर्यैकरतित्वात्प्रपन्नाधिकारिण एव, उपासकानामुपायभक्तावप्येतदनुष्ठानमुपयुज्यत इति विभागः ॥

तत्रेदमागतं स्वस्य सदाचार्यैक्षणादिकम् । यत्संबन्धादमुं नाथमुनिं प्रणमति त्रिभिः ॥

उक्तं च * आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसञ्जिघृक्षेदाचार्यम् । प्रतिषेधेदितरो लुप्यते पूजा चास्य सकाशे इति प्राचार्यवन्दनप्राधान्यम् । अत्र पुनः स्वाचार्यवन्दनप्रसङ्गे तत्सन्निधौ स्वाचार्यैर्निषेधादेव स्वाचार्यवन्दनश्लोकनिर्माणाभाव इति सुसङ्गतमेतत् ॥

भगवद्भक्तितत्स्नेहौ लोकानुग्रह इत्यमी । प्राधान्येन प्रकाश्यन्ते तत्स्वभावास्त्रिषु क्रमात् ॥
वैराग्यपरभक्त्यादेस्तत्त्वज्ञानं प्रसाधकम् । इति ज्ञापयितुं तस्य त्रिषु पद्येषु संग्रहः ॥
तत्रापि पर्वभेदेन ज्ञानभक्त्योः परस्परम् । हेतुकार्यत्वयोर्ज्ञप्त्यै द्विधाऽत्र स्थापितः क्रमः ॥
गुरोर्ज्ञानादिसंपत्तिस्तस्यास्सर्वातिशायिता । लोकोपकारिताऽप्युक्तेत्यतो न पुनरुक्तता ॥
करणत्रयसंबन्धप्रतिबन्धप्रशान्तये । त्रिवारं मङ्गलाचार इति केचित्प्रचक्षते ॥
अन्ये मङ्गलभूयस्त्वसिद्ध्यै मङ्गलकर्मणाम् । क्रियासमभिहारोऽयमिति साफल्यमभ्यधुः ॥
इत्थमेवं विभाव्यं तदुभयं भव्यसिद्धये । पराशरनमस्कारो वकुलाभरणानतिः ॥

सर्वाण्येतानि भागवतवन्दनानि भगवद्वन्दननान्तरीयकतयाऽनुष्ठीयन्ते । कृत्स्नस्यापि प्रबन्धनिर्माणस्य भगवदभिवन्दनरूपत्वादिति ॥

भगवद्वन्दनं स्वाद्यं गुरुवन्दनपूर्वकम् । क्षीरं शर्करया युक्तं स्वदते हि विशेषतः ॥

**॥ श्रीभगवद्यामुनमुनिभिरनुगृहीतं स्तोत्ररत्नम् ॥**

**नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये ।**
**नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥** १

इह तावत् * आचार्यदेवो भव इति तैत्तिरीयाः । * आचार्यवान् पुरुषो वेद इति छन्दोगाः । * यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति कठाः । रहस्याम्नाये तु * यथा भगवत्येवं वक्तरि भक्तिः इति । अमानित्वादीन् सम्यग्ज्ञानहेतून् प्रक्रम्य गीयते च * आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः इति । आचार्यप्रसादस्य च सर्वसिद्धिहेतुत्वं बोधायनीये पुराणसारसमुच्चये प्रोक्तम् * देवताया गुरोश्चापि मन्त्रस्यापि प्रकीर्तनात् । ऐहिकामुष्मिकी सिद्धिर्द्विजस्यास्ते न संशयः ॥ इति । सिद्धिरिह ज्ञानादिनित्यानन्दलाभः । उक्तं हि जयाख्यसंहितायाम् * यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना ॥ तस्माद्भक्तिर्गुरौ कार्या संसारभयभीरुणा ॥ इति । एवं * देवमिवाचार्यमुपासीत नम आचार्येभ्य इति ॥ * आचार्यः प्लाविता तस्य ज्ञानं प्लव इहोच्यते * मन्त्रे तद्देवतायां च तथा मन्त्रप्रदे गुरौ । त्रिषु भक्तिस्सदा कार्या सा हि प्रथमसाधनम् ॥ * मन्त्रनाथं गुरुं मन्त्रं समत्वेनाभिपूजयेत् * चक्षुर्गम्यं गुरुं त्यक्त्वा शास्त्रगम्यं तु यस्स्मरेत् । करस्थमुदकं त्यक्त्वा घनस्थमभिवाञ्छति ॥ * सुलभं तु गुरुं त्यक्त्वा दुर्लभं य उपासते । बद्धं त्यक्त्वा धनं मूढो गुप्तमन्वेषते क्षितौ * इत्यादि वचनशतमिह द्रष्टव्यम् । * स चाऽऽचार्यवंशो ज्ञेयो भवत्याचार्याणामसावसावित्याभगवत्तः इत्याम्नानात् प्राचार्यभजनमपि कर्तव्यम् , तस्याचार्यस्याप्यधिकं प्रीणनम् , अतोऽत्र गुरोरपि गुरुं नाथमुनिं प्रणमति **नमोऽचिन्त्येति** ॥ यद्यप्यत्र गुरुपङ्क्तिः स्वयमभिवन्द्यते, तथाऽपि परप्रतिबोधनार्थं प्रबन्धमुखेनोपकर्तॄणामेवात्र ग्रन्थे निवेशः । अत्र नमश्शब्दः प्रह्वीभावपरः आत्मनिवेदनपरो वा, स तु प्रणिपतनपूर्वक इत्युक्तम् , * दण्डवत्प्रणमेद्भूमौ निर्लज्जो गुरुसन्निधौ । शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ॥ इति विधानात् । नमसाश्चात्मनिवेदनपरत्वमीश्वरसंहितायां मन्त्रराजपदस्तोत्रे प्रोक्तम् * नमस्कारात्मकं यस्मै विधायात्मनिवेदनम् । मुक्तदुःखोऽखिलान्कामानश्नुते तं नमाम्यहम् ॥ इति । * गुणैर्दास्यमुपागत इति चाभिप्रायेणात्र गुरोर्ज्ञानादिगुणगणोक्तिः ।

ज्ञानमिह * सा विद्या या विमुक्तये * संज्ञायते येन तदस्तदोषम् इत्यादिषूक्तमपवर्गोपयुक्तं परस्वरूपरूपादि-ज्ञानम् । ईदृशज्ञानवानेव गुरुराश्रयणीयः * भिन्ननावाश्रितस्तब्धो यथा पारं न गच्छति । ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात् ॥ इति व्यतिरेकनिन्दनात् । **वैराग्यम्**-अल्पास्थिरत्वादिदोषविदूषितेषु स्वर्गस्वाराज्यादिषु स्वात्मानुभवमात्रे च निस्स्पृहत्वम् । अचिन्त्यत्वादित्रिकं च द्वन्द्वात्पूर्वत्वात् प्रत्येकमन्वेति । असदादिभिः स्वरूपतः कारणतो विशेषतो विषयतश्च परिच्छेत्तुमशक्यत्वमिहाचिन्त्यत्वम्; कुतर्कैरपह्नोतुमशक्यत्वं वा । अद्भुतत्वमवगतांशस्यापि लोकोत्तरतया आश्चर्ययुक्तत्वम् । अक्लिष्टत्वं * स्वयमागतविज्ञाना निवृत्ति धर्ममास्थिताः इतिवत् प्राचीनसुकृतविशेषजनितेन परावर-गुरुप्रसादेनायत्नलब्धत्वम्; विरुद्धधर्मसंमर्दराहित्यं वा । ज्ञानादेरक्षयत्वव्यञ्जनार्थमिह तदाश्रये राशिशब्द । अचिन्त्यत्वादि-विशिष्टौ ज्ञानवैराग्यराशी यस्येति बहुव्रीहिर्वा । तदा तु ज्ञानवैराग्ययोः प्रत्येकं विषयानन्त्येन भेदमनुसन्धाय राशित्व-क्लृप्तिः । नाथशब्देन * नामोक्तावर्धोक्तिरपि पूर्णोक्तिकार्यकरीति न्यायेन श्रीरङ्गनाथ इति नामधेयं स्वापेक्षित-सिद्धये याचनीयत्वं स्वामित्वं च विवक्षितम् । स्वाभाविकं भगवदनन्यार्हशेषत्वं तदिष्टविनियोगसिद्धस्याऽचार्यशेषत्वस्य न विरुद्धम् । पापकृतमेवान्यशेषत्वं परिहार्यम् । नाथाय नाथमुनय इति वक्ष्यमाणेऽप्येवं विवक्षा ग्राह्या । **मुनये** भक्ति-प्रेरिततया प्रकृष्टमननशीलाय । उभयलिङ्गत्ववाचिना भगवच्छब्देन सर्वशेषिणः परभक्तियोग्यत्वं व्यज्यते । महनीयविषये प्रीतिर्भक्तिः । एतद्भक्तिस्सनकादिभिरप्यनुष्ठिता । अशक्यतलस्पर्शत्वमगाधत्वं क्षोभणार्थिभिरक्षोभ्यत्वं च । भक्तेरपारत्वा-शोष्यत्वादिख्यापनाय तदाश्रये सिन्धुत्वोक्तिः । भक्तिं वा सिन्धुत्वेन रूपयित्वा बहुव्रीहिः । अत्र मुमुक्षूणां चित्त-परिष्कारभूतेषु बहुषु गुणेषु प्राधान्यतस्त्रय उपात्ताः. तत्रापि प्रधानतमत्वव्यक्त्यै भक्तेः पृथगुक्तिः ॥ १ ॥

**तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयान्तसीम्ने ।**
**नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥** २

एव भगवत्परत्वानुभवजनितभक्तिपरिपूर्णं प्रणम्य तमेवावतारहेतुभूतसौलभ्यगुणविशेषानुभवजनितस्नेहपूर्णं * नमस्तस्मै नमस्तस्मै * नमो नमस्तेऽस्तु सहस्रकृत्व इतिवदादरातिशयात्पुनर्नमस्यति - **तस्मै नम** इति ॥ **तस्मै** - * स्वयोगमहिमप्रत्यक्षतत्त्वत्रय इति सुप्रसिद्धाय । मधुजिच्छब्दः प्रादुर्भावविशेषकृतदुष्कृद्विनाशनं, हिरण्य-गर्भादिसाधुपरित्राणं, तद्वदस्मदादिष्वपि रजस्तमःप्रभृतिसर्वदोषनिरासार्हत्वं, वेदाहरणवृत्तान्तेन धर्मसंस्थापनं च सूचयति । अङ्घ्रिशब्देन शुभाश्रयविग्रहद्वाराऽनुरागातिशयहेतुत्वं तत्रापि शेषभूतस्योद्देश्यतमांशश्च प्रदर्श्यते । सरोजत्वरूपणेन मङ्गलत्वं भोग्यत्वं च व्यञ्जितम् । भगवदङ्घ्रिबलेन मधुर्जितः, अयं तु तद्भोग्यतातिशयेन जित इति भावः । तद्विषयं तत्त्वज्ञानं तत्पदद्वयमेव मुमुक्षूणां सिद्धोपायः प्राप्यं चेति याथार्थ्यबुद्धिः । * अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिम् * अजोऽपि सन्नव्ययात्मा * जन्म कर्म च मे दिव्यम् - इत्यादिषूक्तमवताररहस्यज्ञानं वा । अनुराग इह अवतारप्रकाशितगुणविशेषकृतः सुहृन्मित्रादिष्विव स्नेहः । सेवकस्य स्नेहो भक्तिश्च * स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर! भावो नान्यत्र गच्छति ॥ इत्यत्र संबुद्धिद्वयसूचित-सेव्यगुणभेदनिबन्धनतया विभज्योच्येते । ज्ञानानुरागयोर्महिमा महत्त्वं, तस्यातिशयः प्रकर्षः, तस्यान्तसीम्ने - परमावधि-भूताय । अन्ये योगिनः एतदपेक्षयाऽर्वाचीनाः, तेषां ज्ञानादिकं हि समुद्रे गोष्पदमस्तोतिवदेतस्य ज्ञानादावन्तर्गतं भवतीति भावः । भगवदनुरागातिशयोक्त्या तदितरविषयवैराग्यातिशयोऽप्यर्थसिद्धः । अत्र मुक्तेः पूर्वावस्थायां ज्ञान-

भक्त्याद्युत्पादनमुखेन शरणत्वम्, परत्र तु मुक्तिदशायां सूरिवच्छेषित्वेन विशिष्टप्राप्यान्तर्भावात् तत्रापि प्राचीनमहोप कारसाक्षात्कारेण विशेषप्रतिपत्तिविषयतयैवेत्याशयः। अपिचेतिवत् नापीत्यस्य[illegible]र्थम्। यद्वा परत्र शरणत्वा-संभवप्रतिक्षेपार्थोऽयमपिशब्दः। **नित्यं** - यावदात्मभावि। **यदीयचरणौ** - यस्य चरणावित्यर्थः। शरणमिति यथा-संभवमुपायत्वप्राप्यत्वरक्षितृत्वादीनां तन्त्रेणोपादानम्। अत्र परत्र चेत्युभाभ्यामन्वयात्। उक्तं च गुरोरपि प्राप्यप्रापक-भावेन संश्रयणीयत्वं सात्त्वततन्त्रे * गुरुरेव परं ब्रह्म गुरुरेव परा गतिः। गुरुरेव परा विद्या गुरुरेव परायणम्॥ गुरुरेव परः कामो गुरुरेव परं धनम्। यस्मात्सदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरुः॥ इति। अन्यत्र गुरुं प्रस्तुत्य * अर्चनीयश्च वन्द्यश्च कीर्तनीयश्च सर्वदा। ध्यायेज्जपेन्नमेद्भक्त्या भजेदभ्यर्चयेन्मुदा॥ उपायोपेयभावेन तमेव शरणं व्रजेत्॥ इति॥

**भूयो नमोऽपरिमिताच्युतभक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः।**
**लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिनां वराय॥** ३

पुनरपि तमेव स्वनिग्रहानुग्रहक्षमपरमौदार्यविशिष्टं भावयन् * पुनश्च भूयोऽपि नमो नमस्ते इति न्यायेन प्रणमति - **भूय** इति॥ स्तवप्रियस्य भगवतः स्वविषयस्तुतौ योजयितुमिच्छता स्तोत्रं तावदास्ताम्, ततोऽप्यसाधारण्ये-नोपकारकतमो नाथमुनिरेव मे नन्तव्य इति भावः। आश्रितजनान्न च्युत इत्यच्युतः; तदभिप्रायेण हि स्वयमुक्तं भगवता-* सत्त्वान्न च्युतपूर्वोऽहं सत्त्वं वै विद्धि मत्कृतम् - इति। सत्त्वमिह व्यवसायः * द्रव्यासुव्यवसायेषु सत्त्व-मस्त्री तु जन्तुषु इति नानार्थपाठात्। * न कर्मणा वर्धते नो कनीयान् * स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् इत्यादिषूक्तं ज्ञानबलैश्वर्यादेरप्रच्युतत्वं वा विवक्षितम्। * यस्मात्प्राप्ता न च्यवन्ते सोऽच्युत इत्यपि निरुच्यते। अत्र च्युतो यस्मान्नास्ति सोऽच्युत इति बहुव्रीहिः। भक्तिश्च तत्त्वज्ञानं चेति द्वन्द्वः। तत्त्वज्ञानमना-रोपिताकारेण बुद्धिः। भक्त्यादियोगादस्य वचसा विस्रम्भणीयत्वं सूचितम्। अपरिमितत्वमिह भक्तिज्ञानयोर्विशेषणम्। तयोरनन्ताधिकत्वनिरूपणं सञ्जीवनत्वस्वयंप्रयोजनत्वाक्षयत्वादिव्यञ्जनार्थम्। परिवाह तटाकादिरक्षणार्थमधिकजलाप-गमनप्रवाहः तद्वच्छुभैः; प्रसन्नमधुरशीतलत्वादिस्वभावैरित्यर्थः। अत्रानुक्त्वा स्थातुमशक्यत्वं प्रेरकान्तरप्रयोजनान्तरनैरपेक्ष्यं च दृष्टान्तेन व्यज्यते। वचोभिः परतत्त्वपरमहितपरमपुरुषार्थविपर्यैर्न्यायतत्त्वादिप्रबन्धनिवेशितैरन्यैश्च वाक्यैः। * संस्मरा-म्यस्य वाक्यानि * संस्कारक्रमसंपन्नाम् - इत्यादिप्रकारोऽत्रानुसन्धेयः। लोके - सात्त्विके जने; यद्वा, भगवद्विमु-खाधिष्ठिते भुवने; अत्यद्भुतं ह्येतदिति भावः। यथा परमपदनिलयो भगवानत्रावतरति तथा नाथमुनौ स्थितो भक्तियोग-स्तदाश्रितेषु मत्पर्यन्तेष्वित्यभिप्रायेणावतीर्णत्वोक्तिः। पूर्वं दुरारो[illegible] च सूचितम्। परमार्थशब्दः स्वयंप्रयो-जनत्वमकैतवत्वं वा वक्ति। फलं प्रत्यव्यवहितसाधनत्वज्ञापनाय समग्रत्वोक्तिः। भक्तिश्चासौ योगश्चेति भक्तियोगः, प्रीतिरूपापन्नध्यानमुपायो वा * योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु इति नैघण्टुकाः। भक्तिशब्द इह वचःपरिवाह मूलतया सहोक्तं तत्त्वज्ञानमुपलक्षयति; भक्तियोगस्यापि तत्त्वज्ञानात्मकत्वसूचनार्थं वा पृथगनुक्तिः। नाथमुनिशब्दस्य प्रतिश्लोकं निबन्धनात् * गुरुपादाम्बुजं ध्यायेद्गुरुनाम जपेत्सदा। गुरोर्वार्तां कथां चैव गुरोरन्यं न भावयेत्॥ इत्यादिकमनुसन्धेयम्। **यमिनां** भगवदेकनियतकरणत्रयवृत्तीनां **वराय** - वरणीयाय श्रेष्ठाय वा। एतत्तु भगवद्विषय-योगारूढतया प्राप्तम्, यद्गीयते * योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ इति॥ ३॥

तुष्टूषन्नपि लक्ष्मीशमाचार्यैर्गुणयन्त्रितः । क्रमात्स्वस्य स्तुतौ योक्तुं प्रभुणाऽन्यत्र कृष्यते ॥

**तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः ।**
**संदर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥ ४**

अत्र हि प्रबन्धनिर्माणद्वारा परम्परयोपकारकान् नमश्चिकीर्षुस्तेष्वपि धर्मशास्त्रकृतां प्राचुर्येण धर्ममार्गोपबृंहणप्रधानत्वाद्भारतादिकृतां मनुष्यत्वकञ्चुकितमहापुरुषानुगुणकाव्यलकवचितातिगहनगभीरवितत्रग्रन्थनिर्मातृतया तत्त्वत्रयादिविवेकस्य तत्प्रबन्धेषु कृच्छ्रसाध्यत्वाच्चानन्यपराव्यामिश्रव्यक्तनात्पर्यसंक्षिप्तसात्त्विकोपबृंहणप्रधानतमपुराणनिर्माणेनात्यन्तोपकारकं पराशरं प्रणमति - **तत्त्वेनेति** ॥ तत्त्वमिहाऽनारोपितं रूपम्; यथाऽवस्थिताकारेणेत्यर्थः । यच्छब्देन प्रजापतिनप्ता वसिष्ठपुत्रः * महोवाच व्यासः पाराशर्यः इति व्यासस्याप्तत्वाय तत्पितृत्वेन श्रुत्युपात्तः पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवत्तया प्रसिद्ध इति व्यज्यते । अत्र **चिदचिच्छब्दौ** गोबलीवर्दन्यायात् चेतनाचेतनविशेषपरौ, चेतनविशेषाः बद्धमुक्तादयः, अचेतनविशेषास्त्रिगुणकालादयः । **ईश्वर** इह स्वेतरसर्वनियन्ता स्वयमन्यैः स्वसङ्कल्पमन्तरेणानियाम्यः, पुरुषोत्तमः । अत्र स्वस्वरूपावगतिपूर्वकत्याज्योपादेयविभागार्थं प्रकृत्यात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्त्यर्थं च त्रय्यन्तोक्तभोक्तृभोग्यनियन्तृक्रमो निबद्धः । **तत्स्वभावाः**-तेषां त्रयाणां साधर्म्यवैधर्म्यरूपा धर्माः । तत्र कारणत्वादयस्साधर्म्यरूपाः, परतन्त्रत्वभोक्तृत्वपराक्त्वसर्वशरीरत्वादयो वैधर्म्यरूपाः, **भोग** इह स्वर्गस्वाराज्यादिसुखानुभवः स्वात्मानन्दानुभवश्च । तस्मिन् मुक्तिशब्दं केचिदुपचरन्ति । नहि नित्यं किञ्चित् स्वात्मानन्दमात्रानुभवरूपं कैवल्यमस्ति * चतुर्विधा मम जना भक्ता एव हि ते श्रुताः । तेषामेकान्तिनः श्रेष्ठाः ते चैवानन्यदेवताः ॥ अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् । ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ॥ सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥ इति विशेषणात् ।

**सर्वकर्मविनिर्मोक्षे मुक्तिभेदः कथं भवेत् । कर्मैकदेशयोगे तु न मुक्तिर्भुक्तिभेदवत् ॥**
**न च कैवल्यवाङ्मात्रात् मुक्तिरेषेति युज्यते । स्वमात्रभुक्तितात्पर्यात्तत्र तस्य प्रयोगतः ॥**

आत्ममात्रानुभवसक्तस्य तदुपायानुष्ठायिनः का गतिरिति चेत्, ब्रह्मविद्यानुप्रवेशानामपवर्गविश्रान्तौ तदभावे च तत्तदनुगुणेति भाष्यादिषु द्रष्टव्यम् । ऐश्वर्याद्यर्थिनां तत्तत्प्रदर्शनमप्यौदार्यकृत्यमेव, अपवर्गस्सर्वकर्मात्यन्तोच्छेदेन निश्शेषाविद्यानिवृत्तिलक्षणपरिपूर्णब्रह्मानुभवः, स चाकर्माधीनस्वाम्यभिमतस्वच्छन्दशेषवृत्तिपर्यन्तः । ईदृशानुभवे * यथा **न** क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या **एवा**त्मनो हि ते ॥ इत्यादिकमनुसन्धेयम् । **तदुपायाः**-तत्तदधिकारिसाध्याः * प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् । निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥ इति विभज्योक्ताः । सिद्धिरूपाश्च देवतादयस्सर्वसाधारणाः; प्रधानतमस्सिद्धोपायस्तु यथार्हं तथाविधधर्मद्वयवशीकरणीयतया नित्यसिद्धः पुरुषोत्तम एव । गतावपि तच्छब्दोऽन्वेति, तत्संबन्धिनी गतिरर्चिरादिका धूमादिका च । यद्वा सात्त्विकराजसतामसादिभिन्ना । तथा च गीयते * ऊर्ध्वं गच्छन्ति सत्त्वस्थाः इत्यादि । गतिपर्यन्तानामष्टानामिह द्वन्द्व उचितः, गतयस्सप्तानां प्रकारा इति केचित् । उक्तैरेवानुक्तं विरोध्यादिकमप्यत्रोपलक्ष्यते । **उदारः**-मैत्रेयादीनामस्मदादीनां च प्रत्युपकारमनपेक्ष्य तत्त्वज्ञानमहानिधिप्रदाता । येन चैवमाशास्यते

पुराणान्ते * प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां समृद्धिमिति । अत्र * अज्ञानाय तु यो ज्ञानं दद्याद्धर्मोपदेशनम् । कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥ * ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथवा दद्याच्छक्तित आदरात् ॥ * विद्यादानं ततोऽधिकम्, इत्यादिकमनुसन्धेयम् । संदर्शयन् - सम्यग्दर्शयन् । कण्ठोक्त्याऽर्थसिद्ध्या च विशदं प्रकाशयितुमित्यर्थः । * लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययः । * चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितमिति न्यायाद्दर्शनशब्द औपचारिकः । तदभिप्रायेण हि श्रूयते * तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः इति । तत्त्वेन संदर्शयन्नित्यनेन * प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति श्रुत्युक्तं सूच्यते । एवं [illegible] ख्यापितम् । अत्र जीवस्वरूपस्वभावतदवान्तरभेदाः * पिण्डः पृथग्यतः पुंसः * पुमान् न देवो न नरः * निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः * आत्मा शुद्धोऽक्षरश्शान्तो निर्गुणः प्रकृते परः * अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः * यद्वै पश्यन्ति सूरयः इत्यादिभिरुक्ताः । अचित्स्वरूपस्वभावतद्भेदास्तु * त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परः ॥ * कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः इत्यादिभिर्दर्शिताः । ईश्वरस्वरूपादिकं तु * अविकाराय शुद्धाय * परः पराणां परमः * शास्ता विष्णुरशेषस्य * समस्तकल्याणगुणात्मकोऽसौ * आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने । विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा ॥ इत्यादिषु स्पष्टम् । भोगतत्स्थानभोग्यभोगोपकरणादिकं भुवनकोशादिषु प्रपञ्चितम् । * योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणामित्यनेन स्वात्मानुभवपराणां स्थानमप्युक्तम् । सनकादियोगिनाममृतं स्थानं स्वात्मसन्तोषकारिणामपि स्थानं भवतीत्यर्थः । अत्र पूर्वपरवाक्यप्रवृत्तिप्रकारः परामर्शनीयः । स्वधर्मानुवर्तिनामिति केषांचित्पाठेऽपि योगिन एतेऽर्वाचीनाः, तत्स्थानमपि तथैव * एकान्तिनस्सदा ब्रह्मध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानम्.... ॥ इति तदधिकस्य स्थानस्यानन्तरोक्तेः, ह्यपवर्गस्वरूपं * निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥ * तद्भावभावमापन्नः । इत्यादिभिरुक्तम्, अत्र कर्मकृतवैधर्म्यस्यात्यन्तनिवृत्तिर्विवक्षिता । भोगोपायास्तु ध्रुवादिवृत्तान्तैरुदाहृताः । अपवर्गोपायश्च भक्तियोगसंज्ञः * तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते नृप ॥ इत्यादिषु सुव्यक्तः । प्रपत्तिस्वरूपं च * तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् । यावन्न याति शरणं त्वामशेषाघनाशनम् ॥ इत्यादिषूक्तम् । भोगापवर्गाधिगन्तिश्च तत्तदुपायफलमध्ये यथाश्रुति प्रतिपत्तव्या । * पुराणसंहिताकर्ता भवान् वत्स भविष्यतीति वैष्णवलैङ्गयोरुक्तमाह - **निरमिमीत पुराणरत्नमिति** । न केवलं पूर्वसिद्धप्रबन्धप्रवर्तनमात्रमिति भावः । पुरैव विद्यमानत्वेऽपि संप्रति नवत्वात् पुराणत्वम्; चिरानुभूतत्वेऽपि अपूर्ववन्नित्यानुभाव्यमित्यर्थः । अनादिवैदिकार्थविषयतया विद्यान्तरेभ्यः पुरातनत्वाद्वा पुराणत्वम् । यथोक्तं वायव्ये * प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणोदितम् । अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिस्सृताः ॥ इति । नन्वेवं सति पराशरः पुराणरत्नं निरमिमीतेति कथं स्यात्, शैवपुराणे च * ब्रह्मा चैव तु वेदानां पुराणानां प्रदर्शकः इत्युक्तम् । सत्यम्, तथाऽपि तत्रैव प्रत्येकं पुराणसंहिताविशेषप्रणेतारः प्रतिपाद्यन्ते * ब्राह्मं तु ब्रह्मणा प्रोक्तं पाद्मं तेनैव शोभनम् । पराशरेण कथितं वैष्णवं मुनिपुङ्गवाः ॥ शैवं शैलालिना प्रोक्तम्.... ॥ इत्यादि । तथा आग्नेयपुराणे * यद्ब्रह्मकल्पवृत्तान्तमधिकृत्य प्रजापतिः । चकार यत्पुराणं तद्ब्राह्ममित्यभिधीयते ॥ इत्यादि । मात्स्येऽपि * वराहकल्पवृत्तान्तमधिकृत्य पराशरः । यत्प्राह धर्मा-

नखिलान्विष्णोस्तद्वैष्णवं विदु. ॥ यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च । कल्पितं लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥ इत्यादि, * अष्टादशपुराणानां कर्ता सत्यवतीसुतः इत्येतदपि प्राक्सिद्धसर्वपुराणप्रवर्तनविशेषाद्वा सर्वपुराणसारोद्धारेण * यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदित्युक्तमहाभारतकरणाद्वा निर्वाह्यम् । अत एव ह्युच्यते * अष्टादश पुराणानि अष्टौ व्याकरणानि च । ज्ञात्वा सत्यवतीसूनुश्चक्रे । भारतसंहिताम् ॥ इति । एतेन * अष्टादश पुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहणम् ॥ लक्षेणैकेन यत्प्रोक्तं वेदार्थपरिबृंहणम् ॥ इति भविष्यन्मात्स्यपुराणयोरुक्तमपि नेतव्यम् । इदं तु पुराणं * सर्गश्च प्रतिसर्गश्चेत्यादिना पञ्चलक्षणयुक्तम् । तस्य रत्नत्वरूपणेन त्रासरहितत्वस्थिरत्वसुग्रहत्वसुरक्षत्वभोग्यत्वप्रकाशत्वमङ्गलत्वमहार्घत्वमान्यत्वमाननहेतुत्वादि व्यज्यते ॥

**अत्रासं मानदं रत्नं स्थिरं भोग्यं प्रकाशकम् । महार्घं मङ्गलं मान्यं सुरक्षं सुग्रहं नृणाम् ॥**

एतस्य च परिग्रहातिशयस्सर्वसंमतः । **तस्मै** - उक्तप्रकारपरमौदार्यविशिष्टाय * इतिहासपुराणाभ्यामित्यादिना मनुप्रतिपादितवेदभयप्रशमनाय । **मुनिवराय**-परब्रह्ममननशीलेषु श्रेष्ठाय तैर्वरणीयायेति वा, मुनिभिर्दत्तवराऽसौ तेषामपि प्रत्युपकर्तेति भावः । * पराशरं मुनिवरमिति पुराणारम्भोक्तिसूचकाभ्यां मुनिवरपराशरशब्दाभ्यां स्वपक्षस्थापकत्वं परपक्षप्रतिक्षेपकत्वं च प्रकाश्यते, परान् बाह्यकुदृष्टीन् प्रमाणतर्कशरैराशृणातीति पराशरः ॥ ४ ॥

**माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम् ।**
**आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥** ५

अथ पराशरप्रबन्धादपि वेदान्तरहस्यवैशद्यातिशयहेतुभूतैस्सद्य. परमात्मनि चित्तरञ्जकतमैः सर्वोपजीव्यैः उपबृंहणैर्मधुरकविप्रभृतिसंप्रदायपरम्परया नाथमुनेरप्युपकर्तारं कालविप्रकर्षेऽपि परमपुरुषसङ्कल्पात् कदाचित्प्रादुर्भूय साक्षादपि सर्वोपनिषत्सारोपदेष्टार पराङ्कुशमुनिं * माता पिता भ्रातेत्याद्युपनिषत्प्रसिद्धभगवत्स्वभावदृष्ट्या प्रणमति - **माते**ति ॥ उपजीव्यप्रबन्धनिर्माणक्रमादत्र पराशरपराङ्कुशनमस्कारक्रमः । * माता पुत्रस्य भूयांसि कर्माण्यारभते यतः । तस्यां तु शुश्रूषा नित्या पतितायामपि * आचार्यश्श्रेष्ठो गुरूणां मातेत्येके, * पितुश्शतगुणं माता गौरवेणातिरिच्यते इत्यादिषु मातुर्गौरवं प्रतिपादितम् । एवं * माता भस्त्रा पितुः पुत्रो यस्माज्जातस्स एव सः इति पिताऽपि प्रसिद्धगौरवः । **युवतयश्च** * यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते इति धर्मार्थकामहेतुतयोक्ताः । **तनयाः** - सन्दर्शनादिभिराह्लादहेतवः, असमर्थावस्थायां संरक्षकाः, पुन्नाम्नो नरकात्त्रातार. । * अपि स्यात्स कुलेऽस्माकं सर्वभावेन यो हरिम् । प्रयायाच्छरणं विष्णुं देवेशं मधुसूदनम् ॥ आस्फोटयन्ति पितर. प्रनृत्यन्ति पितामहाः । वैष्णवो न कुले जातः स नस्सन्तारयिष्यति ॥ इत्यादिभिस्स्वगुणेन पितृपङ्क्तेरपि निस्तारकाः प्रसिद्धाः । एकस्मिन्नेवास्मिन् बहुभिस्साध्य उपकारस्समुदित इत्यभिप्रायेण बहुवचनम् । **विभूतिः** - दासभृत्यधनरत्नादिरूपश्शेषभूतो नियन्तव्यवर्गः । धारकपोषकादिविभूत्यभावे पूर्वोक्तमखिलं सदप्यसत्समं स्यात् । **सर्वम्** - अन्यदैहिकामुष्मिकपुरुषार्थतत्साधनादि यत् प्रसिद्धं सात्त्विकसमाजेष्विति भाव । यदेकमेव दृष्टादृष्टरूपं सर्वमुपजीव्यमासीत्, एवंविधमन्यदपेक्षणीयं नास्तीत्यवधारणाभिप्रायः । मातापित्रादिशब्दविवक्षिताः प्रियप्रवर्तकत्वहितप्रवर्तकत्वादयस्तत्स्वभावाः तदङ्घ्रावुपचर्यन्ते । **नियमेन** - सर्वदा, मुक्तावपीत्यर्थः । यद्वा अवधारणनियमाभ्यामाचार्यस्य सर्वेश्वरादपि तत्प्रसादार्थमतिशयेन सर्वदा बहुमन्तव्यत्वमत्र सूच्यते ।

ईश्वरकृपा ह्यनादिरपि आचार्यकृपामपेक्षते लीलारससहचरिता च। आचार्यकृपा तु तन्निग्रहमपि शमयति अनुग्रहैकरसा च। ईश्वरस्य क्वचिदधोनिनीषाऽपि वर्तते असाधुकारयितृत्वं च; आचार्यस्य तु सर्वत्रोन्निनीषैव, स साध्वेव कारयति * आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि। स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते॥ इति स्मरणात्। भगवतो दैत्यादिषु विपरीतोपदेशोऽप्यस्ति; अस्य तु सर्वत्र यथार्थवादित्वमेवेत्यादि वैषम्यमनुसन्धेयम्। मदन्वयशब्देन स्वान्विताः पुरुषा गृह्यन्ते, विद्यया जन्मना वा स्ववंश्यानां पूर्वेषामुत्तरेषां चेत्यर्थः। स्वपूर्वेषामपि ज्ञानवैराग्यादिहेतुतया आद्यस्येति विशेषणम्। **नः** - [illegible]। गोत्रर्षिवदसावित्यभिप्रायेण कुलपतित्वोक्तिः। ईश्वरस्तु परमाचार्योऽपि सर्वेषां साधारणः, अयं तु अस्मदसाधारण इति भावः। योगरूढिप्रदर्शिताभ्यां रक्षकत्वशेषित्वाभ्यां वा पतित्वोक्तिः। वकुलाभिरामं श्रीमदित्युभाभ्यां वेषतस्स्वभावतश्च सौम्यत्वमङ्गलत्वे विवक्षिते। परतत्त्वनिर्णयहेतूनां तत्प्रबन्धानां स्थिरपरिमलत्वसूचनार्थं तदातनसात्त्विकजनप्रयुक्तैस्सपर्यार्थवकुलकुसुमैरभिरामम्। वैष्णवत्वसाम्राज्यचिह्नैः **श्रीमत्** स्वाश्रितानां तादृशसम्पत्प्रदानयोग्यं च। * स तु नागवरः श्रीमान् * अन्तरिक्षगतः श्रीमान् इतिवत् भगवत्सेवोद्यतत्वं वा श्रीमत्त्वम्। **तत्** - उक्तप्रकारनिरतिशयभोग्यत्वनिरपायशरण्यत्वाभ्यां प्रसिद्धम्। **अङ्घ्रियुगलम्** - उपमान्तरराहित्येनान्योन्यसदृशं देवताद्वन्द्ववच्चाविभक्तोद्देश्यम्। **प्रणमामि** - भक्तिप्रकर्षपूर्वकं प्रह्वीभावेन भजामीत्यर्थः। नित्यानुवृत्तिविवक्षया वर्तमानव्यपदेशः। **मूर्ध्ना** - न केवलं वाङ्मात्रेण; नापि मनसा * समस्तिष्कः प्रणामस्स्यात् अञ्जलिं मस्तके न्यसेत्। प्रणामस्सम्पुटस्स स्यात् हृदयेऽञ्जलिमर्पयेत्। प्रह्वाङ्गस्सम्पुटं कुर्यात् सा प्रह्वाङ्गनमस्क्रिया॥ [illegible]त्रेणेति भावः। नमस्कारप्रकरणे च * तद्यथा पुनरयं जानुभ्यां पाणिभ्यां शिरसा चेत्यारभ्य * इत्येवं नमति स सर्वैः करणैर्नमतीत्युक्तम्। तादृशप्रणामश्चैवं प्रशस्यते * सर्वैः करणैर्नमस्यन् समग्रो भवति समग्रो नमन्नासकारी भवत्यासकारी भगवन्तमाप्नोति॥ इति। अयं च मूर्ध्ना प्रणामश्चतुर्विधः, तत्र पञ्चाङ्गस्तावच्छ्री वैखानसे प्रोक्तः * पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनिं स्पृशन्। बद्धाञ्जलिर्नमस्कुर्यात् स पञ्चाङ्ग उदीर्यते॥ इति। षडङ्गश्च * पादौ हस्तौ प्रसार्य वा इत्यादिनोक्तः। शाण्डिल्यस्मृतौ च * निधाय दण्डवद्देहं प्रसार्य चरणौ करौ। बध्वा मुकुलवत्पाणी प्रणामो दण्डसंज्ञितः॥ पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृति। मनोबुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्गसंज्ञितः॥ मस्तिष्कं सम्पुटं चैव प्रह्वाङ्गं च त्रयं बुधैः। कृतयोरनयोः कार्यमन्यथा विकलं भवेत्॥ इति। श्रीसात्वते * मनोबुद्ध्यभिमानेन सह न्यस्य धरातले। कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम्॥ प्रदक्षिणसमेतेन त्वेवंरूपेण सर्वदा। अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो विभोः॥ इति। सङ्कर्षणसंहितायां तु सुकृतप्रणामविधौ * ललाटोदरजान्वङ्घ्रियुगान्यूर्ध्वगतौ करौ। भूमौ सन्धाय मनसा वासुदेवमनुस्मरन्॥ इति करचरणजानुशिरःप्रभृतिद्वादशाङ्गश्च प्रणामो द्रष्टव्यः। भगवतीव सम्यज्ज्ञानप्रदातृष्वपि भक्तिप्रकर्षादीदृशाः प्रणामा उपपद्यन्ते॥

द्रविडोपनिषद्द्रष्टुरस्य याथात्म्यमद्भुतम्। सम्यक् श्रुतवतां नात्र शङ्कनीय उपप्लवः॥
देवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः। इत्यादिन्यायदृष्ट्या च तोष्टव्यमिह सूरिभिः॥ ५

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथस्सकलस्समेति।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्पादारविन्दमरविन्दविलोचनस्य॥ ६

एवमुपकारकान् प्रणम्य साक्षात् परम्परया च सर्वोपकारकस्य भगवतः सत्संप्रदायप्रदानमहोपकारकृतज्ञतया आचार्यप्रियचिकीर्षया च प्रेरितस्तत्प्रसादसन्धुक्षिततत्प्रबन्धानुसन्धानजनितज्ञानभक्तिपरिवाहरूपे स्तोत्रे प्राप्यप्रापकरूप-प्रतिपाद्यसंग्रहपूर्वकं प्रवर्तते—**यन्मूर्ध्नी**ति ॥ यच्छब्देन सर्वशास्त्रप्रसिद्धं सर्वोत्तरत्वं सूच्यते । मूर्ध्नि मे भातीत्याश्चर्य-गर्भम् । अत्यन्तनिकृष्टस्य मे मूर्ध्नि पङ्गोरुपरि गङ्गानिपातवदयत्नोपस्थितमनुभवयोग्यं भवतीत्याश्रयणसौकर्यानुगुणसौल-भ्यसौशील्यवात्सल्यादिसूचकं च । **श्रुतिशिरस्सु च भाती**ति सर्वाधिकत्वसर्वरक्षकत्वहेयप्रतिभटत्वसमस्तमङ्गलगुणा-स्पदत्वपरमप्राप्यत्वादिविशिष्टतया सर्वेषु वेदान्तेषु प्रकाशत इति भावः । प्राप्तेराश्रयणपूर्वकतया तदुपयुक्तसौलभ्यप्राधा-न्यविवक्षया स्वमूर्ध्नि भानस्य प्रथमोपादानम् । नीचोत्तमस्थानवृत्तिभ्यां भाविकस्य तदौज्ज्वल्यस्य न ह्रासोपचयौ, न च मे तत्र तदभिव्यक्तितारतम्यमित्यभिप्रायवान् चकारः । श्रूयते नित्यमित्यपौरुषेयत्वं दर्शयता श्रुतिशब्देन स्तुत्यविषयस्य प्रमाणस्य नित्यनिर्दोषत्वं सूच्यते । शिरश्शब्देनाव्यवहितप्रवृत्तानन्यपरभागोक्तिः । बहुवचनेन समन्वयाध्यायस्थापितं सर्वोपनिषदैककण्ठ्यमभिप्रेतम् । विप्रकीर्णेषु बहुषु वेदान्तेषु क्रमादनेकविधपूर्वपक्षगर्तनिस्तारेण कथंचिद्द्रष्टव्यम् ममे-दानीं सदाचार्यप्रसादादेकत्र झटित्ययत्नदृश्यमासीदिति कार्तार्थ्यं च व्यज्यते । **भाती**ति वर्तमानव्यपदेशेनाविरोधलक्ष-णोक्तं नित्यनिर्बाधत्वमपि प्रकाश्यते । **यस्मिन्**—स्वप्राप्त्युपायतया स्वीकृते । **अस्म**दित्यादिना सर्वप्रकारनिरवधिकभो-ग्यत्वोक्तिः । अस्मच्छब्द इहानुबन्धिसहितस्वात्मपरः । परावरपुरुषार्थविवेचकस्ववंशस्वभावोऽयमिति भावः । **मनोरथ-पथः**—इच्छामार्गः । आफलप्राप्तेरनुस्यूतोऽभिलाष इत्यर्थः । **सकलः**—ऐहिकामुष्मिकप्राप्यप्रापकस्वरूपसर्वविषयः । **समेति**—सम्यक् संभूय वा गच्छति, न तु विषयभेदात् बहुशिरस्क इति भावः । *या प्रीतिरविवेकानामित्या-दिवत् । *त्वमेव माता चेत्यारभ्य *त्वमेव सर्वं मम देवदेवे ति ह्यनुसन्धीयते । *पिता त्वं माता त्वमित्यादि च वक्ष्यति । *स्वाध्यायेनार्चयन्त्येके भवन्तं संयमेन च, *इति वाग्भिः प्रशस्ताभिर्योनिर्विष्णुरीडितः, *वाग्य-ज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः, *आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् । तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः, *एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा, *आदरेण यथा स्तौति धनवन्तं धनेच्छया । एवं चेद्विश्वकर्तारं को न मुच्येत बन्धनात्, *सा जिह्वा या हरिं स्तौतीत्यादिषु प्रसिद्धां स्वशक्यां वाचिकीं परिचर्यां करिष्यामीत्याह—**स्तोष्यामी**ति । परमार्थगुणवर्णनेन सेविष्य इति भावः । तथा च **द्रमिडभाष्यं** *नासता स्तुतिरुपपद्यत इति । आहुश्च **वरदाचार्याः** *कथमसता गुणेन कथितेन नुतिर्भवतीति । मुख्य-वृत्त्योपचारवृत्त्या वा कस्यचिद्गुणस्यानभिधाने स्तुतित्वं न स्यादिति भावः । गुण्यवच्छिन्नगुणाभिधानं हि स्तोत्रमाहुर्नीति-विदः । *सर्वेश्वरेश्वरः कृष्णः प्रोच्यते यदि पण्डितैः । तथाऽपि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुतिरित्यादिकं तु गुणारोपणेन वचनं स्तुतिरिति लोकदृष्टप्रकारेणोच्यते । स्तोष्यामीत्यत्र प्रधानभूतस्तुतिफलं सर्वशेषिभूतस्तुत्यगामीति हृद-यम् । **नः**—पूर्वोक्तविद्यासन्तानजातानाम् । यद्वा सर्वदेशकालवर्तिनां सात्त्विकानाम् । **कुलधनम्**—आपदर्थं संग्राह्यमयत्न-लब्धमनुकूलोपायमित्यर्थः । **कुलदैवतम्**—अनतिलङ्घनीयमाराध्यमुपायनिर्वर्तकं फलप्रदं फलं च । **तत्**—उक्तप्रकारपरत्व-सौलभ्यपरमावधिभूतम् । पादस्यारविन्दत्वरूपणेन लक्ष्मीकरग्रहणयोग्यत्वकान्तिसौरभ्यसौकुमार्यादिकं व्यज्यते । *पुरुषे पुष्करेक्षणे, *जितं ते पुण्डरीकाक्ष, *यश्च देवो मया दृष्टः पुरा पद्मायतेक्षणः, *मत्स्यः कमललोचनः, *महावराह-स्स्फुटपद्मलोचनः, *रामो राजीवलोचन इत्यादिषु प्रसिद्धमनुग्रहशीलत्वपूर्णत्वव्यञ्जकमाह—**अरविन्दविलोचनस्येति ।**

अरविन्दवत् सौम्यं विलोचनं यस्य स तथोक्तः । मम योगिनां महति कुले जन्म सदाचार्यस्वीकरणमुपकारकेषु प्रावण्यं तदभिमतचिकीर्षया *वीचीतरङ्गवृत्तिक्रमेण प्रारिप्सितपरमात्मस्तुतौ सङ्कल्पश्च भगवत्कटाक्षविशेषस्य फलमिति भावः । उक्तं च मोक्षधर्मे *जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्स तु विज्ञेयः स वै मोक्षार्थचिन्तक इति । तदन्यदृष्टिगोचरत्वे च दोष उक्तः *पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतमिति । किञ्च स्वप्रेरिते मयि तुष्टूषमाणे तज्जनितप्रीत्यतिशयेन शेषपूरणं कर्तुमरविन्दवच्छैत्यविकासशोभादिमता लोचनेन भूयोऽपि मां कटाक्षयत इति धन्यतामात्मनोऽनुसन्धत्ते । उक्तं हि **श्रीविष्णुधर्मोत्तरे** रुद्रगीतायां *नाधन्यः केशवं स्तौति नाधन्योऽर्चयति प्रभुम् । नमत्यधन्यो न हरिं नाधन्यो वेत्ति माधवमिति ॥ ६ ॥

**तत्त्वेन यस्य महिमार्णवशीकराणुश्शक्यो न मातुमपि शर्वपितामहाद्यैः ।**
**कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय ॥** ७

अथ स्तोत्राभ्युपगमप्रीतेन तच्छ्रवणकौतुकिना भगवता स्तुतिसाद्गुण्याय स्तोतव्यस्य स्वस्य स्वरूपरूपगुणविभूतिषु कार्त्स्न्येन प्रकाशितासु सर्वैरपि विषयानुरूपस्तुतेरशक्यतां बुद्ध्वा निवृत्तोद्योगः तत्प्रवृत्तमात्मानमुपालभते—**तत्त्वेनेति** ॥ यथावत् स्थिताकारेणेत्यर्थः, कार्त्स्न्येनेति वाऽभिप्रायः । **यस्य**—त्रिविधपरिच्छेदरहिततया निरवधिकगुणविभूतित्वेन श्रुत्यादिप्रसिद्धस्य । **महिमा**—अत्र निरुपाधिकसार्वज्ञ्यसर्वनियमनशक्त्यादिरूपः । तस्य दुरवगाहत्वादिनाऽर्णवत्वोक्तिः । तादृशस्य महिम्नोऽतिक्षुद्रविषयाधिष्ठानांशश्शीकराणुत्वेन कल्प्यते । अनन्तेषु गुणेष्वेकैकमात्रं वा । **शक्यो न मातुं**—वाचा मनसा च परिच्छेत्तुमशक्य इत्यर्थः । श्रूयते हि—*यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, *यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्, *त्वमेव त्वां वेत्थ योऽसि सोऽसि, *यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेदेति । एवं विभूतिद्वयैकदेशोऽपि मातुं न शक्य इत्यवगन्तव्यम् । ननु *ईशानस्सर्वविद्यानाम्, *ईश्वराज्ज्ञानमन्विच्छेत् इत्यादिप्रसिद्धवैभवस्सर्वज्ञनामा च शर्वः, तस्याप्युपदेष्टा सर्ववेदप्रवर्तनाधिकृतश्च पितामहः, सनन्दनादयोऽपि ब्रह्मभावनान्विता इत्युच्यन्ते ; वेदाश्च स्वयं सर्वोपदेष्टारः ; तत्कथमेतैर्मातुमशक्यत्वमित्यत्राह—**अपि शर्वपितामहाद्यैरिति** । लोकोत्तरज्ञैरपीत्यपिशब्दाभिप्रायः । अत्र कालत्रयवर्तिभिरपीति भाव्यम् ; तथा चामनन्ति **बह्वृचाः**—*न ते विष्णो ! जायमानो न जातो देव ! महिम्नः परमन्तमापेति । उक्तं **चोत्तररामायणे ब्रह्मणा**—*त्वं हि लोकगतिर्देव ! न त्वां केचन जानते । ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहामिति । **मोक्षधर्मे** च भृगुभरद्वाजसंवादे—*प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै । तौ च मां न विजानीतो मम मायाप्रमोहिताविति । ब्रह्मरुद्रसंवादे च—*न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ! । सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचिदिति । **श्रीविष्णुधर्मे** *न यस्य रूपं न बलप्रभावौ न च स्वभावः परमस्य पुंसः । विज्ञायते शर्वपितामहाद्यैस्तं वासुदेवं प्रणमाम्यचिन्त्यमिति । **वैष्णवे** च पुराणे—*यन्नायं भगवान् ब्रह्मा जानाति परमं पदम् । तन्नतास्स्म जगद्धाम तव सर्वगताच्युत ! ॥ यं न देवा न मुनयो न चाहं न च शङ्करः । जानन्ति परमेशस्य तद्विष्णोः परमं पदमिति । **श्रीवाराहे** स्वयं चाह—*यदेतत्परमं ब्रह्म वेदवादेषु पठ्यते । स देवः पुण्डरीकाक्षः स्वयं नारायणः परः ॥ अद्यापि मां न जानन्ति रुद्रेन्द्रास्सपितामहा इति । **भगवद्गीतासु** च *नाहं प्रकाशस्सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामज-

मव्ययमिति । *मां तु वेद न कश्चनेति च । अत्र महिमार्णवशीकराणुमीतुं न शक्यत इत्युक्त्वा महिमस्तुतिमिति-वचनात् स्वस्य चापलभूम्ना कार्त्स्न्येन महिमस्तुतावुद्योगस्सूच्यते । **तदीयमहिमस्तुतिं**—तदसाधारणस्य महिम्नः प्रकर्ष-कथनमित्यर्थः । तदीयस्य स्तोतव्यतया प्रस्तुतस्य पादारविन्दस्य माहात्म्यवर्णनमिति वा । **उद्यताय**—उद्युक्ताय । **मह्यं**—महायोगिभिस्सर्वैरप्यशक्ये प्रवृत्ताय स्वस्मै । **नम** इति पूजालिङ्गमेवात्र छेकोक्त्या निन्दार्थम् । साहसिकाः प्रायो नन्तव्या इति चोपालम्भः । नमोऽस्त्विति सामान्योक्त्या सर्वैः क्रियमाणं नमो मह्यमेवास्तु किमन्येन *नन्तव्यः परम-श्शेषीत्युक्तेन सर्वेश्वरेणेति व्यज्यते । **कवये**—क्रान्तदर्शिने, अपरिच्छेद्येऽपि परिच्छेदं पश्यते, अंशतोऽपि स्तोतुमशक्ये सर्वप्रकारवर्णनकौतुकिने सर्वेषां विडम्बनरसावहायेति भावः । अनन्ते भगवति स्ववाचा परिमितत्वावद्यमुद्धाटयन्नहं सर्वै-रात्मनः परिहसनीयतां न जानामी त्यभिप्रायेणाह—**निरपत्रपायेति** ॥ ७ ॥

**यद्वा श्रमावधि यथामति वाऽप्यशक्तस्स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।**
**वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः ॥** ८

अथ पार्थनयाद्भूयः प्रभुणा प्रतिबोधितः । प्रारिप्सितपरित्यागान्निवृत्तः स्तोतुमीहते ॥

अत्र हि भगवता गुणोत्तरेषु गुरुष्वेव विश्रमे कथंचिन्निवारितेऽपि विषयानुरूपस्तोत्राशक्तिजनितं वैमुख्यं परि-हर्तुं वेदप्रभृतीनामपि वृत्तान्तमात्मनश्च दीनानुकम्पित्वादिगुणगणं प्रकाश्य प्रतिसमाहितः स्तोत्रे *यावानर्थ इति न्याया-त्स्वस्योचितप्रवृत्तितया स्वोपालम्भनिवृत्तिं सिद्धान्तयति—**यद्वेति** ॥ अशक्तोऽपि स्तौमीत्यन्वयः । अज्ञत्वमप्यत्रान्तर्नीतम् । यथावद्वक्तुं ज्ञातुं चाशक्त इति चोपस्कार्यम्, श्रमावधि यथामतीत्युभयोपादानात् । श्रमोक्तिरसामर्थ्यसूचनार्था, तेन चानुकम्पनीयोऽहमिति व्यज्यते । यथाऽऽह कालियः—*सोऽहं ते देवदेवेश ! नार्चनादौ स्तुतौ न च । सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद म इति । यथामतीति मतिक्षयसूचनाय । यथोच्यते—*इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयादिति । यथामतिवचनं च महाभारते प्रोक्तम्—*यथाज्ञानं तु वक्ष्यामि पुरुषं तं सनातनम् । तस्यैकस्य महत्त्वं हि स चैकः पुरुषस्स्मृतः ॥ महापुरुषशब्दं स बिभर्त्येकस्सनातन इति । वाशब्दः प्रति-पत्ते स्तुतिशक्तिक्षयात् स्तुतिशक्तावपि स्तोतव्यविषयज्ञानमान्द्याद्वा निवृत्तिसंभवं व्यनक्ति । अत्र स्तौमीति वर्तमाननिर्देशः स्तुतेर्वर्तमानसामीप्यपरः । अस्यापि वाक्यस्य स्तुत्यात्मकत्वं वा सूचयति । **एवमेव**—श्रमावधीत्याद्युक्तप्रकारेणेत्यर्थः । एवकारेण निश्शेषस्तुतेरसंभवस्स्थिरीक्रियते । अन्यथा परमात्मनः स्तुतिरेव न स्यात्, ततस्तद्विधानम्, *स्तव्यः स्तव-प्रियः स्तोत्रं स्तुतिरिति तन्नामानि च निरर्थकानि भवेयुरिति भावः । खलुशब्दः श्रुत्यादिप्रसिद्धिं द्योतयति । **तेऽपि**—लोकोत्तरज्ञानशक्तिमन्तोऽपीत्यर्थः । **सदा स्तुवन्तः**—स्वरूपनित्यतया वेदानां सदा स्तोतृत्वं युक्तम्, तथा *तद्विप्रासो विपन्यव इत्याद्याम्नातानां नित्यसूरीणां च स्यात्, चतुर्मुखादीनां तु प्रवाहनित्यतया यावदधिकारं यथाकालमविच्छिन्नं स्तोतृत्वम् । एवं सर्वेषु कल्पेष्विति विवक्षितम् । वेदशब्देनास्मदाद्यतीन्द्रियपुरुषार्थतदुपायवेदकत्वं व्यज्यते । **चतुर्मुख-मुखाः**—चतुर्मुखप्रधाना विबुधश्रेष्ठाः । स्वमुखैः वेदचतुष्टयप्रवर्तकत्वख्यापनाय चतुर्मुखशब्दः । सर्वैरपि यथावत् स्तोतु-मशक्यत्वं च भारतोक्तं—*वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः । महात्मनश्शङ्खचक्रासिपाणेर्जिष्णो-र्विष्णोर्वसुदेवात्मजस्येति । **श्रीविष्णुधर्मे** च *सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । न हि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि ॥ वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैरिति । **श्रीवैष्णवे** च पुराणे कालियदाराः *न समर्थास्सुराः

स्तोतुं यमनन्तमजं विभुम् । स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥ स्त्रियोऽनुकम्प्यास्साधूनां मूढा दीनाश्च जन्तवः । यतस्ततोऽस्य दीनस्य क्षम्यतां वदतां वरेति । **वाराहे** च **रुद्रगीतासु** सप्तमाध्याये *चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः । स ते गुणानामयुतैकमंशं वदेन्न वा देववर ! प्रसीदेति । नन्वस्य विषयस्य यथावद्वक्तुमशक्यत्वेऽपि चतुर्मुखादीनां च तव च तारतम्यमस्तीत्यत्र [illegible] द्रढयति **महार्णवान्तरि**ति । अत्यगाधेऽस्मिन् कुलाचलस्याप्यमग्नांशो न स्यादिति भावः । **अणुकुलाचलयो**श्च मिथः परिमाणगुरुत्ववैषम्येऽपि मज्जनेनादृश्यत्वमविशिष्टमित्यभिप्रायेण **को मज्जतोर्विशेष** इत्युक्तम् ॥ ८ ॥

**किं चैष शक्त्यतिशयेन न तेऽनुकम्प्यः स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।**
**तत्र श्रमस्तु सुलभो मम मन्दबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥** ९

न केवलमविशेषः स्तोतृषु, दैन्यातिशयेन शीघ्रं त्वदनुकम्पाफललाभान्ममैवाधिकारः प्रकृष्यत इत्यभिप्रायेणाह—**किं चेति** ॥ अत्राधिकारसद्भावेन सह तत्प्रकर्षस्समुच्चीयते । एष स्तोतेति भगवतस्स्तुतिवैमुख्यनिवृत्तिसाम्यात् प्रभूताल्पशक्त्योरेकराशित्वेनोपादानम् । स्तोतुस्सामर्थ्यातिशयः प्रायस्त्वत्कृपामान्द्यकारणमिति सूचयन्नाह—**शक्त्यतिशयेन न तेऽनुकम्प्य** इति । ते सर्वविद्भिर्वैदैस्सूरिभिश्च नित्यं स्तूयमानतया स्तुत्यन्तरनिरपेक्षस्य दीनानुकम्पनस्वभावस्य यथाधिकारं [illegible]पेक्षिणश्चेति भावः । केन तर्ह्यनुकम्पनीय इति शङ्कायां शक्त्यतिशयवैपरीत्यस्यैवानुकम्पातिशयहेतुत्वरूपं विशेषं सूचयति—**अपि त्विति** । **परिश्रमेण**—परितः श्रमेण, अशक्त्या भक्त्या च स्तोतुं हातुं चानर्हतया सर्वप्रकारव्याकुलत्वेनेति भावः । **तत्र**—तथा सतीत्यर्थः ; स्तुताविति वा । मम तु श्रमस्सुलभ इत्यन्वयः । **श्रमस्तु सुलभः** न तु शक्त्यतिशयप्रसङ्गः इति वाऽभिप्रेतम् । **मन्दबुद्धेः**—अल्पज्ञत्वादित्यर्थः । इतिशब्दो हेत्वर्थः उद्यमप्रकारपरो वा । **अयमुद्यमः** *स्तोष्यामि *स्तौमीति [illegible] । **मम च**—ममैवेत्यर्थः । अविरुद्धोऽप्यत्र समुच्चयार्थो मन्दः । ममेति कथिनपदा[illegible] हिरण्यगर्भादेरित्यतिशयितविधेयतात्पर्यादलङ्कार एव । त्वत्कटाक्षात्खल्वहं तुष्टूषुदशां तत्राधिकारातिशयं च प्राप्तः, एवमनुग्रहातिशयव्यञ्जकेनावलोकनदानेन भूयोऽपि मां पालय ; येन स्तुतिरियमविघ्ना निष्प[illegible]—**अब्जनेत्रेति** ॥ ९ ॥

**नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो ! भवितुमेव कुतः प्रवृत्तिः ।**
**एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥** १०

अथैवं यथामनोरथं तव सर्वसमीहितसिद्धिर्भवत्विति कटाक्षयन्तं भगवन्तं प्रति प्राचीनप्रभूतोपकारप्रख्यापनेनाद्यतनानुग्रहस्यानाश्चर्यतामाह—**नावेक्षस** इति ॥ अथवा अल्पशक्तेः स्वस्य स्तुत्यौचित्यातिशयवचनेन व्यञ्जितं भगवत आश्रितवात्सल्यं केनचित् कैमुत्येन स्थापयन्नेव सर्वशरण्यत्वोपयोगितया प्रपञ्चयिष्यमाणं सर्वस्मात् परत्वं कारणलक्षणेनोपक्षिपन् तद्वत् काष्ठाप्राप्तं सौलभ्यं चाह । अयमेव शारीरकशास्त्रारम्भघटितस्तोत्रारम्भः ॥

कारणत्वं नियन्तृत्वं सुहृत्त्वं स्वामिता हरेः । वात्सल्यमिति पञ्चैते कण्ठोक्ता इह सद्गुणाः ॥

अवेक्षणमिह *तदैक्षत *सोऽकामयतेत्यादिषूक्तः, *ईक्षतेर्नाशब्दम् *गौणश्चेन्नाऽऽत्मशब्दादित्यादिसूत्रस्थापि तस्सानुग्रहस्सङ्कल्पः । **ततः**—त्वदवेक्षणरूपहेत्वभावादित्यर्थः । **भुवनानी**ति कृत्स्नकार्यपरम् । **अमूनी**ति तत्तत्प्रमाण-

सिद्धभोक्तृभोग्यरूपकार्यजातानामन्याशक्यकरणवैचित्र्याभिप्रायम्: *यतो वा इमानि भूतानि, *जन्माद्यस्य यत इति श्रुतिसूत्रयोरिदंशब्दवत्। **नालं**—न समर्थानि, कारणाभावे कथं कार्यं स्यादिति भावः। **प्रभो**—स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेद!। **भवितुम्**—उत्पत्तुं सत्तायोगितया स्थातुं च। एवकारो भवनस्य परसङ्कल्पनैरपेक्ष्यशङ्कां वारयन् प्रवृत्त्यनर्हत्वे कैमुत्यमुद्धाटयति। एवमलब्धसत्ताकानां सत्तापूर्विका प्रवृत्तिश्च त्वदीक्षणमन्तरेण न स्यादित्याह—**कुतः प्रवृत्तिरि**ति। श्रूयते हि, *को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यादिति। अन्तर्यामिब्राह्मणादिकं सर्वमिहानुसन्धेयम्। उक्तं च स्वयमेव **मोक्षधर्मे** *यत्किंचिद्वर्तते लोके सर्वं तन्मद्विचेष्टितम्। अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहमिति। अत्र च परमकारणविषये विकल्पसमुच्चयान्यतरबाधाद्यसंभवात् गतिसामान्यन्यायेन कारणवाक्यानि सर्वाणि त्वय्येककण्ठानीति व्यतिरेकोक्त्या सूच्यते। कारणत्वोक्त्यैव *यो ब्रह्माणमित्यादिश्वेताश्वतरमन्त्रोक्तं शरण्यत्वमप्याकृष्टम्। **एवं**—भोगमोक्षार्थप्रवृत्त्यौपयिककरणकलेवरदानादिप्रकारेणेत्यर्थः। *स एकाकी न रमेतेत्यनेनाभिप्रेतं विश्वसृष्ट्युपयुक्तं दयमानमनस्त्वं सूचयति—**निसर्गसुहृदी**ति। सर्वसामान्यतः पूर्वोपकारप्रत्युपकारनिरपेक्षहितैषिणीत्यर्थः। सुहृत्त्वस्य नैसर्गिकत्वं *स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र रक्षणक्रियाया अपि स्वाभाविकत्वोक्त्याऽर्थसिद्धम्। अत्र प्रभुशब्देन सुहृच्छब्देन च *सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृदिति श्वेताश्वतरवाक्यं सूचितम्। **त्वयि**—न हि त्वदन्यः कश्चिदेवं प्रमाणसिद्ध इति भावः। सर्वजन्तोरित्येतत् काकाक्षिन्यायात्परत्राप्यन्वेति। *पतिं विश्वस्यात्मेश्वरम् *स कारणं करणाधिपाधिपः, *प्रधानक्षेत्रज्ञपतिर्गुणेशः, *पतिं पतीनां परमं परस्तात् *एष भूतपतिरेष भूतपाल इत्यादिषु प्रसिद्धं हि सर्वस्वामित्वम्। एतच्च सर्वेषां स्वार्थोपकारकत्वे सर्वस्य च तदिष्टविनियोगार्हत्वे हेतुः। **न चित्रं**—नाद्भुतम्। **इदं** स्तुतिवैगुण्यानादरेण स्तोतरि मयि प्रीतिरूपमित्यर्थः। स एष वात्सल्याख्यो गुणः सर्वाविशेषेण **कठवल्ल्यामुक्तः**—*अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सत इति। उपबृंहितं च *रिपूणामपि वत्सल इति। **इदमाश्रितवत्सलत्वं न चित्रम्**—संप्रतीह स्तोत्रे प्रेरयतस्तव मन्मुखोदितस्तुतिश्रवणेन जगद्व्यापारविहारस्सफलस्संपद्यत इति भावः। अत्र स्तुतिवैमुख्यनिवर्तनादिलब्धविजयसन्तोषभगवदुक्तिप्रत्युक्तिरूपताऽप्याचार्योक्ता। तथा हि वेत्थ यथा मम त्वयि वात्सल्यं यथा च मुग्धभाषिते पित्रोरिव मे भवन्मुखागतस्तुतिवचनश्रवणकौतूहलमिति वदन्तं प्रत्याह—**नावेक्षस** इति॥ १०॥

**स्वाभाविकानवधिकातिशयेशितृत्वं नारायण! त्वयि न मृष्यति वैदिकः कः।**
**ब्रह्मा शिवश्शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते॥ ११॥**

ननु *हिरण्यगर्भस्समवर्तताग्रे *न सन्न चासच्छिव एव केवलः *इन्द्रो मायाभिः पुरुरूप ईयते इति ब्रह्मादीनाम्, मुक्तस्य च *यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठतीति सर्वजगत्कारणत्वं प्रतीयते। तदेतत् कथं परब्रह्मलक्षणम्? कथंच तद्योगात्परमपुरुषस्य सर्वस्वामित्वादि? तत्राह—**स्वाभाविकेति**॥ स्वाभाविकत्वमिहानन्याधीनत्वम्, तेन कर्मोपाधिकदुःखमिश्रानित्यचतुर्मुखाद्यैश्वर्यव्यावृत्तिः। अनवधिकातिशयत्वमुत्कृष्टावधिरहितोत्कर्षवत्त्वम्, *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र परत्वस्वाभाविकत्वे शक्त्यादिषु सर्वेष्वन्विते इति भावः। एताभ्यामेव परिमितं पराधीनं च मुक्तनित्यैश्वर्यमपि व्यवच्छिद्यते। ईदृशमीशितृत्वं हि तवैव। विश्वपतित्वात्मेश्वरत्वादिश्रुतेः, *प्रशासितारं सर्वेषाम् *शास्ता विष्णुरशेषस्येत्यादिस्मृतिशतैश्च। स्वयं च गीतं *मत्तः परतरं नान्यदिति।

*एष धाता विधाता च सर्वेषां प्राणिनां प्रभुः । परं हि पुण्डरीकाक्षान्नभूतं न भविष्यतीत्यादि च द्रष्टव्यम् । अत्र नारायणेत्यनेन कारणवाक्येष्वन्यार्थशङ्कागोचराणां सदसदव्याकृतब्रह्मात्महिरण्यगर्भशिवाकाशप्राणादिशब्दानां कयाचिद्वृत्त्याऽनन्यपराबाधितार्थसात्त्विकोपबृंहणानुगुणमहोपनिषन्मैत्रायणीयसुबालोपनिषदादिपठितनारायणशब्दोदितमहापुरुषविषयत्वं केवलतत्त्वनिर्णयप्रवृत्तनारायणानुवाकतात्पर्येण भगवत एव सर्वपरविद्यावेद्यत्वं तत्रत्यतत्तच्छब्दवाच्यत्वं च प्रकाश्यते । अस्य च नाम्नो निरुक्तिभेदैश्शारीरकाध्यायचतुष्टयविवक्षितकारणत्वनिर्बाधत्वोपायत्वप्राप्यत्वानि भाव्यानि । एवमासतमानेकस्मृतिवचनानि चानेन प्रत्यभिज्ञाप्यन्ते । तत्र तावन्मनुः *आसीदिदं तमोभूतमित्यारभ्य, *आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् । तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यत इति । **बृहस्पतिः**—*नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् । अण्डाद्ब्रह्मा समभवत्तेन सृष्टमिदं जगदिति । **दक्षः**—*ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनरिति । **व्यासः**—*आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदेति । *नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमामिति च **वैशम्पायन**वाक्यम् । ईदृशानि वचनशतानि विस्तरभयान्न लिख्यन्ते ।

**त्वयि** *सर्वे वेदा यत्पदमामनन्ति, *सर्वे वेदा यत्रैकं भवन्ति, *नतास्स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती, *वेदैश्च सर्वैरहमेव वेद्यः, *वेदे रामायणे चैव भारते भरतर्षभ! । आदौ मध्ये तथा चान्ते विष्णुस्सर्वत्र गीयते, *नारायणपरा वेदा इत्यादिभिस्सर्ववेदवेद्यतया प्रसिद्धे पूर्वोक्तसर्वकारणत्वसर्वस्वामित्वादिलक्षणे । **न मृष्यति**—न सहते । **वैदिकः**—वेदप्रमाणक इत्यर्थः । *वेदैः पश्यन्ति ब्राह्मणाः, *पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनम् । श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते इति हि स्मर्यते । वैदिकशब्देन *सर्वे वेदास्सपितरो ब्रह्माद्याश्चाण्डमध्यगाः । विष्णोस्सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिरिति **वाराह**वचनम्, *वेदवेद्यो हि भगवान् वासुदेवस्सनातनः । गीयते स परो वेदैर्यो वेदैनं स वेदविदिति **कौर्म**वचनं च सूच्यते । अत्र चोत्तरेषु वाक्येषु च किंशब्दः क्षेपार्थः । वैदिकः को न मृष्यतीत्यनेन भगवत्पारम्यमसहमानस्य वेदबाह्यतया पापिष्ठत्वं व्यज्यते । यथोक्तं **प्राजापत्यस्मृतौ**—*नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् । योऽन्यमर्चयते देवं परबुद्ध्या स पापभागिति । **महाभारते** तीर्थरक्षकपिशाचवाक्यं—*ये द्विषन्ति महात्मानं न स्मरन्ति च केशवम् । न तेषां पुण्यतीर्थेषु गतिस्संसर्गिणामपीति । **सप्तर्षिसंवादे** *विष्णुं ब्रह्मण्यदेवेशं देवदेवं जनार्दनम् । त्रैलोक्यस्थितिसंहारसृष्टिहेतुं निरञ्जनम् ॥ आधातारं विधातारं सन्धातारं जगद्गुरुम् । विहाय स भजत्यन्यं बिसस्तैन्यं करोति य इति । **भगवद्गीतास्**वासुरान् प्रक्रम्य *अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्विति । **ब्रह्माण्डकौर्मयोश्च** *येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृता इति । **श्रीभागवते** भगवन्तं प्रस्तुत्य *अस्मादन्यं परत्वेन चेतयानो ह्यचेतनः । स पाषण्डीति विज्ञेयः सर्वकर्मबहिष्कृत इति, *यस्तु नारायणं देवं समत्वेनाभिमन्यते । स तु तेनावमानेन नरकान्नातिवर्तत इति च । *ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् । ते वै पाषण्डिनो ज्ञेया नरकार्हा नराधमाः, *यः पुत्रः पितरं द्वेष्टि तं विन्द्यादन्यरेतसम् । यो विष्णुं सन्ततं द्वेष्टि तं विन्द्यादन्त्यरेतसम्, *विष्णुभक्तिविहीनो यस्सर्वशास्त्रार्थवेद्यपि । ब्राह्मण्यं तस्य न भवेत्तस्योत्पत्तिर्निरूप्यताम्, *चतुर्वेद्यपि यो विप्रो वासुदेवं न विन्दति । वेदभार-

भराक्रान्तस्स वै ब्राह्मणगर्दभ इत्यादीनि द्रष्टव्यानि। अस्मिन्**नारायणानुवाके** * विश्वमेवेदं पुरुष इति पूर्वोक्तसमानन्यायतया * स ब्रह्मा स शिवस्सेन्द्र इत्यादिसामानाधिकरण्येन ब्रह्मादीनां विभूतित्वश्रवणात् त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरपक्षाणां प्रतिक्षेपस्सिद्ध इत्यभिप्रायेणाह—**ब्रह्मा शिव** इति। अनीश्वरतया सर्वसम्प्रतिपन्नेन्द्रादिसमभिव्याहारादबाधाच्च ब्रह्मशिवयोरनीश्वरत्वं सूच्यते। शतमखशब्दः कर्मवश्यत्वप्रसिद्धिख्यापनार्थः। अत्र चानुवाके तत्तत्कारणोपासनपरवाक्यपठिताश्शिवशम्भ्वादिशब्दाः नारायणविषया इति ज्ञापयितुं * नारायणपरं ब्रह्मेत्यादिभिस्तत्तदनुवादेन नारायणत्वविधानभूयस्त्वं सूचितम्। सूत्रितं च * लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपीति। * हिरण्यगर्भस्समवर्तताग्र इति वाक्यं तु * अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टाविति श्रुत्यैवानुवाकान्तरसंयोजनात् पुरुषसूक्तैकार्थोत्तरानुवाकप्रतिपाद्यमहापुरुषविषयम्। अत एव ऐन्द्रीन्यायादत्र हिरण्यगर्भशब्दः कयाचिदवयवशक्त्या भगवति वर्तते। * शिव एव केवल इत्यत्र शिवशब्दोऽपि * यदा तमस्तन्न दिवा न रात्रिरित्यनुवादान्वयात् सुबालोपनिषदुपदिष्टतमोमृत्युशब्दवाच्यप्रकृत्यधिष्ठातृभूतनारायणविषयः, शुद्धिमाङ्गल्यादावपि रूढश्चासौ, प्रयुक्तश्च भगवति * शाश्वतं शिवमच्युतमिति। * एक एव रुद्र इत्यादेस्तु प्राकरणिकहविरुद्देश्यत्वाकारपरतया न पारम्योपपादकत्वम्। * इन्द्रो मायाभिरित्यत्रेन्द्रशब्दश्च * तमिन्द्रं सन्तम् इन्द्र इत्याचक्षते परोक्षेणेति ब्राह्मणोक्त्या सर्वदर्शिपरमात्मविषयः। प्रसिद्धेन्द्रपरत्वेऽपि नात्र सर्वकारणत्वकण्ठोक्तिः; नच तत्क्लृप्तिः, पुरुरूपत्वादेरन्यथाऽप्युपपत्तेः। * न किरिन्द्र! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्नित्यत्र तु प्राकरणिककर्मविशेषौपयिकप्रशंसापरत्वाद्वस्वादिषु त्वदुत्तरो नास्तीति विवक्षितम्। स्वराट्छब्द इह * स स्वराड्भवतीत्याम्नातमुक्तविषयः; स च स्वातन्त्र्यवाचकोऽप्यत्राकर्मवश्यत्वपरः, ईश्वरशरीरभूतानामात्मनां तत्पारतन्त्र्यस्य यावत्स्वरूपभावित्वात्, परतन्त्रस्यापि सत्यसङ्कल्पत्वमिच्छाविफलत्वाभावादुपपद्यते। तेन * सङ्कल्पादेव तच्छ्रुतेः, * अत एव चानन्याधिपतिरिति सूत्रद्वयमप्यविरुद्धम्। मुक्तस्यैश्वर्यं * जगद्व्यापारवर्जमिति शारीरकान्ते स्थापितम्। परमत्वमिह ब्रह्माद्यपेक्षया; तच्चाकर्मवश्यस्य ज्ञानसङ्कोचादिरूपक्षरणविरहादित्यक्षरशब्देन दर्शितम्। * ब्रह्म वेद ब्रह्मैव भवतीत्यादिकमपि * परमं साम्यमुपैति, * मम साधर्म्यमागता इत्यादिश्रुतिस्मृत्यनुसारात् * वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयतीत्यादिवत्तत्साम्याभिप्रायमेव। तस्य च सङ्कल्पात्स्वाभिमतसृष्टिः परेच्छानुगुण्येन परिमितविषया। सर्वलोकानुसञ्चरणश्रुतिश्च न जगद्व्यापारार्था। **इति**शब्द इह * स ब्रह्मा स शिव इत्यादिवाक्योपात्तप्रकारसूचनार्थः। **एते**—प्रजापतिपशुपतिसुरपतिप्रसिद्धिमन्तः। ततोऽप्यधिको मुक्तश्च। **अपि**शब्दस्तेषां तत्तत्प्रमाणसिद्धमहत्त्वे सत्यपीति द्योतयन् ततोऽर्वाचीनेषु कैमुत्यं व्यनक्ति। **यस्य ते**—* तं दुर्दर्शं गूढमनुप्रविष्टं, * यत्तदद्रेश्यमग्राह्यमित्यादिष्वदृश्यत्वादिगुणकतया प्रसिद्धमपि स्वात्मानं धनञ्जयधृतराष्ट्रादेरिव कृपया मे प्रकाशयत इति भावः। महिम्नोऽर्णवत्वरूपणमक्षयत्वापारत्वादिसूचनार्थम्। **महिमार्णवविप्रुषः**—अर्णवस्थानीयत्वन्महिमापेक्षया पृषतस्थानीयमहिमान इत्यर्थः; यद्वा अनन्तविभूतेस्तव विभूतिरूपमहिमसमुद्रबिन्दव इति। तदेतदुक्तमद्वितीयश्रुतिव्याख्यानमुखेन **संवित्सिद्धौ**—* यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले। इति तत्तुल्यनृपतिनिवारणपरं वचः॥ न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम्। तथा सुरासुरनरब्रह्माण्डायुतकोटयः॥ क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः। ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः। विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुष इति। ब्रह्मादीनां च सृष्ट्याद्युपयुक्तविभूतित्वं वक्ष्यति। तदिह * स ब्रह्मेत्यादिसामानाधिकरण्यमपि न स्वरूपैक्यादिप्रयुक्तम्, किंतु शरीरशरीरिभावनिबन्धनमिति सूचितं भवति। किं च * अग्निर्वै

देवानामवमो विष्णुः परम इति होतारोऽधीयते । *अग्निरवमो देवतानां विष्णुः परम इत्यध्वर्यवः । तथा *तद्ब्रह्म स आत्मा अङ्गान्यन्या देवता इति च । एतच्चोपबृंहितं *श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपि च । नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥ नारायणस्य चाङ्गानि सर्वदैवानि चाभवन् । अन्यानि सर्वदैवानि तस्याङ्गानि महात्मन इति । अतश्च ब्रह्मादीनां भगवद्विभूतिसागरशीकरत्वं सिद्धमिति ॥ ११ ॥

**कश्श्रीः श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः ।**
**कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥** १२

अथ स्यात्—*हिरण्यगर्भस्समवर्ततेत्यादेः *अद्भ्यस्संभूत इत्यादिनैकार्थ्येऽपि तत्रैव चतुर्मुखनारायणप्रजापति-शब्ददर्शनात्पुरुषशब्दस्य तु साधारण्येन चतुर्मुखेऽपि संभवात् *अम्भस्यपार इत्यत्रापि *प्रजापतिश्चरति गर्भे अन्तः, *स नो बन्धुर्जनिता स विधाता, *सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति प्रजापत्यादिशब्ददर्शनात्त्रितयमप्येतच्च-तुर्मुखविषयमिति । अत्र तावत् *न ब्रह्मा नेशान इत्यादिव्यक्त्यन्तरनिषेधसहितविशेषश्रुत्या बाधप्रदर्शनान्न वक्तव्यशेष-मस्ति । अथापि ब्रूमः—*अम्भस्यपार इत्यत्र तावत् *यमन्तस्समुद्रे कवयो वयन्तीति समुद्रशायित्वं, *यदेकमव्यक्त-मनन्तरूपं विश्वं पुराणं तमसः परस्तादिति तमसः पारवर्तित्वं, *सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति विद्युद्वर्णपुरुष-त्वं, *स आपः प्रदुघे उभे इमे इत्यादिभिर्विचित्रजगत्कारणत्वं, *य एनं विदुरमृतास्ते भवन्तीति मोक्षप्राप्तिहेतुत्वं, *विश्वतश्चक्षुरुत विश्वतोमुख इत्यादिना सहस्रशीर्षत्वादिकं च प्रत्यभिज्ञायमानमस्यानुवाकस्य पुरुषसूक्तोदितमहापुरुष-गोचरतां गमयति । प्रसिद्धप्रजापतेः परमपुरुषकार्यत्वतन्नियाम्यत्वकर्मवश्यत्वादिकं च प्रसिद्धम् । अतोऽत्र प्रजापत्यादि-शब्दाः परमकारणभूतं नारायणमेव प्रतिपादयन्ति । एवम् *अद्भ्यस्संभूत इत्यनुवाकस्यापि पुरुषसूक्तप्रकरणाविच्छेदात् *वेदाहमेतं पुरुषं महान्तमित्यादिवाक्यार्थप्रत्यभिज्ञानाच्च महापुरुषविषयत्वं सुगमम् । तमिममर्थमनन्यथासिद्धेन लक्ष्मी-पतित्वलिङ्गेन द्रढयति—**कश्श्रीः श्रिय** इति ॥ अत्र त्वदन्य इति वक्ष्यमाणमनुसन्धेयम् । *श्रियः श्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमाक्षमेत्युक्तनिरुक्ताभिप्रेतम् । श्रीरेव ह्यन्येषामतिशयं विधत्ते, तस्या अपि *भर्ता नाम परं नार्या भूषणं भूषणा-दपीतिन्यायेनातिशयहेतुरयमिति भावः । **नारायणमुनि**भिस्त्वेवमिह व्याख्यातम्—*स्वेतरसमस्तैः स्वरूपस्थितिप्रवृत्त्यर्थं या श्रीयते सा श्रीः, तस्या अपि तथा श्रयणीय इति । श्रीशब्दनिरुक्तयश्च—*शृणाति निखिलान् दोषान् श्रीणाति च गुणै-र्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥ श्रयन्तीं श्रीयमाणां च शृण्वतीं शृणतीमित्यादिषु द्रष्टव्याः । श्रिय इत्यनेन *ह्रीश्च ते लक्ष्मीश्च पत्न्यावित्याम्नातलक्ष्मीशब्दपर्यायोपादानम् । अत्र ह्रीरिति भूमिर्विवक्षिता ; *श्रीभूमिस-हितं हरिमित्यादिप्रसिद्धेः । **वाजसनेयके** तु ह्रीशब्दस्थाने श्रीशब्दपठनेऽपि यथोचितमर्थो ग्राह्यः ; तदिह पुरुषसूक्त-प्रकरणोदितश्रियःपतित्वलिङ्गसहकृतमहापुरुषप्रत्यभिज्ञानबाधितरूढिः प्रजापतिशब्दः *पतिं विश्वस्येत्युक्तपुष्कलावयवार्थं नारायणमेवाभिधत्त इति भावः । प्रयुक्तश्चासौ तद्विषयतया **महाभारते**—*राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीमस्स पिता स प्रजापतिरिति । *सप्तदश प्राजापत्यान् पशूनित्यादौ च । *श्यामा एकरूपा भवन्ति एवमिव हि प्रजापतिरिति प्रजापतेः श्यामत्वैकरूपत्वोक्त्या प्रजापतिशब्दस्य विष्णुविषयत्वं गम्यते । *आश्रावयेति चतु-रक्षरमित्यारभ्य *एष वै सप्तदशः प्रजापतिरित्येतस्य च विष्णुविषयत्वं, *चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदत्विति **महाभारतवचनेन** व्यञ्जितम् । ननु पुरुषसूक्तस्य कथं भगवत्परत्वम् ?

पुरुषशब्दो हि *स वा एष पुरुषोऽन्नरसमयः, *प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीत्यादिषु तदतिरिक्तेऽपि प्रयुज्यते। सत्यम्, निखिलजगत्कारणविषयस्त्वयं पुरुषशब्दः परमपुरुषमेवाह। *पुरुषस्य हरेस्सूक्तं स्वर्ग्यं धन्यं यशस्करमिति च स्मर्यते। **मोक्षधर्मे** च परमपुरुषविषयतयैव पुरुषसूक्तं योजितम्—*इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते। ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितमित्यादिना। **व्यासस्मृतौ** चेदं भगवदर्चने विनियुक्तम्—*न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्। तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्॥ तद्विष्णोरितिमन्त्रेण सूक्तेन पुरुषेण तु। नैवाभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि॥ निवेदयीत स्वात्मानं विष्णावमलतेजसि। तदात्मा तन्मनाश्शान्तस्तद्विष्णोरिति मन्त्रतः॥ इति। **शौनकीये** कल्पे च *शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम्। प्र वः पातन्तमन्धस इत्यर्धर्चस्य विधानतः॥ इति प्रक्रम्य *आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तममित्यादिना प्रत्यृचमुपचारभेदेषु विनियोगः कृतः। एवं भगवच्छास्त्रादिष्वपि द्रष्टव्यम्। किंच **आथर्वणे** अष्टादशमहाशान्तिप्रकरणे तत्तद्देवताविषयमहाशान्तिषु *वैष्णव्यां पुरुषसूक्तमिति विनियोगो दृष्टः। एवं *सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते *सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन पराञ्चोऽनुशंसन्तीति कल्पसूत्रकारवाक्याच्च नारायणविषयत्वमस्य सिद्धम्। तत्रतत्र परमपुरुषसन्निधानबुद्ध्या तेन तत्तदुपस्थानं युज्यते। अत्र नारायणस्य ऋषित्वेन पुरुषस्य च देवतात्वेन संबन्धस्तावत्सर्वसंमतः। तत्र नारायणपुरुषशब्दयोरेकविषयत्वं *सहस्रशीर्षं देवमित्यारभ्य *विश्वमेवेदं पुरुष इति नारायणानुवाकोक्त्या सिद्धम्। तथा **सुबालोपनिषदि** *चक्षुश्च द्रष्टव्यं च नारायण इत्यादिभिर्नारायणस्य सर्वात्मकत्वं प्रतिपाद्य *पुरुष एवेदँ सर्वमिति पुरुषसूक्तवाक्येन निगमनान्नारायण एव पुरुषसूक्तप्रतिपाद्य इति निश्चीयते। तदिह पुरुषशब्दः पुरुषोत्तमविषयः। तथा च पौराणिकं वचः—*भगवानितिशब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने॥ इति। एवं *ब्रह्मा कमलगर्भाभो रुद्रः कालाग्निसन्निभः। पुरुषः पुण्डरीकाभो रूपं तत्परमात्मनः॥ इति त्रयाणां रूपभेदवचनेन प्रत्येकनामोक्तौ ब्रह्मरुद्रव्यावृत्ते परमात्मशब्दोदिते भगवति पुरुषशब्दस्समाख्यारूपेण प्रयुक्तः। *पुरुषः पुण्डरीकाक्ष इति पाठेऽपि न प्रस्तुतविरोधः। अधीयते च **तैत्तिरीयाः** प्रजापतिजनककूर्मविषये *पूर्वमेवाहमिहाऽसमिति तत्पुरुषस्य पुरुषत्वमिति। अनन्तरं *सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपाद्भूत्वोदतिष्ठदिति पुरुषसूक्तारम्भस्तत्र प्रत्यभिज्ञायते। अस्त्वेवम्; तथाऽपि महेश्वरशिवादिशब्दलिङ्गशालिन्यां **श्वेताश्वतरोपनिषदि** *वेदाहमेतमित्यादिवाक्यदर्शनाद्रुद्रेऽपि पुरुषशब्दाम्नानाच्च पुरुषसूक्तस्यापि तद्विषयत्वं स्यादित्यत्राऽह—**परमसत्त्वसमाश्रयः क** इति॥ परमस्य मोक्षोपयुक्तप्रकर्षवतः सत्त्वस्य प्रकाशसुखहेतुभूतगुणविशेषस्य समाश्रयः सम्यक् प्रवर्तकः त्वदन्यः क इत्यर्थः। एतेन सांसारिकज्ञानसुखहेतुभूतपरिमितसत्त्वव्यवच्छेदः। अयं भावः—पुरुषसूक्तं तावत्परमपुरुषविषयतया स्थापितम्। तत्रत्यवाक्यप्रत्यभिज्ञानादेव श्वेताश्वतरोपनिषदि शिवमहेश्वरादिशब्दानामपि महापुरुषपरत्वमेव युक्तम्। अनन्यथासिद्धं च लिङ्गं तत्रतत्र दृश्यते। *महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तक इति नारायणस्यैव सत्त्वप्रवर्तकत्वं ब्रह्मरुद्रयोश्च रजस्तमःप्रवर्तकत्वं श्रुत्यादिप्रसिद्धम्। यथा **मैत्रायणीयोपनिषदि** *अथ यो ह खलु वा अस्य राजसोंऽशस्सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा अथ यो ह खलु वा अस्य सात्त्विकोंऽशस्सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः अथ यो ह खलु वा अस्य तामसोंऽशस्सोऽसौ ब्रह्मचारिणो योऽयं रुद्र इति। पुराणे च **वाराहे** अगस्त्यरुद्रसंवादे रुद्रः—*यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम्। सत्त्वं रजस्तमश्चेति त्रितयं चैतदु-

च्यते ॥ सत्त्वेन मुच्यते जन्तुस्सत्त्वं नारायणात्मकम् । रजसा सत्त्वयुक्तेन भवेच्छ्रीमान्यशोधिकः ॥ तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते । यद्वेदबाह्यं कर्म स्यात् न तद्दिष्टोपकोच्यते ॥ तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणाम् । यद्धीनतपसा युक्तं केवलं तामसं तु यत् ॥ तद्दुर्गतिप्रदं नृणामिह लोके परत्र चेति । **लैङ्गे** चतुर्दशाध्याये—* हिरण्यगर्भो रजसा तमसा शङ्करस्स्वयम् । सत्त्वेन सर्वगो विष्णुस्सर्वात्मा सदसन्मयः ॥ इति । तत्रैव चतुर्विंशे क्षुपास्यतपसि— * त्वत्कोपसंभवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥ त्वत्स्वरूपात्स्वयं विष्णुस्सत्त्वेन पुरुषोत्तमः ॥ इति । तदनन्तरे चाध्याये नन्दिकेश्वरवचनम्—* परमात्मानमीशानं तमसा रुद्ररूपिणम् । रजसा सर्वलोकानां सर्गलीलाप्रवर्तकम् ॥ सत्त्वेन सर्वभूतानां स्थापकं परमेश्वरम् । सर्वात्मानं महात्मानं परमात्मानमीश्वरम् ॥ तं दृष्ट्वा प्राह वै ब्रह्मा भगवन्तं जनार्दनमिति । एवं पुराणान्तरेषु । **भगवच्छास्त्रादि**ष्वपि * सात्त्विकैस्सेव्यते विष्णुस्तामसैरेव शङ्करः । राजसैस्सेव्यते ब्रह्मा सङ्कीर्णैस्तु सरस्वतीत्यादीनि द्रष्टव्यानि । साधारणे च **शिल्पशास्त्रे** विमानत्रयलक्षणे पठ्यते । * स्यान्नागरद्राविडवेसरं च क्रमेण वै सत्त्वरजस्तमांसि । महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आदिदेव इति । अथवाऽत्र परमसत्त्वमिति * स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणमित्युक्तं शुद्धसत्त्वमयमप्राकृतं द्रव्यमिति विवक्षितम् । तेन ब्रह्मरुद्राद्यगोचररहस्याम्नायभगवच्छास्त्रादिप्रसिद्धकल्याणतमविग्रहादियोगात्तेभ्यः परत्वं सूच्यते । नित्येऽप्युक्तं * परमसत्त्वं पञ्चशक्तिमयविग्रहमिति । उभयथाऽपि सत्त्वप्रवर्तकत्वोक्तिः श्वेताश्वतरोपनिषदः पुरुषसूक्तोदितपरमपुरुषविषयत्वमवगमयति । वक्तव्यान्तरं चात्र **वेदार्थसंग्रहादिषु** द्रष्टव्यम् । ननु च पुरुषसूक्तोदितमादित्यवर्णं पुरुषमेवादित्यमण्डले तादृशवर्णयुक्ततया **छन्दोगा** अधीयते * य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादिना । स च स्थानविशेषसन्निधिसामर्थ्यादादित्य एव । स एव च रुक्मवर्णः पुरुषो **मनुना** स्मर्यते । * प्रशासितारं सर्वेषामणीयांसमणीयसाम् । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परमिति । * असावादित्यो ब्रह्मेति चाध्वर्यवः । अस्ति च तत्परं पुराणम्, अतः पुरुषसूक्तमादित्यपरम् । स एव च ब्रह्मेत्यत्रानन्यपरकारणश्रुतिभिः श्रियःपतित्वलिङ्गेन पुरुषशब्दादिभिरुपबृंहणैश्च दत्तोत्तरत्वेऽपि युक्तिभूयस्त्वख्यापनायानूक्तं छान्दोग्यस्थं सुप्रसिद्धं लिङ्गमाह— **कः पुण्डरीकनयन** इति । अयमभिप्रायः—* तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इति तत्रैव पुण्डरीकनयनत्वोक्तेः पुरुषोत्तमस्यैव च तत्प्रसिद्धेर्न तत्रादित्यो वाऽन्यो वा तादृशश्शङ्कनीयः । यद्यपि **द्रमिडभाष्ये** * तस्य यथा कप्यासमित्यादेष्षडर्थाः प्रोक्ताः ; तथाऽप्यौचित्यात्त्रय एव स्वीकर्तव्याः । तथा चोक्तं **वेदार्थसंग्रहे**—* गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण इति । एतेन परिपूर्णत्वमनुग्रहशीलत्वं चास्य व्यज्यते । **उपरिचराख्याने** च * अरोषणो ह्यसौ देव इत्युक्तम् । अन्येषां तु चतुर्मुखादित्यरुद्रादीनामपूर्णतया साधकावस्थत्वात् कामक्रोधाक्रान्तत्वाच्चाक्षीणि विरूपाणि भवन्ति । सन्निधिविशेषश्चादित्यमण्डले भगवतस्सावित्रीकल्पेषु पुराणादिषु च प्रसिद्धः । आदित्यस्य च, * चक्षोस्सूर्यो अजायत * सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, * अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ, * यस्यादित्यो भामुपयुज्य भाति, * येन सूर्यस्तपति तेजसेद्धः, * न तत्र सूर्यो भाति न चन्द्रतारकम्, * यस्यादित्यश्शरीरमित्यादिभिरनीश्वरत्वं सिद्धम् । तद्वैभवप्रतिपादनपरं तु पुराणमसात्त्विकत्वात् विरुद्धांशे त्याज्यम् । कचिद्ब्रह्मदृष्ट्या तत्पर्यन्ततत्त्वविवक्षया वा निर्वाहः । एवं परमकारणविषयश्रुतिविशेषैः श्रियःपतित्वादिलिङ्गैश्च नारायण एव स्वतस्सिद्धैश्वर्यस्सर्वस्मात्पर इति निश्चितेऽपि केचिदनधिगतपदवाक्यप्रमाणवृत्तान्ताः पुरुषसमाख्यामीश्वरसमाख्यां च निर्विशे-

षणां महत्परमविशेषणविशिष्टां च परामृश्य ब्रह्मणः पितुः ब्रह्मणः पुत्रस्य च निकर्षोत्कर्षौ मन्यन्ते । तानुपालभते— **पुरुषोत्तमः कः** इति । इह च * द्वाविमौ पुरुषौ लोक इत्यादयः श्लोकाः प्रतिसन्धेयाः । तेषु * परमात्मेऽत्युदाहृत इत्यनेन * तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित इति श्रुतिस्स्मार्यते । * यो लोकत्रयमाविश्येत्यनेन * यच्च किंचिदित्यादिकं व्याख्यातम् । बिभर्तीत्याधारत्वोक्त्या * यत्र विश्वं भवत्येकनीलम्, * तत्सवितुर्वरेण्यम्, * ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम, * एष सेतुर्विधरण एषां लोकानामसंभेदायेत्यादेरर्थ उक्तः । अव्ययशब्दोक्त्या * शाश्वतं शिवमच्युतमित्याद्युक्तसंग्रहः । ईश्वरशब्द इह * व्याप्य नारायण स्थित इत्युक्तव्याप्तेः *अन्तः प्रविष्टश्शास्तेत्याद्यनुसारात् समस्तनियमनविशिष्टत्वम् * आत्मेश्वरमित्युक्तानन्यनियाम्यत्वं चाभिप्रैति । * न चापि वेदेषु समाननामेत्यल्पश्रुतोक्तिः * लोके वेदे च प्रथित इति व्यासोपात्तभगवदुक्त्या परिहसनीया । अत्र च **भगवद्गीताभाष्यम्**—* वेदार्थावलोकनात् लोक इति स्मृतिरिहोच्यते; श्रुतौ स्मृतौ चेत्यर्थः; श्रुतौ तावत् * परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, * स उत्तमः पुरुष इत्यादौ; स्मृतावपि * अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोरित्यादौ—इति । * स उत्तमः पुरुष इति श्रुतौ पुरुषोत्तमत्वं फलितमिति भावः । तदयमिह त्वदन्यः कः पुरुषोत्तम इति वदतोऽभिप्रायः— यदि वयं पुरुषोत्तमसमाख्यामात्रेण भगवत ईश्वरत्वं साधयामः, तदा ईश्वरादिसमाख्याबलेन प्रत्यवस्थातव्यम्; अस्माभिस्तु प्रबलैः श्रुतिलिङ्गादिभिरेव ह्ययमर्थस्साधितः; तथा सति जीवलक्षणपुरुषराशिबहिर्भूत एवायं महापुरुषस्सर्वत्र प्रसिद्धः; ततः प्रबलप्रमाणबाधितेयमीश्वरादिसमाख्या रुद्रस्य सर्वेश्वरत्वं साधयितुं न शक्नोति; अन्यथा इन्द्रसमाख्यैव निर्विशेषणा शतमखस्य परमेश्वरत्वं साधयेत्, * इदि परमैश्वर्ये इति धात्वर्थपाठात् । महत्त्वविशेषिता तु किं पुनः? ततश्च—महावृक्षसमाख्येव बलवन्मानबाधिता । महेश्वरमहेन्द्रादिसमाख्याऽप्यत्र निष्फला ॥

पुरुषोत्तमसमाख्या त्वनधिगतशब्दानुशासनादिवृत्तान्तैः कैश्चित्केवलरूढेत्युक्तम्—* रूढ्या तु कामं पुरुषोत्तमोऽस्त्विति । तत्र यद्यपि कर्मधारयवृत्तौ * सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरित्युत्तमशब्दस्य पूर्वनिपातः; न च निर्धारणे षष्ठ्यास्समासः; तथाऽपि * सप्तमी शौण्डैरित्यत्र योगविभागग्रहणादत्र निर्धारणेऽपि सप्तमीसमासस्स्यात्; शैषिकषष्ठी वा नीचोत्तमभावसंबन्धावलम्बिनी द्विपदविग्रहवत्स्वपदविग्रहदर्शितार्था समस्येत । नागोत्तमादिशब्दाश्च शब्दविद्भिरेवं निरूढाः । *यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम इति **गीतानुसारे** तु पञ्चमीसमासः प्रस्पष्टः । अत्र पञ्चमीषष्ठीसमासयोः पुरुषशब्दो बद्धमुक्तावस्थजीवमात्रपरः । * द्वाविमौ पुरुषौ लोके इत्यादिभिश्चैतत्सुगमम् । अतः श्रुतिलिङ्गाद्यबाधितया तदनुगृहीतया गीतानिरुक्तया पुरुषोत्तमसमाख्ययाऽपि पुरुषसूक्तोदितसर्वकारणपुरुषस्य परमात्मत्वसर्वव्यापनभरणनियमनस्वाम्यादिकं तदन्येषामधमत्वं च सिध्यति । इदं च * क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्, * सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते, * नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणस्स्मृतः ॥ इत्यादिभिर्निरुक्तानां समाख्यान्तराणां प्रदर्शनम् । * अजस्सर्वेश्वरस्सिद्ध इति **व्यास**पठिता सर्वेश्वरसमाख्या च महेश्वरादिसमाख्यामधःकरोति । ननु तिष्ठतु समाख्या; लिङ्गं तु पुरुषसूक्तप्रतिपाद्यस्य चतुष्पात्स्वरूपं परिच्छिन्नत्वमपरिच्छिन्नतयाऽऽम्नातात् परतत्त्वादवरतां गमयेदिति व्योमातीतवादिन आहुः । तन्निरासाय ब्रह्मरुद्रादीनामन्येषां च सर्वव्यापकपरमपुरुषैकदेशवर्तित्वं ख्यापयति—**कस्यायुते**ति । त्वदन्यस्य कस्येति योज्यम्; *यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता । मेरोरिवाणुर्यस्यैतद्ब्रह्माण्ड-

मखिलं मुने, * मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्, * पश्यामि देवां-स्तव देव! देहे सर्वांस्तथा भूतविशेषसङ्घान्। ब्रह्माणमीशं कमलासनस्थमित्यादिभिर्भगवत्स्वरूपैकदेशे विग्रहैकदेशे च विश्वस्थितिरुच्यते । अतो विष्णोरेव सर्वव्यापित्वं रुद्रादेश्च तदेकदेशवर्तित्वं सिद्धम् ॥

तपसा तोषितेनैव विश्वरूपेण विष्णुना । स्वपार्श्वे दक्षिणे शम्भोः निवासः परिकल्पितः ॥

एवं स्वविग्रहांशेषु तदन्या अपि देवताः । निरङ्कुशस्वतन्त्रेण श्रीधरेण निवेशिताः ॥

पुरुषसूक्तेऽपि * पुरुष एवेदं सर्वमित्यादिभिरपरिच्छिन्नत्वं सिद्धम् । तत्रतत्र परिच्छिन्नत्वोक्तीनां तु * अर्भकौ-कस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च, * अभिव्यक्तेरित्याश्मरथ्यः, * अल्पश्रुतेरिति चेत्तदुक्तम्, * हृद्यपेक्षया तु मनुष्याधिकारत्वात्, *बुद्ध्यर्थः पादवत्, *अनेन सर्वगतत्वमायामशब्दादिभ्य इत्यादिभिस्सूत्रैस्तदुपा-ध्यवच्छेदनिबन्धनत्वं महापुरुषस्यैव सर्वव्यापित्वं च स्थापितम् । अत्रायुतायुतेत्याद्यंशक्लृप्तिरसंख्यातब्रह्माण्डतदावरणादि-महत्तरविभूत्याश्रयप्रदेशातिरिक्तविभूत्यन्तराश्रयापरिमितस्वरूपवैभवसूचनार्था । एतेन प्रतिब्रह्माण्डं ब्रह्मरुद्रादीनामितरेतरा-नभिज्ञत्वादिकमपि सूच्यते । कस्येत्यादिना महिमैकदेशाधिष्ठेयत्वं वा विवक्षितम् । * विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यत्राभाष्यत—* मम महिम्नोऽयुतायुतांशेन विष्टभ्याहमवस्थित इति । तत्रैव *यस्यायुतायुतांशांश इत्यादि-कमुदाहृतम् । **विश्वं**—कृत्स्नं कार्यजातम् । चिदचित्प्रविभागः चेतनाचेतनयोः प्रकृष्टं वैषम्यम् । तस्य विचित्रत्वमाश्चर्यत्व-मवान्तरविशेषो वा । देवमनुष्यादिरूपभेदेन तत्तदनुगुणज्ञानसुखादिभेदैश्च चेतनप्रविभागः । अचेतनप्रविभागस्तु भूते-न्द्रियादिरूपेण भोग्यभोगोपकरणादिरूपेण च । स च निर्बाधैः प्रत्यक्षानुमानागमैर्यथासंभवं प्रत्येतव्यः । एवं प्रविभागेन वृत्तं व्यवस्थितस्वरूपस्थितिव्यापारवत्तया निष्पन्नमित्यर्थः ॥ १२ ॥

**वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः ।**
**कोऽन्यः प्रजापशुपती परिपाति कस्य पादोदकेन स शिवस्स्वशिरोधृतेन ॥ १३**

अथ स्यात् यद्यपि प्रत्यक्षस्तुतिभिः तत्रत्यलिङ्गैरबाधितसमाख्याविशेषैश्च भगवत्परत्वं प्रतीयते, तथाऽपि *इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति स्मरणाद्विरोधाधिकरणस्य च स्पष्टार्थश्रुतिविषयत्वात्प्रजापतिपशुपतिपारम्य-तत्परबहूपबृंहणदर्शनाच्च पुरुषोत्तम एव पर इति निश्चेतुं न शक्यमित्यत्र प्रबलतमोपबृंहणप्रसिद्धैः परावरविवेकलिङ्गभूतै-रुदन्तैरुत्तरमाह—**वेदापहारेति** ॥ अयं भावः—सुपरिगृहीताविरुद्धार्थसात्त्विकपुराणाद्युपबृंहिताभिः प्रत्यक्षश्रुतिभिः अर्थ-निर्णये सिद्धे विरुद्धार्थानां राजसतामसपुराणादीनां शारीरकस्मृत्यधिकरणनिश्चलीकृतविरोधाधिकरणनयेन विधूननं युक्तम् । तद्विपरीतवृत्तान्तास्तु तामसादिपुराणोक्तत्वाद्भ्रमविप्रलम्भसंभवा मन्तव्याः । मन्वादिस्मृतिषु भगवत्पारम्यं सुव्य-क्तम् । * यद्वै किंच मनुरवदत्तद्भेषजमिति च श्रूयते । * मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यत इति स्मर्यते च । अतस्सात्त्विकेतिहासपुराणादिप्रोक्ता वेदापहारादिवृत्तान्ताः परावरविवेके सम्यङ्लिङ्गानि भवन्ति । तदिह निखिलजगदेक-हेतुभूतस्स भगवान् * आनीदवातँ स्वधया तदेकम्, * तस्माद्धान्यं न परः किञ्चनासेत्यादिप्रसिद्धायां पूर्वापरहिरण्य-गर्भादिप्रलयप्रागभावदशायां महदादिसृष्टिक्रमेण ब्रह्माणं पूर्वं विधाय प्रलयतिरोहितान्वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य ब्रह्मणे प्राहिणोत् । अत्र *विदधाति प्रहिणोतीति च वर्तमाननिर्देशः प्रतिकल्पमेवमेवेति ज्ञापनार्थः । ततश्च वेदचक्षुः-प्रदर्शितां विश्वसृष्टिं कर्तुकामे ब्रह्मणि प्राचीनदुष्कृतफलदानाय परमपुरुषेणैव सृष्टौ मूर्तरजस्तमस्त्वेन भगवच्छास्त्रप्रति-

पादितौ महाबलौ मधुकैटभौ—* ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभम् । सृजन्तं प्रथमं वेदांश्चतुरश्चारुविक्रमौ ॥ ततो विग्रहिणस्तांस्तु दृष्ट्वा तावसुरोत्तमौ । वेदाञ्जगृहतू राजन् ! ब्रह्मणः पश्यतस्तदा ॥ अथ तौ दानवश्रेष्ठौ गृहीत्वा तान् सनातनान् । रसां विविशतुस्तूर्णमुदपूर्णे महोदधौ ॥ ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् । ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥ ब्रह्मा—वेदा मे परमं चक्षुः वेदा मे परमं धनम् । वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तमम् ॥ मम वेदा हृतास्सर्वे दानवाभ्यां बलादितः । अन्धकारा इमे लोका जाता वेदैर्विवर्जिताः ॥ वेदे हृतेऽहं किं कुर्यां लोकान्वै स्रष्टुमुद्यतः । अहो बत महद्दुःखं वेदनाशनजं मम ॥ प्राप्तं दुनोति हृदयं तीव्रशोकामयस्त्वयम् । को हि शोकार्णवे मग्नं मामिहाद्य समुद्धरेत् । इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ! । हरिस्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ! ॥ ततो जगौ परं जप्यं प्राञ्जलिः प्रग्रहं प्रभुरित्यादि । * एतस्मिन्नन्तरे राजन् ! देवो हयशिरोधरः । जग्राह वेदानखिलान् रसातलगतान् हरिः ॥ प्रादाच्च ब्रह्मणे राजन् ! ततस्स्वां प्रकृतिं ययौ । ततस्तयोर्वधेनाशु वेदोपहरणेन च ॥ शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तम इति । पशुपतेरेव गुरुपातकाद्विमोचनम् । गुरुविषयं पातकं गुरुपातकं गुरुत्वेन पातकं वा विशेष्यते । न हि ब्राह्मणोत्तमपितृभूतब्रह्मशिरश्छेदादधिकं पातकं संभाव्यते ? विदुषोऽतिक्रमे दण्डभूयस्त्वं च स्मर्यते । न च सर्वज्ञनामाऽसौ न जानाति तदिदं स्वपातकम् । रुद्रेण स्वयमेवोक्तं **मात्स्ये**—* ततः क्रोधपरीतेन संरक्तनयनेन च । वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥ ब्रह्मा—यस्मादनपराधस्य शिरश्छिन्नं त्वया मम । तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥ रुद्रः—ब्रह्महाऽऽकुलितो भूत्वा चरंस्तीर्थानि भूतले । ततोऽहं गतवान् देवि ! हिमवन्तं शिलोच्चयम् ॥ तत्र नारायणः श्रीमान् मया भिक्षां प्रयाचितः । ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम् ॥ महती स्रवती धारा तस्य रक्तस्य निस्सृता । विष्णुप्रसादात्सुश्रोणि ! कपालं तत्सहस्रधा ॥ स्फुटितं बहुधा यातं स्वप्नलब्धं धनं यथेति । एवं स्वेदजलपूरणेन कपालमोचनं चान्यत्रोक्तं कल्पभेदेन रुद्रसृष्ट्यन्तरे योज्यम् । अप्राकृते भगवद्विग्रहे युद्धादिष्वत्र च रुधिरस्वेदादिकं मायासृष्टं मन्तव्यम् । रुद्रस्य दैत्यपीडाद्यापद्विमोचनमन्धकासुरसंग्रामे प्रसिद्धम् । तदुक्तं **मात्स्ये** महेश्वरप्रयुक्तशस्त्रक्षतप्रथमान्धकरुधिरबिन्दुभिरन्धकयूथे सञ्जाते—* ततस्स शङ्करो देवस्त्वन्धकैराकुलीकृतः । जगाम शरणं देवो वासुदेवमजं विभुम् ॥ ततस्स भगवान् विष्णुस्सृष्टवाञ्छुष्करेवतीम् । सा पपौ सकलं तेषामन्धकानामसृक् क्षणादिति । एवं रुद्रस्य स्वदत्तवरसामर्थ्यपरीक्षोद्यतवृकासुरदौरात्म्यजनितभयविमोचनं च द्रष्टव्यम् । अत्रेन्द्रादीनामपि हिरण्यरावणदुर्वासःप्रभृतिजनितापद्विमोचनमुपलक्ष्यम् । **सभापर्वणि** चैतत्सामान्यत उक्तम्—* एवमेषोऽसुराणां च सुराणामपि सर्वशः । भयाभयकरः कृष्णस्सर्वलोकेश्वरेश्वर इति । आदिशब्देन दुर्जयत्रिपुरविजिगीषाद्यापत्संग्रहः । उक्तं हि **महाभारते**—* विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वर इति । **श्रीविष्णुधर्मे** च—* त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम् । शङ्करस्य कुरुश्रेष्ठ रक्षणाय निरूपितम् ॥ वागीशेन तु शक्रस्य बलं हन्तुं प्रयास्यत इति । **नामत्रयविधाने** च तेनैव रुद्रस्य कालकूटापन्निस्तारणं च दर्शितम्—* अच्युतानन्तगोविन्दमन्त्रमानुष्टुभं परम् । ओन्नमस्सम्पुटीकृत्य जपन्विषधरो हर इति । बाणयुद्धे भगवता वासुदेवेन योद्धुं प्रवृत्तस्यापि रुद्रस्य प्रशमनास्त्रेण युद्धापन्निस्तारणं कृतम् । यथोक्तं **वैष्णवपुराणे**—* जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करम् । ततः प्रणेदुर्दैतेयाः प्रमथाश्च समन्ततः ॥ जृम्भाभिभूतस्तु हरो रथोपस्थ उपाविशत् । न शशाक तदा योद्धुं कृष्णेनाक्लिष्टकर्मणेति । **श्रीमद्रामायणे** च श्रीपरशुराम आह—* हुङ्कारेण महाबाहुः स्तम्भितोऽथ त्रिलोचनः । जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ अधिकं मेनिरे विष्णुं देवास्सर्षिगणास्तदेति ॥

**श्रीबदरिकाश्रमे** च युद्धप्रवृत्तस्तापसवेषेण धर्मसूनुना नरसखेन नारायणेन सञ्जिहीर्षितो रुद्रः पितुः पुत्रस्य च मध्यं प्रविष्टेन चतुर्मुखेन प्रबोधितश्शरणमुपागतस्सर्वलोकशरण्येन संरक्षित इति **महाभारते** प्रोक्तं–* प्रसादयामास भवो देवं नारायणं प्रभुम् । शरणं च जगामाद्यं वरेण्यं वरदं हरिमित्यादिना । तयोर्महिष्ठफलप्रदानं च तत्रैवोक्तम् । तथा हि; **कुण्डधरोपाख्याने**–* [illegible] विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुमः इति । उपाख्यानान्तरे च–* मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् । ततस्तस्मै वरान्प्रीतो ददाम्यहमनुत्तमान् ॥ मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव चेति । युधिष्ठिरशोकापनोदे च–* विश्वरूपो महादेवः सर्वमेधे महाक्रतौ । जुहाव सर्वभूतानि स्वयम[illegible]त्मनेति । तथा * महादेवस्सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव । विश्वान् लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासा इति ॥ आमनन्ति चैतदेव बह्वृचाः * अस्य देवस्य मीढुषो वयाविष्णोरेष प्रवृधे हविर्भिः विदेहि रुद्रो रुद्रियं महत्त्वमिति । पशुपतित्वं च रुद्रस्य वरापेक्षापूर्वकमाम्नातं–* सोऽब्रवीद्वरं वृणा अहमेव प[illegible]नीति तस्माद्रुद्रः पशूनामधिपतिरिति । **श्रीनारायणीये** च सर्वदेवानां भगवदाराधकत्वं तदधीनगतित्वं चोक्तम्–* तं देवा ऋषयश्चैव नानातनुसमाश्रिताः । भक्त्या संपूजयन्त्येनं गतिं चैषां ददाति सः ॥ इति । यज्ञाग्रहराध्याये च भगवत एव सर्वकर्मसमाराध्यत्वं ब्रह्मादीनां सर्वेषां तत्प्रसादलब्धयज्ञभागत्वं च प्रतिपादितं–* ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् ॥ तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् । देवा महर्षयश्चैव सर्वे भागानकल्पयन् ॥ ते कार्तयुगधर्माणो भागाः प्रथमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परमिति । ततश्चैवं **भगवद्वचः**–* येन यः कल्पितो भागः स तथा समुपागतः । प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणमिति । तथा–* यज्ञैर्ये चापि यक्ष्यन्ते सर्वलोकेषु वै सुराः । कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ॥ यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मया कृत इति । **कर्मकाण्डे** च प्रथमाध्याये–* नित्यमर्चयसे देव कं देवमधिकं तव । यस्मान्मानसमव्यग्रं कृत्वा त्रिभुवनेश्वर ॥ जपहोमनमस्कारैस्तं वदस्व तथा मयेत्युमया पृष्टो महेश्वर उवाच–* शृणुष्व त्वं महाभागे यथा नित्यं नमाम्यहम् । ब्रह्माद्या मुनयश्चैव तपोधैर्यसमाधिभिः ॥ अर्चयन्ति सदा यं वै सदा पश्यन्ति सूरयः । तं वै यथातथं वक्ष्ये तस्मिन् धर्मस्य निर्णयम् ॥ अज्ञानार्णवमग्नानां सर्वेषामात्मनामयम् । विष्णुर्धर्मोद्भवः श्री[illegible]र्थं उदाहृत इति । **श्रीनारसिंहपुराणे** चैतत्संग्रहेणोक्तं–* ब्रह्मादयस्सुरास्सर्वे विष्णुमाराध्य ते पुरा । स्वंस्वं पदमनुप्राप्ताः केशवस्य प्रसादत इति । अथ रुद्रस्यानीश्वरत्वे हेत्वन्तरमाह–**कस्य पादोदकेन स शिव इति** । अत्र द्वन्द्वसमासस्थस्यापि पशुपतिमात्रस्य गङ्गाधारणसामर्थ्यात् बुद्ध्या निष्कृष्य स इति परामर्शः । यद्वा स इति शिवसमाख्याप्रसिद्धिपरम् । तथा चोक्तं **श्रीभागवते**–* सञ्चिन्तयेद्भगवतश्चरणारविन्दमिति प्रक्रम्य, * यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवश्शिवोऽभूदिति । **उद्योग**पर्वणि चैतदभिप्रायेण प्रोक्तम्–* अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् । प्रगृह्य प्रददौ लोके मानुषे ब्रह्मवित्तम इति । स्पष्टं चैतदी**श्वरसंहितायामा**राधकेन ब्रह्मणैवोक्तं * द्रवीभूतस्तदा धर्मो हरिभक्त्या महामुने । गृहीत्वा धर्मपानीयं पदं नाथस्य तुष्टये ॥ क्षालितं परया भक्त्या पाद्यार्घ्यादिभिरर्चितम् । तदम्बु परया भक्त्या दधार शिरसा हरः ॥ पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात् । वर्षायुतान्यथ बहून्न मुमोच तथा हरः ॥ इति । यद्येवं **गङ्गा** पशुपतेरपि पावनी, तर्हि * भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुरित्येतत्कथम्? इत्थम्; अत्र हि स्वतः पवित्रत्वस्य

स्प्रष्टव्यताहेतुत्वमुच्यते, अश्रुतमनाकाङ्क्षितं चान्यसंसर्गस्य तत्पवित्रताहेतुत्वं कल्पयितुमयुक्तम् ; कल्प्यमानेऽपि ज्ञापकहेतुत्वमात्रं कामं कल्प्यताम् । भवेन शिरसा धृतत्वात्पवित्रमिति ज्ञात्वा पस्पृशुरित्यर्थः । सामान्योक्त्या च भवस्यान्येषां च पवित्रत्वमभिप्रेतम् । अत एव *हरस्य गात्रसंस्पर्शात्पवित्रत्वमुपागतेत्यत्रापि हरस्य शुद्धिप्रदत्वमुपागतेति बोद्धव्यम् ॥१३॥

**कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः को रक्षतीममजनिष्ट च कस्य नाभेः ।**
**क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः कः ? केन वैष परवानिति शक्यशङ्कः ॥ १४**

एवं तत्तद्भक्तैः परत्वेन कल्पितयोः प्रजापतिपशुपत्योर्वृत्तान्तैस्तयोरनीश्वरत्वकर्मवश्यत्वादिकं भगवत एव सर्वेश्वरत्वं च दृढीकृतम् । अथ तयोस्तदन्येषां चानीश्वरतया संमतानामविशेषेण पारतन्त्र्यसृज्यत्वसंहार्यत्वादिप्रदर्शकैस्तामसादिपुराणेष्वपि प्रसिद्धतया सर्वलौकिकपरीक्षकसंमतैरशक्यापह्नवैराश्चर्यचेष्टितैः परावरतत्त्वविवेकं प्रतिष्ठापयति—**कस्योदर** इति ॥ प्राकृतप्रलयदशायां हरविरिञ्चादिरूपेण स्रक्ष्यमाणश्चिदचिदात्मकः प्रपञ्चः कस्योदरे त्वदन्यस्य कस्यान्तःसूक्ष्मतयाऽवस्थित इत्यर्थः । *यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इत्यत्रौदनोपसेचनशब्दवत्, *ग्रसेत्संहारसमये जगत् स्थावरजङ्गमम् । लीलया यस्तु भगवान् तं गच्छ शरणं हरिमित्यत्र ग्रसनशब्दवच्चात्रोदरशब्द औपचारिकः । उक्तं च विश्वप्रलयवेलायां भगवत एवावस्थानं **सुबालोपनिषदि**—*किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति ... (text as printed:) *किं तदासीन्नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायण इत्यादिभिः । **महाभारते** *ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे । आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ॥ एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुरिति । *कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्यय इति च । **श्रीवैष्णवे** च पुराणे *प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयत इति । **श्रीविष्णुधर्मोत्तरे** च *ब्रह्मा शंभुस्तथैवार्कः चन्द्रमाश्च शतक्रतुः । एतदाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥ जगत्कार्यावसानेषु वियुज्यन्ते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति चेति । अत्र *नारायणे प्रलीयन्त इति श्रुत्यादिप्रसिद्धेऽर्थे तात्पर्यम् । यद्वा महाप्रलयानन्तरं महदादिषूपसृष्टेषु स्रक्ष्यमाणहरविरिञ्चादीन् भगवता स्वविग्रहविशेषेऽन्तर्निधाय रक्षित्वा ततस्तेषां सृष्टिरत्रोच्यते । सृष्टेः पुरुषार्थशेषतया धर्मादिपुरुषार्थस्य च स्थितिकालभावित्वात्तत्प्राधान्यविवक्षया क्रममुल्लङ्घ्याह—**को रक्षतीम**मिति । उक्तमिदं वैष्णवपुराणे—*न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् । स्थितौ स्थितं महाप्राज्ञ ! भवत्यन्यस्य कस्य चित् ॥ सृजत्येष जगत्सृष्टौ स्थितौ पाति सनातनः । हन्ति चैवान्तकत्वे च रजस्सत्त्वादिसंश्रय इति । **उत्तरश्रीरामायणे** च ब्रह्मणोक्तं—*ततस्त्वमपि दुर्धर्षस्तस्माद्भावात्सनातनात् । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवानिति । *सोऽहं संन्यस्तभारो हि त्वामुपासे जगत्पतिम् । रक्षां विधत्स्व भूतेषु मम तेजस्करो भवानिति च । एवं *न संपदां समाहारे विपदां विनिवर्तने । समर्थो दृश्यते कश्चित्तं विना पुरुषोत्तममित्यादीनि च द्रष्टव्यानि । अथ *बहु स्यां प्रजायेयेतीत्युक्तक्रमेण जनिहेतुत्वमाह—**अजनिष्ट च कस्य नाभे**रिति । श्रूयते हि **महोपनिषदि**—*सर्वस्यायतनं हरिमित्यारभ्य *यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः । तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति । **आथर्वणे च** *ब्रह्म वा इदमग्र आसीदित्युपक्रम्य *ब्रह्म वै ब्रह्माणं पुष्करेऽसृजदिति । एवम् *अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम् विश्वकर्मा ह्यजनिष्ट देवः, *स प्रजापतिरेकः पुष्करपर्णे समभवदित्यादिष्वपि भगवन्नाभेरेव प्रजा-

पतिसंभवोऽभिप्रेतः । उपबृंहणसिद्धं चैतत्—* अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम् । पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नम इति । भृगुभरद्वाजसंवादे च—* ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा । तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो विधिरिति । स्थलान्तरे च—* नारायणो महायोगी शुभाशुभविवर्जितः । ससर्ज नाभिजं पुत्रं ब्रह्माणममितप्रभम् ॥ ततस्स प्रादुरभवदथैनं वाक्यमब्रवीत् । मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ॥ सृज प्रजास्त्वं विविधा ब्रह्मन्! सजडपण्डिता इति । सभापर्वणि च—* अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः । पुरा नारायणो देवस्स्वयम्भूः प्रपितामह इत्यारभ्य, * ततस्स भगवांस्तोये ब्रह्माणमसृजत्स्वयमिति । अत्रापि प्रलयार्णवमध्ये नाभेर्ब्रह्माणमसृजदिति मन्तव्यम् । सुपर्णवैकुण्ठसंवादे च * यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत । ब्रह्मणश्चापि सम्भूतः शिव इत्यवधार्यताम् ॥ शिवात्स्कन्दस्समभवदेतत्सृष्टिचतुष्टयमिति । मार्कण्डेयश्च—* स्वपतस्तस्य वै पद्मं कोटिसूर्यसमप्रभम् । नाभेर्विनिस्सृतं तस्य तत्रोत्पन्नः पितामह इति । उत्तरश्रीरामायणे च—* सङ्क्षिप्य च पुरा लोकान् मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितमिति । श्रीवैष्णवे च पुराणे--* रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः । यस्य नाभिसमुद्भूतपङ्कजादभवज्जगदिति । श्रीवाराहे चागस्त्यं प्रति रुद्रः—* नारायणः परो देवः सत्त्वरूपी जनार्दनः । त्रिधाऽऽत्मानं स भगवान् ससर्ज परमेश्वरः ॥ रजस्तमोभ्यां युक्तोऽभूत् रजस्सत्त्वाधिकं विभुम् । ससर्ज नाभीकमले ब्रह्माणं कमलासनम् ॥ रजसा तमसा युक्तं सोऽपि मामसृजत्प्रभुरिति । अत्र त्रिधाऽऽत्मानमित्येतत् स्वेन रूपेण क्षेत्रज्ञद्वयविशिष्टवेषेण चेति बहुप्रमाणानुसारेण मन्तव्यम् । रजस्तमोयोगश्च तद्गुणकद्रव्याधिष्ठातृत्वेन भवति । श्रीनारसिंहपुराणे * तत्र सुप्तस्य देवस्य नाभौ पद्ममभून्महत् । तस्मिन् पद्मे महाभाग! वेदवेदाङ्गपारगः ॥ ब्रह्मोत्पन्नस्स तेनोक्तः प्रजास्सृज महामते! । एवमुक्त्वा तिरोभावं गतो नारायणः प्रभुः ॥ तथेत्युक्त्वा स तं देवं विष्णुं ब्रह्माऽथ चिन्तयन् । आस्ते किञ्चिज्जगद्धेतोर्नाध्यगच्छत किंचन ॥ तावत्तस्य महारोषो ब्रह्मणोऽभून्महात्मनः । ततो बालस्समुत्पन्नस्तस्याङ्के रोषसंभवः ॥ स रुदन्वारितस्तेन ब्रह्मणा व्यक्तमूर्तिना । नाम देहीति चेत्युक्तस्तस्य रुद्रेत्यसौ ददाविति । एवं * सृष्ट्वा नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पेकल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् ॥ * तत्र सुप्तस्य मे देवि! नाभौ पद्ममजायते त्यादीनि वचनानि द्रष्टव्यानि । नाभिरित्येतदुपलक्षणम् । मनःप्रभृतिभ्यो हि ब्रह्मणो जन्मषट्कं पूर्वं प्रोच्यते । यथा हयशिरउपाख्याने * अहं प्रसादजस्तुष्यन् लोकधाम्ने स्वयम्भुवे । त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ॥ चाक्षुषं मे द्वितीयं वै आसीज्जन्म पुरातनम् । त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ॥ त्वत्तो मे श्रावणं चापि चतुर्थं जन्म वै विभो! । नासिक्यं चैव मे जन्म त्वत्तः पञ्चममुच्यते ॥ अण्डजं चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम् । इदं च सप्तमं जन्म पद्मजं मेऽमितप्रभ! ॥ सर्गेसर्गेऽप्यहं पुत्रस्तव त्रिगुणवर्जितेति । अत्रैवमण्डजसृष्टिः महोपनिषदि श्रूयते * एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमेत तस्य ध्यानान्तस्स्थस्यैका कन्या दशेन्द्रियाणि इत्यारभ्य * अथ पुनरेव नारायणस्सोऽन्यं कामं मनसाऽध्यायत तस्य ध्यानान्तस्स्थस्य ललाटात्स्वेदोऽपतत् ता इमा आपस्तद्धिरण्मयमण्डमभवत् तत्र ब्रह्मा चतुर्मुखोऽजायतेति । अनन्तरं रुद्रोत्पत्तिश्चैवमभिधीयते—* अथ पुनरेव नारायणस्सोऽन्यं कामं मनसाऽध्यायत तस्य ध्यानान्तस्स्थस्य ललाटात्स्वेदोऽपतत् स्वेदाद्बुद्बुदमभवत् बुद्बुदात् त्र्यक्ष-

श्शूलपाणिः पुरुषोऽजायतेति । **मोक्षधर्मे** चोक्तम् * एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः । एष माता पिता चैव युष्माकं च पितामहः ॥ मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः । अस्य चैवानुजो रुद्रो ललाटाद्यस्समुत्थितः ॥ ब्रह्मानुशिष्टो भविता सोऽपि सर्ववरप्रद इति, * अथ तत्र सतस्तस्य चतुर्वक्त्रस्य धीमतः । ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छयेति । छन्दोगास्त्वामनन्ति—* विरूपाक्षाय दन्ताञ्जये तुथाय विश्ववेदसे सहस्राक्षाय ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय नमो घण्टाय कर्माधिपतये नम इति । **शतपथे चाष्टमूर्तिब्राह्मणे** प्रथमांशे—* संवत्सरे कुमारोऽजायत सोऽरोदीत् तं प्रजापतिरब्रवीत् कुमार! किं रोदिषि यच्च मम तपसोऽधिजातोऽसीति सोऽब्रवीत् अनपहतपाप्मा वा अहमस्मि हन्त नामानि मे देहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात् पाप्मानमेवास्य तदपहन्ति अपि द्वितीयम् अपि तृतीयम् अपि पूर्वमेवास्य तत्पाप्मानमपहन्ति तमब्रवीत् रुद्रोऽसीति तस्य तन्नामाकरोत् अग्निस्तद्रूपमभवत् अग्निर्वै रुद्रः यदरोदीत्तस्माद्रुद्र इत्यादि । सेयं श्रुतिर्भगवता **पराशरेणो**पबृंहिता—* कथितस्तामसस्सर्गो ब्रह्मणस्ते महामुने! । रुद्रसर्गं प्रवक्ष्यामि तं मे निगदतः शृणु ॥ कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः । प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः ॥ रुरोद सुस्वरं सोऽथ द्रवंश्च मुनिसत्तम! । किं रोदिषीति तं ब्रह्मा रुदन्तं प्रत्युवाच ह ॥ नाम देहीति तं सोऽथ प्रत्युवाच प्रजापतिः । रुद्रस्त्वं देवनाम्नाऽसि मा रोदीर्धैर्यमावह ॥ एवमुक्तः पुनस्सोऽथ प्रत्युवाच महातपाः । ततोऽन्यानि ददौ तस्मै सप्त नामानि स प्रभुः ॥ स्थानानि चैषामष्टानां पत्नीः पुत्रांश्च वै विभुरित्यादिना । **मोक्षधर्मे** च **ब्रह्मरुद्रसंवादे**—* अहं ब्रह्मा चाद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः । मत्तो जगज्जङ्गमस्थावरं च सर्वे वेदास्सरहस्याश्च पुत्रेति; **लिङ्गनिर्णयाध्याये** च—* उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुत इति । **श्रीवाराहे** च * नारायणः परो देवस्तस्माज्जातश्चतुर्मुखः । तस्माद्रुद्रोऽभवद्देवि! स च सर्वज्ञतां गत इति । एवं रुद्रस्य ब्रह्मानुजत्वब्रह्मपुत्रत्वे अपि कल्पभेदादुपपद्येते ॥

आप्तवाचोर्विरोधे स्यात्सृष्टिभेदादियं गतिः । अनिश्चितासभावानां निश्चितैस्स्यादनादरः ॥

अथैवमेव परावरत्वविभाजकत्रिविक्रमव्यापारमाह—**क्रान्त्वेति** । अनेन * यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वेत्यादिप्रतिपादितं विग्रहमहत्त्वादिकं चतुर्मुखस्य तत्पदाराधकत्वं च सूच्यते । तदा ब्रह्मादिसर्वदेवतानां मनुष्यादिवत् स्तोतृत्वं चोक्तं—* सद्भिस्सुराणां दिवि भूतलस्थैरित्यादिना । अथवा क्रान्त्वेत्यनेन सर्वेषामन्तर्बहिश्चावस्थाय यथार्हं तत्तत्कार्यार्थमाक्रमणं विवक्षितम् । **अन्तर्यामिब्राह्मणे** हि—* यः पृथिवीमन्तरो यमयति, * य आत्मानमन्तरो यमयतीत्यादिभिस्सर्वतत्त्वाधिष्ठातृत्वमुक्तम् । **सुबालोपनिषदि** च—* यः पृथिवीमन्तरे सञ्चरन्नित्यादिभिस्स एवार्थ उक्तः; अन्ते च विशेषितं * एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति । अन्यमपि निगरणादिकर्मीभूतब्रह्मरुद्राद्यशक्यमाश्चर्यव्यापारमाह—**निगीर्य पुनरुद्गिरति त्वदन्यः क** इति । यथोक्तं **श्रीसात्त्वते**—* त्यजन्तमाहरन्तं च श्वासोच्छ्वासद्वयेन च । आब्रह्मभवनं सर्वं कर्मप्राधानिकं हि यदिति । उद्गिरतीति वर्तमाननिर्देशः क्वचित्क्वचित्कल्पे तथा प्रवृत्तिप्रवाहज्ञापनार्थः । तस्य यथापूर्वत्वद्योतनाय पुनश्शब्दः । एवं संहार्यत्वसंहर्तृत्वरक्ष्यत्वरक्षकत्वजन्यत्वजनकत्वाधिष्ठेयत्वाधिष्ठातृत्वादिवैधर्म्यवर्गैरुक्तैश्च **पुरुषनिर्णयादिषु** प्रपञ्चितैर्हेतुभिः त्वदन्येषु क्वचिदपि स्वातन्त्र्यशङ्का च न स्यादिति निगमनाभिप्रायेणाह—**केन वेति** । त्वदन्येनेति विशेषणीयम् । **वाशब्द**श्चकारार्थः; अन्यस्य सर्वस्मात्परस्यात्यन्तासंभावितत्वद्योतनार्थो वा । मुक्तेषु नित्येषु च शक्तिभूयस्त्वेऽपि सर्वशरीरत्वादि-

लक्षणं स्वातन्त्र्यं नास्ति । किमुत क्षेत्रज्ञेषु हरविरिञ्चादिष्वित्यभिप्रायेण निर्दिशति—**एष** इति । अत्र सर्वेषामाधारतया नियन्तृतया शेषितया चाधिकः परः । तद्वान् **परवान्** । प्रामाणिकानां दृढतरबहुप्रमाणसिद्धेऽर्थे तद्विपरीतशङ्काऽपि नोत्पद्यत इत्यभिप्रायेणात्र परवन्निर्देशः । अथवा मन्दमतीनां श्रुत्यन्तरेषु परान्तरसद्भावशङ्कासंभवेऽपि पूर्वोक्तैरेव न्यायैस्तन्निरासनमभिप्रेत्य केनेत्यादिकमुच्यते । उपबृंहणैश्चैतत्सिद्धम्; यथाऽऽश्वमेधिके **श्रीवैष्णवधर्मशास्त्रे**— *अनाश्रित्योच्छ्र्यो नास्ति मुख्यमाश्रयमाश्रयेत् । रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ॥ ब्रह्मा मामाश्रितो राजन्! नाहं कञ्चिदुपाश्रितः । ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥ इदं रहस्यं कौन्तेय! प्रोक्तवानहमव्ययमिति । **श्रीहरिवंशे** च देवान् प्रति रुद्रः—*एतदेव परं वस्तु नैतस्मात्परमस्ति वः । एवमेव विजानीध्वमेतद्वः परमं तप इति, *ओमित्येवं सदा विप्राः! पठध्वं ध्यात केशवमिति, *उपास्योऽयं सदा विप्रा! उपायोऽस्मि हरेस्स्मृताविति च । **श्रीवाराहे** *रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च । सर्वे भवन्तं शरणं गतास्स्मः कुरुष्व पूज्यानिह विश्वमूर्ते ॥ इति । तत्रैव—*नारायणात्परो देवो न भूतो न भविष्यति । एतद्रहस्यं वेदानां पुराणानां च सत्तमम् ॥ इति । **ब्राह्मे**—*सर्वे विष्णुमया देवाः सर्वे विष्णुमया गणाः । न हि विष्णुसमा काचिद्गतिरन्या विधीयते ॥ इत्येवं सततं वेदा गायन्ते नात्र संशयः इति । **आदित्यपुराणे ब्रह्मा**—*अहं विष्णोस्तु संभूतः स च सर्वमयो हरिः । न तस्य परतो भूतं विद्यते यत्तदुत्तमम् ॥ पुराणेषु द्विजश्रेष्ठाः! दशस्वष्टासु नान्यथेति । तत्रैव कालनेमिवधे रुद्रः—*योऽसौ साक्षाद्वेदमूर्तिर्यत्र वेदाः प्रतिष्ठिताः । तं याम शरणं विष्णुं सर्वे सेन्द्रा दिवौकस इति ॥ १४ ॥

**त्वां शीलरूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः ।**
**प्रख्यातदैवपरमार्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥** १५

एवं चतुर्भिः पञ्चभिर्वा श्लोकैः प्रदर्शितं भगवत्परत्वं यदि प्रामाणिकम्, तर्हि श्रुतशास्त्रास्सर्वेऽपि किं तथा नाध्यवस्यन्ति? कथं च लोके निरीश्वरवादस्त्रिमूर्तिसाम्यैक्यादिपक्षाश्च प्रादुःष्युः? इत्यत्र परेषां भगवत्प्रतिपत्त्यभावे हेतुमाह—**त्वां शीलेति** ॥ एतेन मूढान् प्रति शोचति, तन्मध्ये स्वस्य भगवदनुभवलाभात् प्रीयते च । **त्वां**—महद्भ्योऽपि महीयस्त्वेन पूर्वोक्तम् । **शीलमिह** महत्तरस्यापि मन्दतरैस्सह नीरन्ध्रसंश्लेषः । रामकृष्णाद्यवतारेषु शबरीगोपालादिवृत्तान्तैस्तत्प्रसिद्धिः । तैरेव तत्रतत्र महत्त्वमपि सूच्यते । **रूपम्** *आदित्यवर्णं तमसः परस्तात्, *तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वास इत्यादिष्वस्त्रभूषणाध्यायादिषु चाप्राकृतत्वेनाकर्महेतुत्वेन विश्वाधारतया शुभाश्रयत्वेन च प्रसिद्धम् । अत्र केषांचिद्भगवत्स्वरूपमेव वा तद्गुणभूतज्ञानबलादि वा परव्यूहादिरूपतया प्रकाशत इति पक्षस्तु तत्रतत्र पृथङ्निर्देशस्य बाधकाभावात् निर्विकारत्वनिरवयवत्वादिश्रुतिविरोधात् *पञ्चोपनिषन्मन्त्रविग्रहम्, *षाड्गुण्यविग्रहं देवमित्यादेरन्वयानर्हपदसमभिव्याहारस्य परस्परविरुद्धस्यान्यथैवोपपत्तेश्च निरस्तः । **चरितानि** क्रान्त्वेत्यादिना पूर्वोक्तान्यनुक्तानि च महार्णवनिमग्नवसुन्धरोद्धरणामृतमथनप्रमुखान्यतिमानुषदैवतानि चेष्टितशतानि । **परमप्रकृष्टसत्त्वेन**—अधिकोत्कृष्टसत्त्वगुणेनेत्यर्थः । ननु ब्रह्मादिष्वेव सत्त्वरजस्तमसां प्रत्येकमुत्तममध्यमाधमभेदेन नवधा गतिर्**मनुनो**क्ता । भगवतस्तु—*सत्त्वादयो न सन्तीशे यत्र हि प्राकृता गुणा इति सत्त्वगुणोऽपि प्रतिषिद्ध्यते । तत्कथमिह तदुक्तिः? इत्थम्; क्षेत्रज्ञानां हि प्रकृष्टसत्त्वगुणसम्पत्तिः भगवत्कटाक्षाधीनेति प्रागेव प्रतिपादितम् । तदिह स्वप्रवर्त्यैन मोक्षोपयुक्तसत्त्वेनेत्यर्थः । अप्राकृतशुद्धसत्त्वसमाश्रयत्वं वा विवक्षितम् । तामसपुराणादीनां तत्त्वबोधकत्वं नास्तीत्यभिप्रायेणाह—**सात्त्विक**

तयेति । पौरुषेयशास्त्राणां स्वमूलभूतपुरुषगुणभेदेन सात्त्विकत्वादिव्यपदेशः । सत्त्वादीनां कार्यभेदश्च भगवतैव गीतः— * सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति । सात्त्विकराजसतामस-बुद्धिभेदश्च—* प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्त्विकी ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी ॥ अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसीति श्लोकत्रयेणोक्तः । **मनुश्च**—* या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृता इति । पुराणेषु च सात्त्विकादिविभागो **मात्स्ये** प्रोक्तः— * सङ्कीर्णास्तामसाश्चैव राजसास्सात्त्विकास्तथा । कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसात्यये ॥ यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्यतस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥ अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ॥ तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति । तस्मिन्नेव प्रदेशान्तरेऽपि—* सङ्कीर्णास्तामसाश्चैव राजसास्सात्त्विकास्तथा । कल्पाश्चतुर्विधाः प्रोक्ताः, * रजस्तमोमयास्तद्वत् त्रयस्त्रय उदाहृताः । सङ्कीर्णेषु सरस्वत्याः पितॄणां पुष्टिरुच्यते ॥ अग्नेश्शिवस्य माहात्म्यं तामसेषु दिवाकृतः । राजसेषु च माहात्म्यमधिकं ब्रह्मणः स्मृतम् ॥ सात्त्विके-ष्वधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति । **कौर्मे** च—* असङ्ख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः । कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ॥ सात्त्विकेषु च कल्पेषु माहात्म्य-मधिकं हरेः । तामसेषु शिवस्योक्तं राजसेषु प्रजापतेरिति । तदिह सात्त्विकानि पुराणानि सत्त्वैकमूलतया कार्त्स्न्येनावि-प्लुतज्ञानानीति तेषां प्राबल्यम् । वेदविरुद्धैस्तामसतन्त्रैः परत्वापह्नवः परावरतत्त्वविपर्यासादिकल्पनं च **तर्कपादे** निरस्तम् ।

यच्चेदं सात्त्विकपुराणादिविभागप्रकरणं, तत्सात्त्विकमेव मन्तव्यम्; बाधकाभावात् गुणस्वभाववैचित्र्यात् परस्पर-विरुद्धार्थपुराणबलाबलविवेकापेक्षायां तद्व्यवस्थापकतयैव प्रवृत्तत्वाच्च । एवं तामसेतिहासेऽपि तामसपुराणन्यायस्सञ्चारणीय इति । अत्र प्रबलैश्च शास्त्रैरिति प्राबल्योक्त्या बहुवचनेन चानन्यपरश्रुतिस्मृतीनां भारतरामायणादीतिहासानां च तदनु-गुणानां पाद्मवैष्णवभागवतनारदीयमार्कण्डेयवाराहवामनमात्स्यगारुडब्रह्माण्डनारसिंहादिपुराणानामन्योन्यसामरस्यमपि व्य-ज्यते । * अष्टाभिः कथ्यते विष्णुः दशभिः कथ्यते शिव इति वचनं त्वनाप्तं, दृश्यमानविरोधात् हिरण्यगर्भादि-प्रतिपादकपुराणविभागवचनैर्बाधाच्च । आस्तामेतत्सर्वं ; * महाजनो येन गतस्स पन्था इत्युक्तमयत्ननिश्चयसाधनम् । तद्भगवत्पारम्यपक्षे सिद्धमित्याह—**प्रख्यातेति** । प्रबलैश्च शास्त्रैरित्यनेनैव गतार्थत्वेऽपि तदन्तर्गतसाभिसन्धिककतिपय-वाक्यविशेषमात्रेणापि परतत्त्वनिर्णयस्सुलभ इत्यभिप्रायेण महर्षिमतानां पृथगुपादानम् । प्रख्याताश्च ते दैवपरमार्थविद-श्चेति कर्मधारयः, प्रख्यातशब्देन वेदवैदिकपरिग्रहप्रकर्षादाप्ततमत्वं सूच्यते । दैवशब्द इह देवतार्थः, * न दैवं केशवात्परमितिवत् । परमार्थशब्दोऽत्र याथार्थ्यपरः, * देवतापारमार्थ्यं चेत्यादिप्रमाणसूचनार्थत्वात् । वक्तॄणां तन्मतानां च भूयस्त्वव्यञ्जनार्थमुभयत्र बहुवचनम् । तत्र तावत् पृथिवीश्रोत्रजन्मा पितामहदत्तवरो भगवान् **वाल्मीकिराह**— * स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुस्सनातनः, * अधिकं मेनिरे विष्णुम्, * व्यक्तमेष महायोगी परमात्मा सनातन इत्यादि । * येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्यादिषूक्तं परं ब्रह्म त्वमेवेति रामावस्थं भगवन्तं प्रत्युच्यते * अक्षरं ब्रह्म सत्यं चेत्यादि । ब्रह्मलक्षणं

चाभिप्रेत्योक्तं—* त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुरिति । * जगत्सर्वं शरीरं त इत्यनेन घटकश्रुतीनामर्थो दर्शितः । * अहं ते हृदयं रामेति ब्रह्मणो वाक्यं * पुत्रो हि हृदयमिति श्रुतिप्रसिद्ध्या तस्य भगवत्पुत्रत्वं व्यनक्ति । **उत्तरश्रीरामायणे** च भगवतः परमकारणत्वं पितामहोत्पादकत्वं च प्रागेवोदाहृतम् । * कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय! महाभारतकृद्भवेदिति स्वपित्रा पराशरेणापि स्तुतः पञ्चमवेदप्रणेता शारीरकसूत्रकारोऽप्याह—* कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकस्सत्यमेतद्ब्रवीमि ते, * कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्, * ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयी च । त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव, * तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः, * सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम्, * आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदेति । भगवद्गीतानुगीतादिभिर्**मोक्षधर्मे** च तैस्तैस्संवादैरैदम्पर्येण भगवत एव परत्वं प्रपञ्चितम् । **आश्वलायनेन** सूत्रकृता * नमश्शौनकायेत्याचार्यत्वेनाभिवन्दितः **श्रीशौनको**ऽपि **श्रीविष्णुधर्मे** सर्वत्र भगवत्पारम्यं प्राचिख्यपत् । मोक्षोपायविधाने चैवं त्याज्यमुपादेयं च व्यभजत्—* आब्रह्मस्तम्बपर्यन्तजगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गतास्सर्वे ते हि संसारगोचराः ॥ यश्चोद्भूतबोधाश्च ध्यानेनैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् । ध्येयं ध्यानविदां सम्यक् तद्विष्णोः परमं पदमिति । तथा * श्रूयतां तु नरव्याघ्र! वेदवेदान्तनिश्चयः । यज्ञेशो यज्ञपुरुषः पुण्डरीकाक्षसंज्ञितः ॥ स विष्णुः परमं ब्रह्म यतो नावर्तते पुनरिति । भगवदर्चावतारमाहात्म्येऽप्येवमाह—* यादृशे तु मनःस्थैर्यं रूपे बध्नाति चक्रिणः । नृसिंहवामनादीनां तादृशं कारयेद्बुधः ॥ सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥ तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् । तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ॥ विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीमिति । अत्र प्रतिष्ठादिवशान्मुख्यावताररूपत्वं विवक्षितम् । उक्तं हि **भगवच्छास्त्रे**—* सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः । तेनार्च्यो भगवान् साक्षात् नोपचारधिया क्वचिदिति । **जितन्तेस्तोत्रे** च भगवत एव जगत्कारणत्वमोक्षप्रदत्वादिकं प्रादर्शयत् । * देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानिति । **श्रीवैष्णवपुराणे पुलस्त्यवसिष्ठाभ्यां लैङ्गे** च ब्रह्मणा दत्तवर इति प्रसिद्धः **पराशरश्च**—* विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च स इति प्रधानप्रतिपाद्यं संगृह्य तदेव बहुधा स्थापयामास । * यद्वै किं च मनुरवददित्यादिप्रख्यातमनुबृहस्पतिदक्षादिवाक्यानि च पूर्वमेवोदाहृतानि । एतेषु मतेष्वेकैकमेव तत्त्वनिर्णयाय पर्याप्तम्; किंपुनः पूर्वोक्तैश्शीलरूपादिभिः परस्परं च समुच्चितमित्यभिप्रायेण मतैश्चेत्युक्तम् । आसुरी—तामसी प्रकृतिर्येषां ते आसुरप्रकृतयः, तामसप्रकृतित्वाद्बोद्धुं न शक्नुवन्तीत्यर्थः । आसुरपदोपादानं * राक्षसीमासुरीं चैति सहोक्तोपलक्षणम् । दर्शितश्च दैवासुरसर्गविभागो भगवता—* द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव चेत्यादिना । उक्तं च **शौनकेन**—* द्विविधो भूतसर्गोऽयं दैव आसुर एव च । विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुर इति । **आदित्यपुराणे** च—* देवानां च परो धर्मस्सदा यज्ञरताः क्रियाः । स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजारतिस्तथा ॥ दैत्यानां बहुमानित्वं मात्सर्यं सत्स्वसत्क्रिया । निन्दनं वेदशास्त्राणां हरभक्ति-

रनुत्तमेति । तथा *तस्मिन्नपि हरौ विप्र! स्वबुद्ध्या ये न मोहिताः । कीर्तयिष्यन्ति ते देवा मन्तव्यास्त्वितरेऽसुराः । इति। बोद्धुमित्यत्र सर्वपरिबृढत्वेनेत्युपस्कार्यम्। न प्रभवन्तीत्यनेन तामसप्रकृतिपरवशत्वं व्यज्यते। अवधारणेन कालान्तरेऽप्येतद्दृढीक्रियते । उक्तं हि **मनुना** *यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं विभुः । तदेव स पुनर्भेजे सृज्यमानः पुनःपुनःरिति । महाभारते च *न गाथा गायिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथेति, *जन्मान्तरसहस्रेषु या बुद्धिर्भाविता पुरा । तामेव भजते जन्तुरुपदेशो निरर्थक इति च । न हि शास्त्रे सद्भिर्बहुल उपदिष्टे पठितेऽपि सत्त्वोत्कर्षनिमित्तभगवद्भक्तिरहितानां रावणदुर्योधनप्रभृतीनां तत्त्वाध्यवसायस्सम्पद्यते। यथाऽऽह **सञ्जयः** *विद्या राजन्न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥ मायां न सेवे भद्रं ते न वृथा धर्ममाचरे । शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनमिति । न च जगत्यबोद्धारस्सन्तीत्येतावता प्रमाणसिद्धार्थो न स्यात्, अन्यथा वा स्यादिति भावः ॥ १५ ॥

**उल्लङ्घितत्रिविधसीमसमातिशायिसंभावनं तव परिव्रढिमस्वभावम् ।**
**मायाबलेन भवताऽपि निगुह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥** १६

अथ सर्वप्रतिपत्त्यभावनिबन्धनं चोद्यं तत्सद्भावेन परिहरन् परसमृद्धिप्रयोजनतया सत्त्वस्थानां भगवदनुभवलाभेन सन्तुष्यति—**उल्लङ्घिते**ति ॥ यद्वा *त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययमिति सर्वैरवेद्यतया स्वेनैवोक्तं भगवन्तं कथं केचिज्जानीयुरिति शङ्कायां तत्प्रबोधहेतुरिहोच्यते । पूर्वश्लोके परिजिहीर्षार्थं भगवत्तत्त्वानवगमहेतुरुक्तः । अत्र तूपादित्सार्थं तज्ज्ञानकारणोक्तिः । सीमा—परिच्छित्तिः । सा चात्र देशतः कालतो विषयतश्च त्रिविधा । समश्चातिशायी च समातिशायिनौ । त्रिविधसीम्नस्समातिशायिनोश्च संभावनोल्लङ्घिता येन तथोक्तः । अन्येषां हि प्रभुत्वं देशादिभिः परिच्छिन्नम् । अत एव समाधिकसंभावनायुक्तम् । **तव**—*सत्यं ज्ञानमनन्तं ब्रह्म, *न समोऽनेन कश्चन, *न तत्समश्चाभ्यधिकश्च दृश्यते, *न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः, *नास्ति नारायणसमः इत्यादिप्रसिद्धस्य । **परिव्रढिमस्वभावं** प्रभुत्वरूपं यावत्स्वरूपभाविनं धर्मम् । *प्रभौ परिवृढ इति निपात्यते । **मायाबलेन** गुणमयप्रकृतिसामर्थ्येन । श्रूयते हि *अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः, *मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति । स्वयं चाह—*दैवी ह्येषा गुणमयी मम माया दुरत्ययेति । **जितं ते**—स्तोत्रेऽप्युक्तम् *अध्यक्षश्चानुमन्ता च गुणमायासमावृत इति । उक्तं च **चतुःश्लोक्यां** *यवनिका माया जगन्मोहिनीति । यद्वाऽत्र मायाबलशब्देन स्वसाधारणाप्राकृतविग्रहे कर्मवश्यमत्स्यकूर्मादिसाजात्यभ्रमजनकशक्तिप्रकर्ष उच्यते । यथोक्तम् । अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ तेन वञ्चयते लोकान् मायायोगेन केशवः ॥ इति । **भगवताऽपि** *आत्मानं मानुषं मन्ये रामं दशरथात्मजम्, *अहं वो बान्धवो जात इति स्ववाक्येनापि मोहयता सर्वज्ञेन सर्वशक्तिनाऽपीति भावः ।

भवताऽपि बलेनेति त्वद्बलमेव स्वबलमुपादाय त्वत्सेवायां प्रवृत्तास्त्वामपि स्ववशीकृत्य त्वत्तोऽपि बलीयांसो भवन्तीति भक्तानां प्रभावातिशयव्यञ्जनार्थोऽपिशब्दः । **निगुह्यमानं** नितरां प्रच्छाद्यमानम् । **पश्यन्ति** शास्त्रतः प्रथमं विशदमवगच्छन्ति, पश्चाद्योगबलेन साक्षात्कुर्वन्ति च; यथाऽऽह **सनत्सुजातः**—*योगिनस्तं प्रपश्यन्ति भगवन्तं सना-

तनमिति । **केचिदिति** दुर्लभत्वसूचनार्थम् । गीयते हि * स महात्मा सुदुर्लभ इति । **श्रीपौष्करे** च * दुर्लभा भगवद्योगभाविनो भुवि मानवाः । तद्दर्शनात्तदालापात् सुलभं शाश्वतं पदमिति । **अनिशं** सर्वजनमोहने कलियुगेऽपीति भावः । उक्तं हि भगवता **शौनकेन** * कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो हृदये यस्य नाच्युत इति । **त्वदनन्यभावाः** त्वदेकविषयचित्तवृत्तयः, प्रयोजनान्तरशरण्यान्तरत्यागिन इति भावः । श्रूयते * यत्तदद्रेश्यमग्राह्यमित्यारभ्य * यद्भूतयोनिं परिपश्यन्ति धीराः, * ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः * नायमात्मा प्रवचनेन लभ्य इत्यारभ्य * तस्यैष आत्मा विवृणुते तनूं स्वां * तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति । * एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः—* स्वाध्यायश्चक्षुरुत एकमस्य योगो द्वितीयमभिवीक्षणाय । अध्ययनमनननयनोऽस्य द्रष्टा न मांसचक्षुरभिवीक्षते तमिति । स्मर्यते च—* ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः । * भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपेति ॥ १६ ॥

**यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च ।**
**गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥** १७

उक्तप्रकारं परिबृढत्वमनितरसाधारणविभूतिमहिम्ना स्थिरीकरोति **यदण्डमिति** ॥ **यत्** पितामहोत्पत्तिस्थानतया प्रसिद्धं चतुर्दशभुवनावरणहेमकटाहरूपमण्डम् । एकवचनमिह समुदायाभिप्रायम् । * अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोट्ययुतानि चेति पुराणोक्तेः । अण्डान्तरमेव गोचरो यस्य तदण्डान्तरगोचरम् उदुम्बरमशकवत् अदृष्टबाह्यप्रदेशम् । अण्डाधिपतिप्रभृति चतुर्विधजन्तुजातं तद्भोग्यभोगोपकरणभोगस्थानादिकं च । **दशोत्तराण्यावरणानि** तोयप्रभृतीनि । उक्तं हि * दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम् । सर्वोऽम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः ॥ वह्निश्च वायुना वायुर्मैत्रेय नभसा वृतः । भूतादिना नभस्सोऽपि महता परिवेष्टितः ॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै । महान्तं हि समावृत्य प्रधानं समुपस्थितम् ॥ अनन्तस्य न तस्यान्तस्सङ्ख्यानं चापि विद्यते । तदनन्तमसङ्ख्यातप्रमाणं चेति वै यतः ॥ हेतुभूतमशेषस्य प्रकृतिस्सा परा मुने ॥ इति । यच्छब्दानामिह प्रतिनिर्देशो यथार्हमध्याहर्तव्यः । **गुणाः** बन्धकारणत्वेन चतुर्दशाध्याये गीताः सत्त्वादयः प्रकृतिधर्माः । अत्र गुणानां पृथगुक्त्या साम्यावस्थं गुणत्रयमेव प्रकृतिरिति साङ्ख्यमतं निरस्तम् । **प्रधानं** महदादिविकाररहितस्त्रिगुणद्रव्यभागः । अण्डान्तरगोचरमिति क्षेत्रज्ञव्यष्टीनामप्युक्ततया **पुरुष**शब्द इह * दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि । प्रधानेऽवस्थितो व्यापीत्यादिभिः प्रकृतिव्याप्तत्वेन प्रतिपादितं क्षेत्रज्ञसमुदायमाह । **परं पदं** पद्यत इति—पदं प्राप्यं स्थानान्तरेभ्यः परं पुनरावृत्तिरहितमप्राकृतं मुक्तिस्थानमित्यर्थः । श्रूयते हि—* यो अस्याध्यक्षः परमे व्योमन्, * हिरण्मये परे लोके विरजं ब्रह्म निष्कलम्, * पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि, * ते ह नाकं महिमानस्सचन्ते यत्र पूर्वे साध्यास्सन्ति देवाः, * यथा पादोदरस्त्वचा विनिर्मुच्यते एवमिहैव स पाप्मना विनिर्मुक्तस्स सामभिरुन्नीयते ब्रह्मलोकम्, * विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्, * स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते इत्यादि । **महाभारते** च—* रम्याणि कामचारीणि विमानानि सभास्तथा । आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥ एते वै निरयास्तात स्थानस्य परमात्मन इति । अपुनरा-

वृत्तिस्थानत्वं चोक्तं—* ज्ञानविज्ञानिनः केचित् परं पारं तितीर्षवः । अतीव तत्सदः पुण्यं पुण्याभिजनसेवितम् ॥ तत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च ॥ इति । *ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः । नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनाः ॥ सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥ इति च । भगवन्तं प्रति च देवा ऊचुः *दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् । गच्छ प्रभो रक्ष चास्मान् प्रपन्नान् कल्पेकल्पे जायमानस्त्वमूर्त्येति । **आरण्यपर्वणि** च धर्मसुतं प्रति आर्ष्टिषेण आह—* यमाहुस्सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् । अनादिनिधनं देवं प्रभुं नारायणं हरिम् ॥ ब्रह्मणस्सदनाच्चस्य परस्थानं प्रकाश्यते । देवा हि यत्र पश्यन्ति दिव्यं तेजोमयं पदम् ॥ अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्षं देवदानवैः ॥ यतयस्तत्र गच्छन्ति देवं नारायणं हरिम् । परेण तपसा युक्ता भाविताः कर्मभिश्शुभैः ॥ योगसिद्धा महात्मानः तमोमोहविवर्जिताः ॥ तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ॥ स्थानमेतन्महाराज ध्रुवमक्षरमव्ययम् । ईश्वरस्य सदा ह्येतत्प्राणमात्रं युधिष्ठिरेति । एतत् कार्यभगवल्लोकविषयमिति केचित् । अपुनरावृत्तिस्थानत्वाक्षय्यत्वादिव्यपदेशात् परमेव पदमित्यन्ये । युधिष्ठिरादिभ्यस्तत्प्रकाशनं तु * व्यासप्रसादाच्छ्रुतवानितिवदृषिप्रभावादुपपद्यते । शेषमप्यविरुद्धं नेयम् । **याज्ञवल्क्यस्मृतौ** चोक्तम् *ओङ्काररथमारुह्य मनः कृत्वा तु सारथिम् । ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदमिति । अत्र स्थानवाचिनां शब्दानां परमात्मस्वरूपपरत्वप्रतिक्षेपायोक्तं **षडर्थसङ्क्षेपे** *व्यतिरेकाधिकरणनिवासशब्दैरिति । अस्य च स्थानस्याप्राकृतत्वं * क्षयन्तमस्य रजसः पराके, * आदित्यवर्णं तमसः परस्तादिति रजस्तमोमयप्रकृतिसीमातिक्रान्तत्वश्रुत्या भगवच्छास्त्रैश्च सिद्धम् । प्रकृतेरेवाक्षराख्यः परिणतिविशेषः ईश्वरस्य मुक्तानां नित्यानां च भोगस्थानमिति केचिद्वदन्ति । तन्निरासार्थमिह प्रधानपुरुषाभ्यां पश्चात् परमपदस्य पृथगुपादानम् । अयं च पक्षः * कालं स पचते तत्र न कालस्तत्र वै प्रभुरित्यादिभिश्च निरस्तः ।

यच्चान्ये भगवत्स्वरूपमेव वा तस्य षाड्गुण्यं वा विचित्रशक्तिवशाद्दिव्यलोकत्वेनावस्थितमित्याहुः, तदपि श्रुत्यादिषु पृथगुक्तेर्बाधकाभावात् अन्यथा निर्विकारत्वश्रुतिविरोधप्रसङ्गाच्च निरस्तमित्यभिप्रायेण **ते विभूतय** इति प्रधानादिसाधारण्येन व्यतिरेकनिर्देशः । क्वचिद्विरुद्धनिर्देशास्तु यथार्हमुपचारेण नेतव्या इति । **परात्पर**मित्यत्र पञ्चम्यन्तः परशब्दः प्रधानात्परतः क्षेत्रज्ञवर्गात्परभूतं मुक्तमाह । प्रथमान्तस्त्वनादिमुक्तजीवजातम् । यद्वा प्रकृतेः परात् क्षेत्रज्ञात्परमिति बद्धमुक्तनित्यजीवजातस्य सामान्येनोपादानम् । अत्र ब्रह्मशब्देन शुभाश्रयनित्यविग्रह उपचर्यते ; स्वरूपपरत्वोक्तेरनौचित्यात् । इह तु * सालम्बनो महायोगः सबीजो यत्र संस्थितः । मनस्यव्याहते सम्यग्युञ्जतां जायते मुने ॥ स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तरम् । मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिरिति **वैष्णवपुराणे** प्रोक्तम् । **चतुःश्लोक्यां** च—*मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतमिति । अत्र ब्रह्मशब्दोपचारनिमित्तं लोकोत्तरबृहत्त्वबृंहणत्वे । चकारेण दिव्यभूषणायुधादेरपि संग्रहः । **ते** सर्वान्तरात्मत्वेन विश्वपतित्वेन च श्रुतस्य । **विभूतयः** नियन्तव्याश्शेषभूताश्च । एतेषु द्रव्याणां * न तदस्ति विना यत्स्यान्मया भूतं चराचरमित्युक्तापृथक्सिद्धिमत्तया शरीरत्वेन विभूतित्वम्, अद्रव्याणां तु व्यवहितप्रकारतया । हिरण्यगर्भादीनां तु विशेषतः । सृष्ट्यादित्रयोपयुक्तविभूतित्वं बिभज्योक्तं **वैष्णवपुराणे**—* ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतस्सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा

प्रलयायैता जनार्दनविभूतयः ॥ इति । अत्र विष्णोरेव विष्णुविभूतित्वोक्तिर्विभूतिसजातीयस्वावताराभिप्राया । ते विभूतय इत्यनेन त्वद्विभूतित्वं स्वाभाविकं त्वदितरविभूतित्वं त्वदिच्छायत्तम् ; तथा तद्द्वाराऽपि त्वद्विभूतित्वं सिद्धमेवेति व्यज्यते ॥ १७ ॥

**वशी वदान्यो गुणवानृजुश्शुचिर्मृदुर्दयालुर्मधुरः स्थिरस्समः ।**
**कृती कृतज्ञस्त्वमसि स्वभावतस्समस्तकल्याणगुणामृतोदधिः ॥** १८

एवं भगवतः परत्वं प्रपञ्चितम् । [illegible] सौलभ्यमुच्यते—**वशी**ति ॥ यद्वा विभूत्यानन्त्यमुक्तम् । अथात्र [illegible] । वशः [illegible] वा, तद्वान् वशी ; तथा च नैघण्टुकाः * वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोरिति । तत्र प्रभुत्वार्थः * सर्वस्य वशी सर्वस्येशानः, * जगद्वशे वर्ततेदं कृष्णस्य सचराचरमित्यादिषु प्रसिद्धः । तथा पूर्वश्लोके प्रोक्तं परिबृढत्वं [illegible] । तस्मिन् सति हि [illegible] भृशं शोभन्ते ? आयत्तत्वार्थे तु [illegible] सौलभ्यातिशयः कथ्यते । यथाऽऽह स्वयमेव * ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमिति, * इमौ स्म मुनिशार्दूल ! किङ्करौ समुपस्थितौ इति च । पाण्डवदूतत्वपार्थसारथित्वादिवृत्तान्ताः प्रसिद्धाः ।

**वदान्यः** * प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः, * अर्थिषु प्रियवादित्वम्, * उदारास्सर्व एवैते, * स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य चेत्यादिषु दृष्टम् । स्वात्मपर्यन्तसर्वस्वदानशीलत्वं च * य आत्मदा बलदाः, *एको बहूनां यो विदधाति कामान्, * एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तदित्यादिषूक्तम् । **नारद**श्च पुण्डरीकं प्रत्याह—* तस्मात्त्वमपि विप्रेन्द्र ! नारायणपरो भव । तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः इति । उक्तं च **श्री विष्णुधर्मे**—*सकलफलप्रदो हि विष्णुरिति, *रत्नपर्वतमारुह्य यथा रत्नं नरो मुने ! । सत्त्वानुरूपमादत्ते तथा कृष्णान्मनोरथानिति च । **इतिहासोत्तमे** च *यथा कल्पद्रुमात्सर्वं प्राप्यते [illegible] । तथा संप्राप्यते विष्णोरपि स्याद्दुर्लभं द्विजेति । **स्वयमप्याह**—* अश्वमेधसहस्राणां सहस्रं यस्समाचरेत् । नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ इति ।

**गुणवान्**—गुणशब्दोऽत्र न [illegible], [illegible]त्वात् ; **समस्तकल्याणगुणामृतोदधि**रिति निगमनेन चरितार्थत्वाच्च । अप्रधानविषयत्वं पारिभाषिकगुणपरत्वं सत्त्वादिगुणविशेषार्थत्वं चात्रासङ्गतमयुक्तं च । अत उचितः कश्चिद्गुणविशेषोऽत्र विवक्षितः । गुण्यत इति गुणः अभ्यसनीयः अनुकूलतमत्वेन शीलनीय इत्यर्थः । ईदृशत्वं च सौशील्यस्य गुणान्तरेभ्यस्समधिकम् । इदं च महतो मन्दैस्सह नीरन्ध्रसंश्लेषस्वभावत्वम् । तदेत[illegible]वृत्तान्तेषु प्रसिद्धम् ।

**ऋजुः**—आश्रितेषु मनोवाक्कायवृत्तीनामेकरूपतया कौटिल्यरहितः । एतेन विश्वसनीयत्वं व्यज्यते । यथा चाह—* अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रित्य ब्राह्मणेभ्यो विशेषतः, * द्यौः पतेत्पृथिवी शीर्येत् हिमवान् शकलीभवेत् । शुष्येत्तोयनिधिः कृष्णे ! न मे मोघं वचो भवेत् इति । आश्रितच्छन्दानुगुणावस्थानत्वं वा ऋजुत्वम् ।

**शुचिः**—अपहतपाप्मत्वादिगुणकः । भावशुद्धिर्वा विवक्षिता । सा चाश्रितरक्षणे प्रत्युपकारादिनिरपेक्षता, द्रव्यतारतम्यानादरेण भक्तिमात्रप्रसाद्यत्वं वा । यथोच्यते—*भक्तैरण्वप्युपानीतं प्रेम्णा भूर्येव मे भवेत् । भूर्यप्यभक्तोपहृतं

न मे तोषाय कल्पते ।।, * पृथिवीं रत्नसंपूर्णां यः कृष्णाय प्रयच्छति । तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः ।। * अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् । अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः ।। इति । पावनत्वं वा शुचित्वम् । यथा * पावनस्सर्वभूतानां त्वमेव रघुनन्दनः !, * पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ; * पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्, * शुचिर्भवति संस्मृत्य स्नातो भवति दर्शनात् । प्रणिपातेन पूतात्मा त्रयः कृष्णे महागुणाः, * स्नातो वा यदि वाऽस्नातः शुचिर्वा यदिवाऽशुचिः । यस्स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरश्शुचिरिति ।

**मृदुः**—सापराधैरपि सहसाऽऽश्रयितुं शक्यः । यथोक्तं—* विदितस्स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि, * अराक्षसमिमं लोकं कर्तास्मि निशितैश्शरैः । न चेच्छरणमभ्येषि मामुपादाय मैथिलीमिति । आश्रितविश्लेषासहत्वं वा मृदुत्वम् । तच्च वक्ष्यति—* क्षणेऽपि ते यद्विरहोऽतिदुस्सह इति । शासनप्रवृत्तस्यापि * सामोपहितया वाचेति क्रमेण सामप्रधानत्वं वा ।

**दयालुः**—स्वप्रयोजनान्तरमनपेक्ष्य परदुःखनिराकरणेच्छावान् । तदप्युच्यते * आनृशंस्यमनुक्रोशः श्रुतं शीलं दमश्शमः । राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तममित्यादिभिः । न चातिदुःखमयविषमसृष्ट्या नैर्घृण्यादिदोषः—* वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयतीति सूत्रकारैस्तत्प्रतिक्षेपात् । अत एव मोक्षोऽपि कस्यचित्कदाचिदुपपद्यते ।

**मधुरः**—* रसो वै सः, * आनन्दो ब्रह्म, * कं ब्रह्म खं ब्रह्मेत्यादिप्रसिद्धनिरतिशयानन्दस्वरूपः । अत एवोपायदशायामपि माधुर्यमुच्यते—* प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः, * कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च, * क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्व जपो वासुदेवेति मुक्तिबीजमनुत्तममिति । वाचिकं कायिकं च वा माधुर्यं, *प्रियवादी च भूतानां सत्यवादी च राघवः, *सोमवत्प्रियदर्शनः, *रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्, * साक्षान्मन्मथमन्मथः इत्यादिषु प्रसिद्धम् । अत एव जिघांसावस्थायामपि हृद्यत्वं रक्तरुष्टयोर्भीष्मचैद्ययोः प्रसिद्धम् ।

**स्थिरः**—आश्रितापराधैस्तत्प्रदर्शकैरप्यक्षोभ्यः । यथाऽऽह सुग्रीवादीन् प्रति * मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यादिति ।

**समः**—जातिगुणवृत्तादिवैषम्यवतामपि शरण्यत्वे विशेषरहितः । श्रूयते हि * सर्वस्य शरणं सुहृदिति । स्मर्यते च * सर्वलोकशरण्याय, * सुहृदं सर्वभूतानाम्, * समोऽहं सर्वभूतेष्विति ।

**कृती**—स्वार्थकर्तव्यविशेषरहितः । तदाह—* न मे पार्थास्ति कर्तव्यमिति । यद्वा आश्रितरक्षणेन कृतकृत्यः । तदप्युक्तम्—* अभिषिच्येत्यारभ्य * कृतकृत्यस्तदेति । अथवा कृतमुपकारः, कृतज्ञ इत्यत्र तथा दृष्टेः ; तद्वान् कृती । धर्मप्रवर्तनार्थानुष्ठानवान् वा । द्वेधाऽपि विश्वोपकारकव्यापारवानित्यर्थः । आश्रितेषु विशेषतश्च गीयते * योगक्षेमं वहाम्यहम्, * ददामि बुद्धियोगं तमित्यादि ।

परैरुपकृतं जानातीति **कृतज्ञः** । उपकारलेशमपि बहुमन्यत इति तात्पर्यम् । तदुच्यते—* न स्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेण कृतेनैकेन तुष्यतीति । स्वयं चाह—* गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पतीति । यद्वा कदाचित्स्वकृतमाश्रितप्रार्थनाभङ्गं प्रस्तावसरे तदपेक्षितपूरणाय सानुशयो जानातीति **कृतज्ञः** । तदाह—* शिरसा याचतस्तस्य न कृतं वचनं मयेति । अत्र असीति मध्यमपुरुषेणार्थसिद्धावप्यधिकेन त्वंशब्देन हेमारविन्दपरिमलन्यायात् गुणानां गुण्यधीनोत्कर्षस्सूच्यते । तदुक्तमभियुक्तैः

* गुणायत्तमित्यारभ्य * गुणास्सत्यज्ञानप्रभृतय उत त्वद्गततया शुभीभूयं याता इति हि निरणैष्म श्रुतिवशादिति। असीति वर्तमानव्यपदेशः कालभेदेन स्वभावभेदशङ्कानिरासार्थः । **स्वभावतः** न तु पुण्यशेषविवर्तपरिणामैरित्याशयः । नित्यानां मुक्तानां च गुणास्त्वदधीनाः, तव तु न पराधीना इति भावः । श्रूयते हि * स्वभाविकी ज्ञानबलक्रिया चेति । त्वय्यविद्यमानः कश्चित्कल्याणगुणो नास्तीत्यभिप्रायेण सामान्यतस्संगृह्योपसंहरति—**समस्तकल्याणगुणामृतोदधिरिति** । *समस्तकल्याणगुणात्मकोऽसौ तेजोबलैश्वर्यमहावबोध इत्यादिकमिहानुसन्धेयम् । अत्र कल्याणगुणशब्देन निर्गुणश्रुतीनां गुणान्तरविषयत्वं दर्शयन् हेयगुणविषयत्वसूचनात् कल्याणगुणकात्स्न्र्यवचनाच्च निर्गुणवादः परिमितगुणवादश्च निरस्तः । * यथा रत्नानि जलधेरसंख्येयानि पुत्रक ! । तथा गुणा ह्यनन्तस्याप्यसंख्येया महात्मनः ॥ इत्यादिकं सूचयता [illegible]नेन गुणानामपरिच्छेद्यत्वं कात्स्न्र्येन भोग्यत्वं च व्यज्यते । ब्रह्मस्वरूपवत्तद्गुणानामपि भोग्यत्वं श्रूयते—* सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति । * य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानिति दहरविद्योक्तन्यायात्कामशब्द इह कल्याणगुणपरः ॥ १८ ॥

**उपर्युपर्यब्जभुवोऽपि पूरुषान्प्रकल्प्य ते ये शतमित्यनुक्रमात् ।**
**गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते ॥** १९

उक्तानामसंख्यातानां गुणानां प्रत्येकमनवधिकातिशयत्वमभिप्रेत्याह—**उपर्युपरी**ति ॥ * उपर्यध्यधसस्सामीप्ये, * उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यत इत्यनुशासनात् अत्राब्जभुव इति द्वितीया । पञ्चमी त्वतसर्थप्रत्ययान्तोपरिशब्दयोगादत्रायुक्ता । षष्ठी चाम्रेडितोपरिशब्दयुक्ते विशेषतो द्वितीयाविधानादिह न ग्राह्या । **अब्जभुवः पूरुषा**निति प्रक्लृप्तिकर्मत्वेन सामानाधिकरण्यं वा । अब्जभूशब्देन * पृष्टः प्रोवाच भगवानब्जयोनिः पितामह इत्यादिप्रसिद्धमौत्पत्तिकवैभवं सूच्यते । एतेनानन्दवल्ल्यां प्रजापतिशब्दविवक्षितं व्याख्यातम् । **अपि**शब्दोऽसंभावितक्लृप्तिद्योतकः । हिरण्यगर्भं सार्वभौममनुष्यस्थाने निवेश्य तत्प्रभृतींश्चतुर्मुखपर्यन्तानविद्यमानानपि पुरुषान् पूर्वपूर्वापेक्षया प्रकर्षेण कल्पयित्वेत्यर्थः । **ते ये शतमित्यनुक्रमात्** प्रत्यक्षश्रुतिपठितानुक्रमेणाविद्यमानासंख्यातपाठपर्यायाभ्यूहं कृत्वेति भावः । **गिर** इत्यनेन यथावदर्थाभिधानसामर्थ्यं सूच्यते । * ते ये शतमित्यादिसमभिव्याहाराद्वेदगिर इति [illegible] । **यद्यप्यानन्दवल्ल्यां** * सैषाऽऽनन्दस्य मीमांसेत्यारभ्यानन्दाख्य एक एव गुणः परिच्छेत्तुमशक्य इत्युक्तम्; तथाऽपि * युवा स्यादित्यादिना गुणविभूतिप्रकर्षनिबन्धनस्यानन्दप्रकर्षस्योपक्रान्ततया परस्मिन्नपि ब्रह्मणि अनन्तगुणविभूतिनिबन्धनस्य तस्य विवक्षितत्वात्, तन्नान्तरीयकतया सर्वगुणानां निरवधिकत्वं सिध्यतीत्यभिप्रायेणाह—**त्वदेकैकगुणावधीप्सये**ति । अत्र गुणगुणिभेदव्यपदेशात् भगवत्स्वरूपेण भगवद्गुणानामभेदं वदन्तः प्रत्युक्ताः । सामानाधिकरण्यं तु धर्मधर्मिभावादेवोपपद्यते । अन्यथा तन्मतेऽपि स्वयं निराचिकीर्षितनिर्गुणवादपरिशेषस्स्यात् । अपिशब्दस्स**दा स्थिता** इत्यत्र वाऽन्वेति । सर्वदोद्युक्ता अपीत्यर्थः । यद्वा **सदा स्थिता गिर** इति नित्यतया वक्तृदोषोज्झितत्वं व्यज्यते । तदा **प्रकल्प्यापि नोद्यमतोऽतिशेरत** इत्यन्वयः । पुनःपुनरुपक्रमावस्थैव परिशिष्यत इति भावः । अत्र * तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादित्यसंभावितकल्पनयैवोपक्रमः । अतस्समानन्यायतया तादृशकल्पनाप्रवाहेऽपि श्रुतेस्तात्पर्यमुन्नीतम् । पूर्वं नारायणशब्देन संबोधित एवानन्दवल्लीस्थब्रह्मशब्दार्थतयाऽत्र त्वच्छब्देन निर्दिश्यते । * स यश्चायं पुरुषे यश्चासावादित्ये स एकः इति पुरुषवर्तिनस्सर्वान्तर्यामिणस्सवितृमण्डलमध्यवर्तिपुण्डरीकाक्षपुरुषेणैक्योपदेशश्चात्र विज्ञानमयादप्यर्थान्तरमानन्दमयं विश्वात्मानं नारायणमेव व्यनक्ति ॥ १९ ॥

**त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।**
**भवन्ति लीला विधयश्च वैदिकास्त्वदीयगम्भीरमनोनुसारिणः ॥** २०

नन्वेवंविधनिरतिशयानन्दस्य भगवतो न तावत्स्वार्थे जगद्व्यापारः, अपूर्णत्वप्रसङ्गात् । नापि परार्थः; संसारस्य दुःखमयत्वादित्यत्र केनचिदाकारेणोभयार्थत्वं विश्वोपकारव्यापारानन्त्यं च वदन् पूर्वोक्तगुणप्रकर्षमेव स्थिरीकरोति—**त्वदाश्रितानामिति** ॥ त्वामाश्रितानां कृते तदभीष्टसिद्ध्यर्थं तद्भोग्यत्वार्थं चेति भावः । एतेन पूर्वोक्तापरिमितगुणविभूतिवैभवस्य भोक्तॄणामभावात् अरण्यचन्द्रिकात्वप्रसङ्गोऽपि निरस्तः । जगत्सृष्टेः भगवद्भक्तार्थत्वं च * सर्वेऽस्मै देवा बलिमावहन्ति, * सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इत्यादिश्रुतिभिरभिव्यज्यते । जगदुद्भवस्थितिप्रणाशशब्दाः णिजर्थमन्तर्भाव्य प्रयोजकव्यापारपराः । विश्वोपादानभूतस्य सर्वान्तर्यामिणो जगच्छरीरकत्वाकारेणोत्पत्त्यादिकमेव वा विवक्षितम् । अत एव गात्रविक्षेपरूपनृत्तवल्लीलात्वमपि घटते । तेन स्वार्थत्वमपि सिद्धम् । आदिशब्देनानुप्रवेशनियमनादिकमवतरणादिकं च गृह्यते । भवन्तीत्यनेन तादृशलीलाया उपपन्नत्वं प्रतिकल्पानुवृत्तत्वं च व्यञ्जितम् । अत्र तवेत्यध्याहर्तव्यम् । त्वदिति पदच्छेदेन त्वत्तो निमित्तोपादानभूताद्भवन्तीति वा योज्यम् । **वैदिकाः विधयः** वेदसंबन्धिनो विधिभागाः ।

**त्वदीयगम्भीरमनोनुसारिणः**—तवैव स्वेतरदुरवगाहाक्षोभ्यसङ्कल्पानुविधायिन इत्यर्थः । यथाऽऽह—* श्रुतिस्स्मृतिर्ममैवाज्ञेति । एते च त्वदाश्रितार्थाः । एवं वा योजना; त्वदाश्रितानां चतुर्मुखमुखाश्चेति पूर्वोक्तानां ब्रह्मरुद्रादीनामित्यर्थः । जगच्छब्द इह यथार्हमण्डान्तर्वर्तितत्तत्कार्यविशेषविषयः । एषां संसारविमोचकत्वं * शङ्करस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन विष्णुभक्तः प्रजायते ॥ त्रिभिः प्रजापतेर्भक्तः सप्तभिश्शङ्करस्य तु । विंशत्याऽग्नीन्द्रसूर्यादेः विष्णुभक्तः प्रजायते । इत्यादिन्यायादनुग्रहोपदेशधर्मप्रवर्तनादिद्वारा स्यात् । लीलात्वोक्तिरिह तेषां भगवदनुग्रहेण सृष्ट्यादेः प्रियत्वसुकरत्वसूचनार्था । त्वदाश्रितानामप्येवं, तव तु किं पुनरिति चाभिप्रेतम् । वैदिकविधीनां भगवदाश्रितमनोनुसारित्वं च * अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणास्सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामास्स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः अथाभ्याख्यातेपु ये तत्र ब्राह्मणास्सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामास्स्युः यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः एष आदेशः एष उपदेशः इत्यादिश्रुतिसिद्धम् । स्मर्यते च * श्रुतिस्स्मृतिस्सदाचारः, * वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदामिति विधिशब्द इह वैदिकानुष्ठानपरो वा । पूर्वयोजनायां च भगवता धर्मसंस्थापनार्थं क्रियमाणानि वैदिकधर्मानुष्ठानानि ग्राह्याणि ।

नन्विह भगवता परमसाम्यमापन्नानां मुक्तानां जगद्व्यापारादेरुक्तिः किं न गृह्यते ? उक्तं हि परमसंहितायां * केन रूपेण भिद्यन्ते मुक्तास्तव शरीरिणः । एतदाचक्ष्व मे देव ! गुह्याद्गुह्यतरं परमिति ब्रह्मणा पृष्टे प्रत्युक्तम्—* अहमेव भवन्त्येते न भेदस्तत्र कश्चन । यथाऽहं विहराम्येवं तथा मुक्ताश्च देहिनः इतीति । अतो मुक्तस्य भगवदैक्यात् जगद्व्यापारादि स्यादिति । मैवम्; तत्रापि * तव शरीरिण इत्यनूदितसर्वशरीरित्वानुगुणमैक्यव्यपदेशस्य श्रुतिस्मृतिसिद्धपरमसाम्यविवक्षया नेतव्यत्वात् । * रामसुग्रीवयोरैक्यमित्यादिन्यायाच्च । अन्यथा * यथाऽहं विहरामीत्यादिना दृष्टान्तदार्ष्टान्तिकभावेन भेदव्यपदेशो न घटते । तदिह मुक्तानां विहारसाम्यवचनं * जक्षत् क्रीडन् रममाणः * सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्तीत्युपनिषदुक्तपरिच्छिन्नव्यापारविषयम् । तदेव हि तत्रान्तिमे पटले दर्शितं—*सायुज्यं

प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः इति । एवं मुक्तानां जगद्व्यापारे शक्तिरस्ति तत्प्राप्तिर्नास्तीति पक्षोऽपि न विचारार्हः । न हि मुक्तानां सर्वशरीरित्वम्, अश्रुतत्वादनुपपत्तेश्च ; तदभावे कथं *बहु स्यामिति सङ्कल्पशक्तिः ; तथाविधशक्तिशालिनः तदप्राप्तिश्चात्र दुर्वचा । तथैव नित्यानामपि । उक्तं हि **भाष्ये**ऽनन्तपदव्याख्याने [illegible] नित्या व्यावृत्ताः इति । अतो यथोक्त एवार्थः ॥ २० ॥

**नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये ।**
**नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे ॥** २१

एवं [illegible] निरुपाधिकस्वामिनि निरपेक्षस्वतन्त्रे निरवधिकसौलभ्ये भगवति स्वात्मनस्स्वरूपनिबन्धनं गुणकृतं च दासत्वमनुभवंस्तदुचितां वृत्तिमप्याचरति—**नमोनम** इति ॥ नमस्कारप्रकरणे च नमश्शब्द एवं निरुच्यते—*याः काश्चन कृतयो मम भगवति । न मम ममताऽस्ति तासु । भगवत एव ताः । अममोऽहं भगवति । अहमपि न मम । भगवत [illegible]नां योजयत्यतो नमः—इति । इममेवार्थमभिप्रेत्योक्तं **महाभारते** *द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्मणः पदम् । ममेति द्व्यक्षरो मृत्युः न ममेति च शाश्वतमिति । नमस्कारप्रभावश्च **श्रीविष्णुधर्मा**दिषु प्रसिद्धः । यथा—*प्रणम्य कृष्णं सहसा पांसुक्लिष्टे महीतले । निष्कल्मषो भवेत्सद्यो ललाटे पांसुमण्डनात् ॥ दुर्गसंसारकान्तारमपारमभिधावताम् । एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः ॥ *एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ *अतसीगुच्छसङ्काशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ *नमस्कारः कृतो यज्ञः सर्वयज्ञोत्तमो मतः । नमस्कृत्य महायज्ञमश्वमेधफलं लभेत् ॥ *प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् । स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥ *नम इत्येव यो ब्रूयान्मद्भक्तश्श्रद्धयाऽन्वितः । तस्याक्षयो भवेल्लोकः [illegible] नारद !, *हरिममरगणार्चिताङ्घ्रिपद्मं प्रणमति यः परमार्थतो मनुष्यः । तमपगतसमस्तपापबन्धं व्रज परिहृत्य यथाऽग्निमाज्यसिक्तम्, *एको बहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव चक्रधरे प्रणाम इत्यादिभिः । अत्र नमश्शब्दस्य वीप्सा पुनःपुनरावृत्तिश्च *नित्याञ्जलिपुटा हृष्टा नम इत्येव वादिनः इतिवत् परत्वसौलभ्यानुबन्धिविभूतिगुणानन्त्यानुभवजनितभक्तिप्रकर्षं व्यनक्ति । श्रुत्यादिषु चैवं वीप्सादिकं दृश्यते । आहुश्च *प्रशंसायां प्रतिज्ञायां प्रलापे तर्जनेऽपि च । भये च विजये चैव पौनःपुन्यमलंकृतिः इति । **वाङ्मनसातिभूमय** इत्यादिषु चतुर्ष्वपि पूर्वापरसंबुद्ध्यादिसामर्थ्यात्तुभ्यमिति लभ्यते । **अतिभूमये** अतिक्रान्तभूमय इत्यर्थः । *यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, *यद्वाचाऽनभ्युदितमित्यादिष्वभिप्रेतं परमयोगिनामपि वाङ्मनसाभ्यामपरिच्छेद्यत्वमिह विवक्षितम् । कुदृष्टिसंमतात्यन्तागोचरत्वविवक्षायां श्रुत्यन्तरस्ववचनादिविरोधमभिप्रेत्याह—**वाङ्मनसैकभूमय** इति । श्रूयते हि *सर्वे वेदा यत्पदमामनन्ति, *सर्वे वेदा यत्रैकं भवन्तीति । स्मर्यते च *वेदैश्च सर्वैरहमेव वेद्य इति *नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतीति च । यद्वा स्वप्रसादभाजां गोपगोपिकादीनामपि वाङ्मनसयोरेकविषयभूतायेत्यर्थः । विषयान्तरवैमुख्यव्यञ्जनार्थमेकपदम् । उक्तं वाङ्मनसातिभूमित्वं स्थापयति—**अनन्तमहाविभूतय** इति । अनन्ता अनवधिका अत एव ब्रह्मादिविभूतिभ्योऽपि महती विभूतिर्यस्य स तथोक्तः । *नेति नेति इत्यादिनिषेधस्तु *प्रकृतैतावत्त्वं हि प्रतिषेधतीति सूत्रितम् । विभूतिप्रकर्षवचनं पूर्वोक्तगुणप्रकर्षस्योपलक्षणम् । अनन्तदयैकसिन्धव इत्यनेन वा सर्वगुणप्रकर्षोपलक्षणम् । दयानन्त्यमाश्रितानां वाङ्मनसैकभूमित्वे हेतुः ।

अक्षोभ्यत्वादिविवक्षया सिन्धुशब्दः। स्वभावतस्तावत् दयाया एवासावाश्रयः। एतस्य दैत्यादिनिग्रहीतृत्वमप्याश्रितेषु दयातिशयात् तद्रक्षणविश्रान्तमिति भावः। तदेवमत्र चतुर्थ्यन्तैः प्रागुक्तपरत्वसौलभ्यनिगमनं प्राप्यत्वशरण्यत्वसंग्रहश्च। अत्र नमश्शब्देन वक्ष्यमाणानन्यप्रयोजनप्रपत्त्यधिकारिणः [प्राप्य]प्राप्तुः परशेषतैकरसस्य तदधीनस्वरूपादिशोधनमपि सिध्यति ॥

अधिकारे प्रपित्सूनामुपायोत्तरकृत्ययोः। फले च पारतन्त्र्यादि बोध्यमत्र नमोष्टके ॥

किंच सर्वत्र निवृत्तिधर्मसाधारणापेक्षितं तत्त्वज्ञानं निर्ममत्वं च चतुर्थ्यन्तैर्नमोभिश्च स्थिरीक्रियते। अनुकूलाभिसन्धिः प्रतिकूलनिवृत्तिश्चात्र दृश्यत इति तन्मुखेन तदङ्गिका शरणागतिरप्युपक्षिता भवति। अथवा भरन्यासरूपा प्रपत्तिरेवात्र नम इति संग्रहेण प्रस्तूयते। आवृत्तिरिह *सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते इत्यादिवदुक्तस्थिरीकरणार्था। नमश्शब्दस्य शरणागतिविषयत्वं **दमयन्तीवृत्तान्ते** व्यक्तं—*शरणं प्रति देवानां प्राप्तकालममन्यतेत्युक्तेऽर्थे *वाचा च मनसा चैव नमस्कारं प्रयुज्य सेत्यभिधानात्। तथा *सर्वेषामेव लोकानां पिता माता च माधवः। गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः! इति **मार्कण्डेयो**क्तशरणागतिविषयश्च नमश्शब्दः प्रयुज्यते—*एवमुक्तास्त्रयः पार्था यमौ च भरतर्षभाः। द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनमिति। एतत्प्राशस्त्यं च बह्वृचा आमनन्ति *यस्समिधो य आहुतयो वेदेन ददाश मर्त्यो अग्नये यो नमसा स स्वध्वर इति। उपबृंहितं चैतद**हिर्बुध्न्येन** *समित्साधनकादीनां यज्ञानां न्यासमात्मनः। नमसा योऽकरोद्देवे स स्वध्वर ईरित इति। यद्वा स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमरहिततया प्रार्थयिष्यमाणपरमफलोपक्षेपार्थोऽयं नमश्शब्दः। अत्र भवत्वित्यध्याहार्यम्। उपायप्रयोगात्पूर्वमेव हि फलार्थित्वम्? एतदुपजीवनेनानन्तरश्लोके फलं न कण्ठोक्तम्। अत्र त्वावृत्तिस्तीव्रभक्त्या त्वरातिशयं नित्यानुवृत्तिं च व्यनक्ति ॥ २१ ॥

**न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे।**
**अकिञ्चनोऽनन्यगतिश्शरण्य त्वत्पादमूलं शरणं प्रपद्ये ॥** २२

एवं प्राप्यस्य शरण्यस्य प्राप्तुश्च शरणार्थिनः स्वरूपादिषु भगवता प्रकाशितेषु तद्विश्लेषमसहमानस्तस्मिन्नेव स्वरूपानुरूपपुरुषार्थविरोधिनिवृत्त्यर्थं स्वाधिकारोचितां प्रपत्तिं विशदं प्रयुङ्क्ते—**न धर्मेति** ॥ धर्मे निष्ठा स्थितिर्यस्य स धर्मनिष्ठः; धर्मरूपा निष्ठा यस्येति वा धर्मे नितिष्ठतीति वा। अहं **धर्मनिष्ठो नास्मि** यथावस्थितकर्मयोगतत्परिकरानर्ह इत्यर्थः। अत एव **न चात्मवेदी** न परिशुद्धात्मवेदनशीलः। ज्ञानयोगरूपं तदपेक्षितं वा पुष्कलं ज्ञानं मे नास्तीत्यर्थः। तदुभयाभावादेव **न भक्तिमान्** *भक्त्या त्वनन्यया शक्य इत्यादिसूक्ता भक्तिर्मे न विद्यते। अत्र *शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदमिति ब्राह्मवचनमनुसन्धेयम्। **त्वच्चरणारविन्द** इत्यनेन पवित्रत्वभोग्यत्वे व्यज्येते। अत्रायं क्रमः—शास्त्रार्थतत्त्वज्ञानतः कर्मयोगः, तेन जितस्वान्तस्य परिशुद्धात्मभावनारूपो ज्ञानयोगः। तद्द्वारा वा साक्षात्कर्मयोगेनैव वा आत्मावलोकनम्; तेन लब्धाधिकारस्य भक्तियोगः; ततस्तत्प्राप्तिरिति।

अस्मिन् जन्मनि कर्मयोगाभावेऽपि पूर्वजन्मकृतेन ज्ञानयोगस्स्यात्। इदानीं तदुभयाभावेऽपि *जन्मान्तरसहस्रेष्वित्यादिप्रतिपादितक्रमेण भक्तियोगस्स्यादित्युत्तरोत्तरनिषेध इत्यपि गमनिका। एवमनन्यसाधनोऽहमित्यभिप्रायेणाह—**अकिञ्चन** इति। यद्वा कर्मयोगादिहेतुभूतगुणक्रियादिसंपादनदौष्कर्याभिप्रायेणाकिञ्चनत्वोक्तिः। ईदृशस्य

ते किं मया? शरण्यान्तरं प्रयोजनान्तरं वा परिगृह्यतामित्यत आह—**अनन्यगतिरिति** । शरण्यान्तरप्राप्यान्तररहित इत्यर्थः । उभयत्र हेतुमभिप्रेत्याह—**शरण्य त्वत्पादमूलमिति** । शरण्येति संबुद्ध्या * मामेकं शरणं व्रज, * मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयमिति स्ववाक्यानि सूच्यन्ते । तथा * सर्वलोकशरण्याय, * शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः इत्याद्यपि । तथा **लैङ्गे**ऽपि * य एकः पुरुषश्रेष्ठः परमात्मा सनातनः । यस्माद्ब्रह्मा ततस्सर्वं तमाश्रित्यैव मुच्यत इति । **पुराणसारसमुच्चये** च * नान्यं देवमुपासीत विष्णोः परमकारणात् । मायामुत्तर्तुकामो वै मायी यो देवतागणः ॥ न चान्यज्ज्ञानकर्मभ्यां नान्यभक्त्या परं पदम् । प्राप्नोति पुरुषस्तस्मात् तमेव शरणं व्रजेदिति । **सङ्कर्षणसंहितायां** च * सर्वधर्मान् परित्यज्य तमेव शरणं व्रजेत् । भगवन्तं वासुदेवं परानन्दविभूतिदमिति । **जयाख्यसं**हितायां च * तमेव सर्वभावेन प्रयाहि त्वं महामुने!, * अन्यत्सर्वं परित्यज्य तमेवं शरणं व्रजेदिति । **विष्वक्सेनसं**हितायां च * सर्वधर्मान् सर्वकामानैहिकामुष्मिकानपि । सन्त्यज्य विधिना नित्यं षड्विधां शरणागतिम् । आचार्यानुज्ञया कुर्याच्छास्त्रदृष्टेन वर्त्मनेति । *कालेष्वपि च [illegible] प्रसिद्धम् । ततोऽन्यत्र सर्वत्र भयातिशयं व्यञ्जयितुं **त्वत्पादमूल**मित्युक्तम् । परमप्राप्यस्य तवैव पादमूलं प्रविष्टानामेवापुनरावृत्तिः । अतस्तद्धारणं मे फलमित्यपि सूच्यते । अनन्यगतिरित्येतत्सामर्थ्याच्च तत्सिद्धिः । *मुमुक्षुर्वै शरणमहं प्रपद्य इतिश्रुत्युक्तमाह—**शरणं प्रपद्य** इति । एतावता स्वनिष्ठावचनेन मन्त्रे पूर्वखण्डश्शब्दतोऽर्थतश्च दर्शितः । प्रपत्तिप्रकरणे शरणशब्द उपायपर इत्यहिर्बुध्न्यसंहितायामुक्तम्—* उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते सांप्रतन्त्वेष उपायार्थैकवाचकः इति ।

प्रपत्तिप्रयोगश्चैवं प्रदर्शितः—* अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यतामिति । तन्माहात्म्यं चैवं प्रकाशितम्—* अनेनैवं प्रपन्नस्य भगवन्तं सनातनम् । तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्ति तत्क्षणात् ॥ कृतान्यनेन सर्वाणि तपांसि तपतां वर! । सर्वतीर्थास्सर्वयज्ञास्सर्वदानानि तत्क्षणात् ॥ कृतान्यनेन मोक्षश्च तस्य हस्ते न संशय इति । सकलफलसाधनत्वं चोक्तं—* यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः ॥ प्राप्यते परमं धाम यतो नावर्तते यतिः । तेनतेनाप्यते तत्तन्न्यासेनैव महामुने! ॥ परमात्मा च तेनैव साध्यते पुरुषोत्तम इति । अत्र * अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिरिति भरतमुनिप्रणीतं लक्षणमपि सुसङ्गतम् । इह चानन्यसाध्य इति प्रपत्तव्यव्यतिरिक्तेन स्वेनान्येन चासाध्यत्वं प्रपत्तव्यस्य साध्यत्वं च विवक्षितम् । स्वाभीष्ट इति सुखस्य दुःखनिवृत्तेः तत्साधनानां च संग्रहः । तत्र [illegible] न फलम् । शरण्यविरुद्धं चानुकूल्यसङ्कल्पादिना न सङ्गच्छते । स्वाधिकारविरुद्धं तु निपुणस्य स्वाभीष्ट इत्यनेन निरस्तम् । उपायलाघवादिभिरकम्पनीयो विश्वासो महाविश्वासः । तदेकोपायताशब्देन पश्चात् स्वयत्ननैरपेक्ष्यं च व्यज्यते, प्रपत्तिश्शरणागतिरिति पर्यायपाठः । * आनुकूल्यस्य सङ्कल्प इत्यादौ तु षाड्विध्योक्तिरङ्गाङ्गिसमुच्चयाभिप्राया । * षडङ्गं तमुपायं चेत्यत्र षडङ्गत्वोक्तिरष्टाङ्गयोगव्यपदेशवत् । अन्यथा * निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृतामित्यादिभिर्विरोधप्रसङ्गात् । * शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा ॥ इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनीत्यहिर्बुध्न्योक्तमङ्गान्तरं तु निश्श्रेयसार्थप्रपत्तिनियतम् । अङ्गिनश्चात्र भरन्यासरूपत्वम् * आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यत इति निर्धारितम् । तदिह पूर्वश्लोकस्थनमःप्रयोगेणानुकूल्यसङ्कल्पप्रातिकूल्यवर्जने दर्शिते । न धर्मनिष्ठ इत्यादिभिरकिञ्चनाधिकारत्वं कार्पण्यरूपमङ्गं च । रक्षि-

ष्यतीति विश्वासस्तु शरण्येति संबुद्ध्या व्यज्यते । रक्षणसमर्थः कारुणिकश्च शरण्यः । स च प्रपन्नं मां रक्षिष्यतीति विस्रम्भणीयः । सोपसर्गधातुविशेषश्चात्राध्यवसायवैशिष्ट्यं व्यनक्ति । त्वत्पादमूलं शरणं प्रपद्य इत्यनेनैव गोप्तृत्ववरणात्मनिक्षेपौ सिद्धौ । प्रार्थनान्वितो हि भरन्यासः प्रपत्तिः, [र]भिक्षादिमात्रप्रार्थनायामाज्ञादिपूर्वकभरन्यासे च प्रपत्तिशब्दप्रयोगदर्शनात् । न चात्र गुरुलघुविकल्पानुपपत्त्या प्रपत्तेर्भक्त्यङ्गत्वं शङ्कनीयम् । स्नानादिविकल्पवदधिका[रि]रभेदेन व्यवस्थापनात् ॥

प्रणवादिनयादत्र प्रपत्तेस्तत्त्ववेदिभिः । यथाधिकारमङ्गत्वं स्वतन्त्रत्वं च दर्शितम् ॥

अत्र प्रपद्य इति वर्तमानव्यपदेशश्च * बर्हिर्देवसदनं दामीत्यादिवदनुष्ठानकालाभिप्रायः ॥ २२ ॥

**न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि ।**
**सोऽहं विपाकावसरे मुकुन्द ! क्रन्दामि सम्प्रत्यगतिस्तवाग्रे ॥** २३

अथ सप्त श्लोकाः प्रस्तुतोपायप्रयोगस्थिरीकरणार्थाः । तेषु क्रमात्परस्य सर्वविरोधिनिवर्तनोचितगुणविशेष[वत्त्वं]-त्वं रक्ष्यरक्षकयोरितरेतरलाभः स्वपरित्यागे परस्यानिष्टप्रसङ्गः स्वस्यानन्यगतित्वेन तत्प्रहाणानर्हत्वं शरण्यस्य भोग्यतमत्वेन प्रयोजनान्तरवैमुख्यम् उपायस्य सौकर्यं स्वादुतमत्वं च तात्पर्यतः स्थाप्यते । तत्रादिमे यद्यप्येवमुपायपरम्परा नास्ति, तथाऽप्यपाया न सन्ति चेत् तदवलम्बनेन क्रमात्कर्मयोगादीनुत्पाद्य मोक्षफलं लभस्व । किं तदर्थं प्रपत्त्येत्यत्र स्वस्याकिञ्चनत्वमेव स्थिरीकरोति—**न निन्दित**मित्यर्धेन ॥ **निन्दितं** गर्हितम् । * यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः, यद्गर्हन्ते सोऽधर्म इत्या**पस्तम्बः** । अत्र निन्दितशब्देन काम्यकर्मापि संगृह्यते ; मुमुक्ष्वपेक्षया तस्यापि निन्दितत्वात् । **लोके**—सर्वस्मिन् संसारिजने । अथवा लोक्यते अनेनेति लोकः प्रमाणं तस्मिन्, नास्ति अप्रामाणिकमित्यर्थः । अत्र शास्त्ररूपप्रमाणविशेषविवक्षा । **सहस्रश** इत्यसङ्ख्याताावृत्तिपरम् । * शतं सहस्रमयुतं सर्वमानन्त्यवाचकमिति पठन्ति । यत् शरणागतपरित्यागाद्यपि ; तदपि वेदनिन्दितम् । यथाऽऽह **मनुः**—* शरणार्त्तं परित्यज्य वेदं विप्लाव्य च द्विजः । संवत्सरं यवाहारस्तत्पापमवसीदतीति । * बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेदिति । **रघुश्च** राक्षसं प्रत्याह—* शक्तोऽपि रक्षणे लोभात् भयाद्वा शरणागतम् । यस्त्यजेत्पुरुषो लोके ब्रह्महत्यां स विन्दति ॥ प्रायश्चित्तेन शुद्ध्यन्ति महापातकिनो हि ये । शरणागतहन्तॄणां शुद्धिः क्वापि न विद्यते ॥ पूयन्ते हयमेधेन महापातकिनोऽपि हि । शरणागतहन्तारो न त्वेव रजनीचर ! इति । * अपि चेत्सुदुराचारः केनापि नरकात्पुमान् । मुच्यते न तु पापात्मा शरणागतहिंसक इत्यादि । **ब्रह्मणा** च गीतम् । **बृहस्पति**रुवाच—* न चास्य बीजं रोहति रोहकाले न चास्य वर्षं वर्षति वर्षकाले । भीतं प्रपन्नं प्रददाति शत्रवे न सोऽन्तरं लभते त्राणमिच्छन्, * मोघमन्नं विन्दते अप्रचेताः स्वर्गाल्लोकाद्भ्रश्यति भ्रष्टचेष्टः । भीतं प्रपन्नं प्रददाति शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रमिति । एवं * शास्त्रेषु निष्कृतिर्दिष्टा महापातकिनामपि । शरणागतहन्तुस्तु न दृष्टा निष्कृतिः क्वचित् ॥ लोभाद्द्वेषाद्भयाद्वाऽपि यस्त्यजेच्छरणागतम् । ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिण इत्यादि द्रष्टव्यम् । आह च **रघुपति**-रभयप्रदानप्रकरणे—* ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा । शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ॥ बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् । न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥ आर्तो वा यदि वा दृप्तः परेषां शरणागतः । अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥ स चेद्भयाद्वा लोभाद्वा कामाद्वाऽपि न रक्षति । स्वया शक्त्या

यथासत्यं तत्पापं लोकगर्हितम् ॥ विनष्टः पश्यतस्तस्य रक्षिणश्शरणागतः । आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनमिति । एवंविधशरणागतपरित्यागाद्यपि यन्मया न कृतं तन्नास्ति । **मया**—रागादिदूषितचित्तेन भोगमरुकान्तारपान्थेनेति भावः ।

एवमनन्तप्रतिबन्धकाक्रान्तस्वावस्थामनुवदन् भगवतोऽशरण्यशरणत्वं च स्वाध्यवसितमुत्तरार्धेन व्यनक्ति—**सोऽहमिति**। अद्यापि तादृशस्वभावः प्रायश्चित्तावसरे त्वच्चोदितेषु तत्तत्प्रायश्चित्तेष्वप्रवृत्तस्तदिच्छाधिकारशकनानुशयानभिज्ञश्चेति भावः । **संप्रति विपाकावसर** इत्यन्वयः । प्रायश्चित्तकालातिक्रान्तौ दुर्निवारोद्गमानां फलानां भोगादन्येन क्षपयितुमशक्यावस्थायामित्यर्थः । **मुकुन्द !**—प्रपन्नानामनादिप्रवृत्तमपराधजातमनादृत्य मुक्तिभूमिप्रद । यथोक्तं **श्री सात्त्वते**—*दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा । समाश्रयेदादिदेवं श्रद्धया शरणं यदि ॥ निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मन इति । **श्रीपुण्डरीकोपाख्याने** च *अश्वमेधशतैरिष्ट्वा वाजपेयशतेन च । न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखाः ॥ ये नृशंसा दुरात्मानः पापाचाररतास्तथा । तेऽपि यान्ति परं धाम नरा नारायणाश्रया इति । **क्रन्दामि**—आक्रोशामि । अनेन *गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पतीति शरण्यवाक्यं सूच्यते । **अगतिः**—पुण्यविपाकादपि भृशं भीततया पूर्वोक्तानन्यगतिः । *तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीति सर्वेषां शरण्यानां सामान्यतः प्राप्तम्, किं पुनः *विभीषणो वा सुग्रीव ! यदि वा रावणः स्वयमित्यादिवादिनो भवत इत्यभिप्रायेणाह—**तवेति** । **अग्रे** विश्वसाक्षात्कारिणस्तव सार्वत्रिकसन्निधावित्यर्थः । सविग्रहस्य वा शरण्यस्याभिमुख्यमिहाभिप्रेतम् ॥ न ह्यसमर्थानामकारुणिकानां च सन्निधौ विपन्नैराक्रोष्टव्यमिति भावः । यद्वा संसारतन्त्रवाहितया पुण्यपापफलप्रदातुस्त्वत्त एव भीतस्त्वदग्रे **क्रन्दामि** । रागानुवृत्तिहेतुभूतपुण्यफलाद्भीतिरधिकमाक्रोशकारणम् । अथवा [illegible] तत्फलमलब्धवानिव युक्तदण्डस्य तवाग्रे आक्रोशनेनाप्यपराध्यामीति भावः ।

एवं पूर्वश्लोके सपरिकरोपायान्तराभाव उक्तः । अत्र तु तन्निदानमपायबाहुल्यमनुसंहितम् । शरण्येत्युक्तं मुकुन्देत्यनेन स्थापितम् । तदिह दुर्विषहसंसारनिवर्तनोपायनैराश्यजनितशोकाविष्टश्शरण्यगुणाध्यवसायवानपवर्गार्थिप्रपत्त्यधिकारीति दर्शितं भवति । तथा चोक्तम्—* अहं भीतोऽस्मि देवेश ! संसारेऽस्मिन् भयावहे । त्राहि मां पुण्डरीकाक्ष ! न जाने शरणं परम्, *वृथैव भवतो याता भूयसी जन्मसन्ततिः । तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज ॥ अथ पातकभीतस्त्वं सर्वभावेन भारत ! । विमुक्तान्यसमारम्भो नारायणपरो भव ॥ सर्वयोग्यमनायासमप्रमादम[नौ]नूपमम् । प्रणतार्तिहरं विष्णुं शरणं गन्तुमर्हसीत्यादि ॥ २३ ॥

**निमज्जतोऽनन्त भवार्णवान्तश्चिराय मे कूलमिवासि लब्धः ।**
**त्वयाऽपि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः ॥** २४

नन्वनादौ संसारे संप्रति केन विशेषेणाक्रन्द्यत इत्यत्रानन्यगतिश्शरण्येत्युभाभ्यां सूचितं रक्ष्यरक्षकयोरितरेतरलाभप्रतिबोधस्याद्यतनत्वमाह—**निमज्जत** इति ॥ अनादिप्रवृत्तनिमज्जनमिदानीमप्यनुपरतमित्यभिप्रायेण वर्तमाननिर्देशः । **अनन्त !**—स्वरूपरूपगुणविभूतिभिरपरिच्छेद्य । सर्वत्र सर्वदा सन्निहिते हि त्वयि, *एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम् । शाम्यामि परिनिर्वामि सुखमासे च सर्वदेत्युक्तं निमज्जनं सर्वेषामनन्यशरणानां प्राप्तम् । अहं तु भवार्णवे निमज्जामि । यद्वा अनन्तत्वं भवार्णवविशेषणम् । निवर्तकस्य तव माहात्म्यमिव निवर्तनीयस्संसारोऽपि मे निरवधिरिति

भावः। भवस्यार्णवत्वरूपणेन * संसारार्णवमग्नानां विषयाक्रान्तचेतसाम्। विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्, * संसारसागरं घोरमित्यादिप्रमाणानि सूच्यन्ते। सनकादिवन्न तीरासन्नप्रदेशस्थोऽहमित्यभिप्रायेणान्तरशब्दः। इतःपूर्वमनादौ काले न लब्ध इति निर्वेदाभिप्रायेणाद्यतनलाभसन्तोषाभिप्रायेण वा चिरायेत्युक्तम्। **मे**—कर्मणः प्रवाहैरितः पूर्वमुत्तारोपायानभिज्ञस्य मम। * मामेकं शरणं व्रजेतिवादिनं त्वामुपेक्षितवतः इदानीमपि मज्जनहेतूनार्जयतः त्वयैव त्वदाश्रयणाय सङ्कल्पितस्येति भावः। अत्र **मे लब्ध** इति संबन्धसामान्ये षष्ठी। मे कूलमिवेति वाऽन्वयः। अर्णवान्तर्मज्जतः कूलमिवेत्याश्चर्यपरम्। अनन्तत्वात्तत्राप्यसौ सन्निहित इति शरण्यसौलभ्यव्यञ्जनं च। **लब्धोऽसि**—उपायतया लब्धव्यशेषं नास्ति, न च लब्धस्य प्रच्युतिरिति भावः। न केवलं ममैव लाभः; किंतु त्वयाऽपि लब्धं सर्वसमत्वसंरक्षणाय सदाचार्यवीक्षणादिव्याजविशेषापेक्षिणा तत्संपत्तिसन्तुष्टेनेति तात्पर्यम्। अत्र भगवन्निति संबुद्ध्या तस्यैकस्यैव सर्वहितवेदित्वं तन्निष्पादनशक्त्यादिकं च व्यज्यते। ज्ञानबलादिपूर्णस्य तव पुनरयं महोदयलाभः। ततश्च त्वमेव वेत्सि त्वयाऽपि दुरपह्नवमिति च। इदानीं—**नाथमुनि**प्रभृतिसद्गुरुसमीक्षणदशायामित्यर्थः। अयं चाप्यर्थनुयोज्यानादिसामग्रीप्रवाहानुगुण्येन त्वयैव सङ्कल्पितः काल इत्याकूतम्। एकवचनान्तानुत्तमादिशब्दैर्दयापात्रस्य निस्समाभ्यधिकत्वं सूच्यते। समसद्भावेऽप्यधिकनिषेधमात्रं वा विवक्षितम्। **पात्रं** विषयः। वाङ्मनसापरिच्छेद्यानन्तापराधिनमात्मानमिदमिति साभिनयं निर्दिशति। एतत्परित्यागे कस्मिन् विषये तव दयादिगुणजातं चरितार्थं स्यात्, न ह्यतोऽधिकः कृपाविषयोऽस्ति। * अपि कश्चिन्मुमुक्षुस्स्यादिति हि त्वत्कृपा जगज्जनयति। अतस्त्वत्प्रपत्तेरन्यत्र मे कर्तव्यमस्ति। आक्रन्दनमप्येतत् अरतिमात्रकृतम्। तव तु स्वीकृतभरस्य * मोक्षयिष्यामीति स्वेनैवोक्तं कर्तव्यमवशिष्यत इति भावः॥ २४॥

**अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम्।**
**किं तु त्वदग्रे शरणागतानां पराभवो नाथ! न तेऽनुरूपः॥** २५

अथ स्यात्परतन्त्रस्य शेषभूतस्य स्वतन्त्रस्वाम्यभीष्टविनियोगस्सोढव्यः। अन्यथाऽपि दुर्निवारश्च। किंच * हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या करोति हि। शस्त्रक्षाराग्निकर्माणि स्वपुत्राय यथा पिता॥ *परीक्षां च जगन्नाथः करोत्यदृढचेतसाम्, * यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्। बान्धवैश्च वियोगेन सदा भवति दुःखितः। तेन दुःखेन सन्तप्तो यदि मां न परित्यजेत्॥ तं प्रसादं करिष्यामि यस्सुरैरपि दुर्लभ इत्यपि स्मर्यते। अतस्स्वकर्मविपाकः क्षन्तव्यः, किं क्रन्दितेनेत्यत आह—**अभूतपूर्व**मिति॥ इतः पूर्वं सञ्जातेभ्यो विलक्षणमित्यर्थः। **मम** * अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेत्युक्तस्वभावस्य गर्भजन्मजरामरणनरकादिदुःखचक्रमध्यवर्तिनः। **भावि**—भविष्यत्। **किं**शब्दः क्षेपार्थः। **वा**कारः स्वानभ्युपगतसोढव्यत्वपक्षान्वारोहार्थः। तेनासह्यत्वाभिप्रायमन्तर्धायाह—**सर्वं सह** इति। कर्मपरतन्त्रतया यथापूर्वमनुभूतजातीयं सर्वं दुःखमनुभविष्यामि। **मे सहजं हि दुःखम्** अनर्थपर्यन्तापुरुषार्थसक्तस्य मम कर्मप्रवाहैरात्मस्वरूपानुबन्धिवदपरिहार्यमित्यर्थः। तथाऽप्यन्यदसह्यमापतिष्यतीत्यभिप्रायेणाह—**किंत्वि**ति।

**त्वदग्रे** अपारकारुण्यस्य सर्वत्र सन्निहितस्य सर्वस्वामिनस्सर्वशक्तेस्तव सन्निधौ। **शरणागताना**मिति बहुवचनमन्येष्वपि प्रपन्नेष्वयमेव न्याय इति द्योतनार्थम्। मत्परिभवस्त्वदेकान्तिनां सर्वेषां चित्तक्षोभहेतुरिति वाऽभिप्रेतम्। **पराभवः** कर्मभिः कामक्रोधादिभिरिन्द्रियैर्विषयैश्च घोरैः त्वद्विमुखीकरणम्। **नाथे**ति संबुद्ध्या भगवतो भरस्वीकार-

योग्यत्वं स्वस्य सनाथत्वेन निर्भरत्वं च व्यनक्ति। उक्तं हि युधिष्ठिरकार्यार्थं बलभद्रं प्रति **सात्यकिना**—* ये नाथवन्तो हि भवन्ति लोके ते नात्मकर्माणि समारभन्ते। कार्येषु तेषां प्रभवन्ति नाथाश्शैब्यादयो राम! यथा ययातेरिति। भगवच्छास्त्रे च * प्रपन्नश्चातको यद्वत्प्रपत्तव्यः कपोतवत्। रक्ष्यरक्षकयोरेतल्लक्ष्यं लक्षणमेतयोरिति। स्वतन्त्रस्याकर्मवश्यस्य मे शरणागतपरित्यागेऽपि को दोष इत्यत्राह—**न तेऽनुरूप** इति। ते * स्थिते मनसि, * सकृदेव, * सर्वधर्मानित्यादिवादिनः। **नानुरूपः** न च तद्युक्तम्। * रामो द्विर्नाभिभाषते, * अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचनेत्यादिस्ववचनविरोधप्रसङ्गात्। ततश्च *तस्य नाम महद्यश इति श्रुतिसिद्धवैपरीत्यं स्यात्। अतो मया सहजदुःखभाजनेन सर्वमपि दुःखं सोढुं शक्यम्। त्वया तु नित्यनिरवद्येन दोषप्रसङ्गो न सोढव्य इत्यनिष्टलाभस्ते मत्तोऽप्यतिरिच्यते। मम च स्वाम्यवद्यप्रसङ्गोऽनिष्टतमः। तस्मान्मद्रक्षणेन द्वयोरनिष्टपरिहारस्त्वयैव कार्य इति भावः। तदिदं व्याजमात्रेण स्वार्थं रक्षिष्यतीति विश्वासदार्ढ्यव्यञ्जनपरम्। शेषभूतस्य स्वलाभकथनं स्वार्थप्रार्थनं चायुक्तमिति शङ्का च प्रधानभूतपरलाभोक्त्या परावद्यप्रसङ्गपरिहारप्राधान्येन च निरस्ता॥ २५॥

**निरासकस्यापि न तावदुत्सहे महेश! हातुं तव पादपङ्कजम्।**
**रुषा निरस्तोऽपि शिशुः स्तनन्धयो न जातु मातुश्चरणौ जिहासति॥** २६

अस्त्वेवं प्रतिबुद्धस्य तव मदवलम्बनम्, तथाऽपि मदनुगृहीतेन त्वया सर्वेषां पापानां क्रमात्प्रतिपदोक्तानि प्रायश्चित्तानि क्रियन्ताम्। पुण्यक्षयार्थं भोगाश्च भुज्यन्ताम्। मत्स्वभावश्चैवं प्रसिद्धः * शरीरारोग्यमर्थाश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यमपवर्गप्रदो हरिरिति। अतः * भुक्त्वा च भोगान्विपुलानित्यादिक्रमेण मुक्तिं प्राप्स्यसीति भगवतोऽभिप्रायमाशङ्क्य पूर्वोक्तमनन्योपायत्वमनन्यप्रयोजनत्वं चानन्तरश्लोकद्वयेन प्रपञ्चयिष्यन् स्वस्य भगवत्पदप्राप्तौ विलम्बाक्षमत्वं विज्ञापयति—**निरासकस्ये**ति॥ पूर्वं दुःखस्य स्वतः प्रतिकूलतया दुस्सहत्वेन हेयत्वमुक्तम्। अनयोस्तु परमपुरुषार्थप्रतिकूलतया सुखस्यापि हेयत्वमुच्यत इति विशेषः। **निरासकस्य** निरङ्कुशस्वातन्त्र्यात्स्वावद्यं सोढ्वाऽपि क्षुद्रैरुपच्छन्दनैर्मां प्रतार्य मदभिमतमप्रदायान्यत्र प्रेरयितुमिच्छत इति भावः। **अपि**शब्देन दयापरवशस्त्वं दीनस्य मम निरासे कथं क्षम इति व्यज्यते। **ताव**च्छब्दोऽवधारणार्थः। **नोत्सहे**—न शक्नोमीत्यर्थः। **महेश!** संभावितस्वपदभ्रंशानामपूर्णानां त्वदन्येषां हि स्वाश्रितेष्वसूयोपेक्षादिस्स्यात् यथेन्द्रादीनां ययातिप्रभृतिषु। भवतस्तु निरुपाधिकस्वामित्वस्वातन्त्र्यवतः निरवधिकदयाम्बुधेर्मामीदृशीमवस्थां प्रापयतो मन्निरसने हेतुर्नास्ति। मम च त्वामेकमेव सर्वेश्वरमधिगच्छतो न हि त्वत्परित्यागे कारणमस्तीति भावः। **मातु**रिति वक्ष्यमाणपदस्थाने महेशशब्दः। तेन *माता पिता भ्रातेत्यादिश्रुतिप्रसिद्धस्वभावसूचनम्।

**हातु**मित्यत्र उपायतया फलतयेति योज्यम्। तदुभयं **तव पादपङ्कज**मित्युभाभ्यां सूच्यते। सर्वभूतसुहृदस्संसारनिवृत्त्युपायभूतस्य भवतो देवदानवसामान्यदैवतं निरवधिकभोग्यं पादपद्ममिति भावः। उक्तमर्थं सर्वलोकसंमतार्थान्तरनिदर्शनेन स्थापयति—**रुषे**ति। अपिशब्द इह स्वतो निरासानर्हत्वं स्तनदंशनादिजनितक्रोधलेशवशात्कदाचित्तत्संभवं च द्योतयति। **शिशुः स्तनन्धय** इति पदाभ्यां स्वरक्षणे स्वयमसमर्थस्य बालस्य तदेकरक्ष्यत्वं तदेकाधीनजीवनत्वं च सूच्यते। **जातु** क्रोधदशायां प्रसाददशायां चेति भावः। **मातु**रित्यनेन सर्वदोषप्रसहनानुगुणवात्सल्यं व्यज्यते। **चरणा**वित्यत्र निरासाय विनियुक्तावपीति काका ग्राह्यम्। हातुमिच्छाऽपि न संभवति किमुत हानमित्यभिप्रायेण सन्प्रयोगः॥

**तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।**
**स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥** २७

ननु नासौ निरासः यत्प्रजापतिप्रभृतिभोगेभ्योऽतिशयितभोगप्रदानम्; माभूद्वा केवलभोगपरता; इदानीं मद्दत्तभोगान् भुङ्क्ष्व; पश्चान्मोक्षमपि दास्यामीति भगवतोऽभिप्रायमुत्प्रेक्ष्य विलम्बाक्षमः प्राप्यतया हातुमशक्यत्वं विवृणोति—**तवामृतेति** ॥ **तव** * रसो वै सः, * सर्वगन्धस्सर्वरस इत्यादिषु सर्वप्रकारनिरतिशयभोग्यतया प्रसिद्धस्य सर्वस्वामिनः । **अमृतस्यन्दिनि** मोक्षप्रदे भोग्यतमतया च श्रुतिस्मृतिप्रसिद्धे । **निवेशितात्मा** रक्षणोन्मुखेन * ददामि बुद्धियोगं तमित्यादिवादिना त्वयैव दृढावस्थापितबुद्धिरित्यर्थः । तस्मादितः परं पुरुषार्थान्तरे मनो निवेशयितुं न शक्यमिति भावः । अत्र सामान्यनिर्देशस्त्वत्प्रसादविषयभूतानां मादृशानां सर्वेषां साधारणोऽयं स्वभाव इति ज्ञापनार्थः । त्वत्पादपद्मे मनो निवेशयन् त्वमेवात्र परिचोदनीय इत्यभिप्रायेण **कथं**शब्दः । **अन्यत्** अल्पमस्थिरमनर्थमिच्छताऽतीच्छानिवृत्तिवचनात्तदर्थप्रवृत्तिरप्यत्र निरस्ता भवति । उक्तमर्थं निदर्शनेन द्रढयति—**स्थितेऽरविन्द** इति । भोक्तॄणामक्लेशेन भोग्यतमतयोपस्थितवतीत्यभिप्रेतम् । अरविन्दशब्द इह सुरभित्वसुखस्पर्शत्वादिव्यञ्जकः । प्रथमविकसितावस्थामभिप्रेत्याह—**मकरन्दनिर्भर** इति । मधुव्रतशब्देन तदेकजीवनत्वं तत्रापि सारतमग्राहित्वं च व्यज्यते । स्वाभिमतविपरीतैरुपच्छन्दनोपदेशतर्जनादिभिर्दुर्निवारत्वं सूचयितुं तिर्यग्दृष्टान्त उक्तः । **इक्षुरकं** कण्टकावृतमस्थिरात्यल्परसं भ्रमरस्पर्शमात्रेऽपि म्लानतामश्नुवानं देवार्चनाद्यनर्हं निर्गन्धं किमपि क्षुद्रपुष्पम् । तत्र **वीक्षते** अत्यासन्नमपि मकरन्दलिप्सया नाद्रियते । तदुपसर्दनं तु दूरतो निरस्तमिति भावः ॥ २७ ॥

**त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचिद्यथा तथा वाऽपि सकृत्कृतोऽञ्जलिः ।**
**तदैव मुष्णात्यशुभान्यशेषतश्शुभानि पुष्णाति न जातु हीयते ॥** २८

अथ गुरुतरोपायसाध्यं पुरुषार्थं लघुतरेणोपायेन कथं लप्स्यस इत्यत्र ततोऽपि लघुतरस्य निवृत्तिधर्मकोटिनिविष्टस्याञ्जल्यादेः प्रभावं त्वदङ्घ्रिमित्यादिश्लोकद्वयेन निदर्शयन्नाश्रयणसौकर्यादपि हातुमशक्यत्वमेव स्थापयति । तत्र प्रथमेन लघुतरकायिकव्यापारविशेषप्रभाव उच्यते—**त्वदङ्घ्रिमिति** ॥ **त्वदङ्घ्रिं** सर्वलोकशरण्यस्य तव पादपङ्कजम् । न तु साक्षान्मोक्षप्रदानानधिकृतस्य हिरण्यगर्भादेरिति भावः । तदुक्तं **मोक्षधर्मे**—* ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलमिति । अत्र भगवत्स्वरूपस्य शुभत्वेऽप्यनिष्पन्नसमाधीनां प्रथमं भावयितुमशक्यतया तद्विग्रहस्यैव शुभाश्रयत्वम् । तत्रापि * अनतिक्रमणीयं हि चरणग्रहणमिति न्यायात्, * स भ्रातुश्चरणौ गाढमित्यादि दर्शनाच्चाङ्घ्रेरुद्देश्यत्वमुच्यते । **उद्दिश्य**—उपायतया कैङ्कर्यलक्ष्यतया चाभिसन्धायेत्यर्थः । एवमनन्यदेवताकत्वमनन्यप्रयोजनत्वं चोक्तं भवति । ईदृशस्याधिकारिणोऽञ्जलिबन्धरूपे सुकरे प्रसादने दर्शपूर्णमासादिवत्तिथिनक्षत्रपक्षमासर्त्वयनहायनादिकालनियमो नास्तीत्याह—**कदाऽपीति** । विधेयहस्तस्य शास्त्रीयव्यापारान्तररहितदशायां सर्वदेत्यर्थः । एतेन कालविशेषप्रतीक्षणविलम्बाभावाद्यदेच्छति तदैव सहसा कर्तुं शक्यतयाऽपि सौकर्यं सूचितम् । उक्तः कालनियमाभावः * जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्याद्युक्तकृष्णकेशत्वाद्यवस्थानियमाभावस्य देशनियमाभावस्य चोपलक्षणम् । एवं वर्णाश्रमवेदवेदाङ्गयुक्तत्वादिनियमाभावेन सामान्यधर्मतया सत्यवचनादिवत्सर्वाधिकारत्वमाह—**केनचिदिति** । आस्त्रीबालपण्डितमाब्रह्मश्वपाकं च सुकरत्वं शास्त्रीयत्वं चात्र विवक्षितम् । कर्मान्तरवद्दुष्करप्रकारविशेषव्यव-

स्थाऽप्यत्र नास्तीत्याह—**यथा तथा वाऽपीति** । अत्र विकल्पसमुच्चयविषयाव्ययद्वयस्यैवमभिप्रायः—परावरतत्त्वहितपुरुषार्थेषु विशदा बुद्धिर्भवतु वा मा वा, मस्तिष्कसम्पुटादिषु यथेष्टप्रकारश्च भवतु, विधेयहस्तरहितस्य वाचा मनसा वा स्यात्, अस्तु वाऽञ्जलिरचनायां [illegible] ; सर्वथा सफल एवायमिति । न पुनः *एकेन पाणिना यस्तु प्रणमेत्पुरुषोत्तमम् । न्याय्यस्तस्य करच्छेद इति वेदविदो विदुः ॥ एकहस्तप्रणामश्च एकं चापि प्रदक्षिणमिति शक्तं प्रत्युक्त एकहस्तप्रणामनिषेध इह प्रतिषिध्यते । *तौ युतावञ्जलिः पुमानिति च **नैघण्टुकाः** । गत्यभावे तु सर्वत्र यथाशक्तिकरणमनुज्ञातम् ; *सकृत्कृतश्शास्त्रार्थ इति [illegible] निरपवादत्वात् । *वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिवदावृत्त्यपेक्षाऽपि नेत्याह—**सकृत्कृत** इति । यद्यपि प्रीत्यादिप्रकर्षादस्यावृत्तिर्भवति, तथाऽप्यत्र सकृत्कृतस्य फलाविनाभावेन प्रभावातिशयप्रतिपादने तात्पर्यम् । *सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैश्चितम् । पापराशिं दहत्याशु तूलराशिमिवानलः, *सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति, *ऋचो यजूंषि सामानि योऽधीते सकृदञ्जसा । सकृदष्टाक्षरं जप्त्वा फलं तस्य समश्नुते ॥ विष्णोरायतनं नित्यं सायं प्रातर्दिनेदिने । प्रदक्षिणद्वयं कुर्यादश्वमेधफलं लभेत् ॥ उत्सवे बलिदाने च तथा कुर्वन् प्रदक्षिणम् । पदे पदेऽश्वमेधस्य फलं दशगुणं भवेत् ॥ यानि यानि च पापानि जन्मान्तरकृतानि च । तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥ इत्यादिषूक्तस्य सकृत्स्मरणसङ्कीर्तनादिप्रभावस्य प्रदर्शनमिदम् । *सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः । रक्षते भगवान्विष्णुर्भक्तानात्मशरीरवदिति सर्वाधिकत्वेन कथितेभ्यस्सम्मार्जनोपलेपनमालाकरणदीपदानान्नधूपप्रदा[ध]दनान्तरेभ्यस्समधिकं बहुवित्तव्ययायासनिरपेक्षं विवक्षितस्य सुकरं स्वरूपमाह—**अञ्जलिरिति** । *अञ्जलिः परमा मुद्रेति ह्युच्यते । **श्रीमद्रामायणे** च *कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनादिति । नारायणकल्पोक्तान्यप्यत्रानुसन्धेयः । *क्षिप्रं देवप्रसादिनीत्युक्तमाह—**तदेति** । अवधारणेन शरीरान्तरकालान्तरभाविफलसाधनेभ्यः कर्मभ्यो व्यावृत्तिः । यद्यप्यनादिवासनावशात्सांसारिकपुण्यरूपनिगलभङ्गः पुरुषस्यानिष्टस्स्यात् । तथाऽप्यर्भकापथ्यपरिहारन्यायेन तान्यपि चोरयतीत्यभिप्रायेण मुष्णातीत्युक्तम् । **अशुभानि** शुभप्रतिभटानि । यथार्हमपवर्गानुगुणदशाविरोधीनि । **अशेषतः** कार्त्स्न्येन । एतेन कृच्छ्रचान्द्रायणादिवत्प्रतिनियताशुभमात्रनिवर्तकत्वं व्युदस्यते । न केवलमनिष्टनिवर्तकत्वमात्रम्, *तस्मिन् प्रसन्ने किमिहास्त्यलभ्यमिति न्यायेनात्रत्यानुभवप्रभृतिपरिपूर्णकैङ्कर्यपर्यन्तसर्वापेक्षितसाधकत्वं चास्तीत्याह—**शुभानि पुष्णातीति** । कर्तव्यैकस्मिन्नुपक्रान्तमपर्याप्तं मन्यमानस्य भगवतः प्रसादात्तदनुबन्धिनामपि तद्वदुपकाराय भवतीत्यभिप्रायेणाह—**न जातु हीयत इति** । *यज्ञोऽनृतेन क्षरतीत्यादिवदस्य न केनापि हानिरिति भावः ।

यद्वा स्वर्गादिवदेव तत्साध्यस्य परमफलस्य न कदाचिदपि विनाश इत्यभिप्रायः । अथवा फलभूताञ्जलिरूपेण स्वयं सन्तन्यत इति विवक्षितम् । दृश्यते हि *नित्याञ्जलिपुटा हृष्टा इत्युक्त्वा, *ये तु मुक्ता भवन्तीह नरा भरतसत्तम । तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनामिति । ननु च यथाधिकारं न्यासोपासनरूपौ द्वौ मोक्षोपायौ शास्त्रेषु निर्णीतौ ; [illegible] तत्साधनत्वोक्तिः? इत्थम् ; यद्यसावाकिञ्चन्यादिलाभात्प्रपत्त्यधिकारिणः पुरुषस्य स्वरक्षणार्थस्वव्यापारान्तरनिवृत्तिव्यञ्जकमुद्रात्मनाऽवतिष्ठते, तदा तदुपलक्षितायाः प्रपत्तेः प्रागुक्तसकलफलसाधनत्वरूपप्रभावप्रतिपादने तात्पर्यान्न विरोधः । यदा तु प्रदक्षिणप्रणामादिवदयमपि भक्त्यङ्गकर्मविशेषः, तदा *नेहाभिक्रमनाशोऽस्ति इत्यादिन्यायात्कल्मषनिबर्हणसत्त्वोन्मेषसम्यग्ज्ञानभक्त्यादिपरम्परया मोक्षसाधनत्वमिति निष्कण्टकोऽयं घण्टापथः ।

अतिवादपक्षस्त्वत्र संभवन्त्यां गतौ न युज्यते । अधिकारिविशेषमाश्रित्याञ्जलिरूपलघुनरक्रियामात्रस्य साक्षान्मोक्षसाधनत्वकथने कर्मान्तराणामपि तथात्वप्रसङ्गः । तदभ्युपगमस्तु सर्वप्रमाणाननुगुणो भाष्यादिविरुद्धः ; वक्तुर्यामुनमुनेः प्रागनुष्ठितगुरुतरविश्वासादिगर्भप्रपत्तिवैयर्थ्यं च स्यात् । ननु *ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥ कलेर्दोषनिधे राजन्! अस्ति ह्येको महान् गुणः । कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेदिति कालविशेषव्यवस्थया सङ्कीर्तनमात्रस्यैव साक्षान्मोक्षसाधनत्वमुच्यते । सत्यम् ; तथाऽपि तस्मिन् काले धर्मान्तरमनपेक्ष्य सङ्कीर्तनमात्रस्यैवाव्यवहितमोक्षोपायनिष्पादकत्वे तात्पर्यं ग्राह्यम् ; अन्यथा चरमयुगे प्रपत्तिरप्यनपेक्षिता स्यात् ; तदयमञ्जलिर्भक्तिवत्प्रपत्तिवच्च प्रयोजनान्तरपराणां यथार्हं तत्तदभिमतसाधनं स्यात् । अनन्यप्रयोजनानां तूक्तेनैव प्रकारेणापवर्गपर्यवसायीति ॥ २८ ॥

**उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम् ।**
**प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः ॥** २९

अथाञ्जलिमात्रानर्हाणामपि *विषये ते महाराज! रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानास्सपुष्पाङ्कुरकोरका इत्युक्तकोसलजनपदपादपन्यायेनानुरागलेशमात्रेणापि शरण्यचित्तरञ्जनेन प्राप्तकाले परमपुरुषार्थसिद्धिस्स्यादित्याह—**उदीर्णेति** ॥ **उदीर्णः** नित्यमप्यात्मानमसत्कल्पं कर्तुमनुपरमेण जाज्वल्यमान इत्यर्थः । **संसारः** कर्मिणः पुरुषस्य पूर्वपूर्वदेहप्रहाणेनोत्तरोत्तरदेहैरेकीकृत्याविच्छिन्नसंसरणरूपावस्थाप्रवाहः । दवाग्नित्वरूपणेन तापत्रयप्रचुरतया दुस्सहतमत्वमन्यैरनुपशमनीयत्वं च व्यज्यते । आर्तिपौष्कल्यवतां प्रपन्नानामविलम्बेन सर्वानिष्टप्रशमनमभिप्रेत्याह—**क्षणेन निर्वाप्येति** । न केवलमनिष्टप्रशमनमात्रमित्याह—**परां च निर्वृतिं प्रयच्छतीति** । निर्वृतिस्सुखम् । अत्र संभवन्त्या निर्वृतेः मुक्तानुभवसाम्यं मुक्तिदशायां परिपूर्णानुभवरूपत्वं चाभिप्रेत्य परामिति विशेषितम् । त्वच्छब्देन *एष ह्येवानन्दयाति, *रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति इत्याम्नातमाकारद्वयमभिप्रैति । सूत्रितं च *तद्धेतुव्यपदेशाच्च, *अस्मिन्नस्य च तद्योगं शास्तीति । चरणस्यारुणाम्बुजत्वरूपणेन विग्रहस्य श्यामतया परभागशोभा व्यज्यते । अन्योन्यसन्निकर्षजनितशोभयाऽप्यनुरागातिशयहेतुत्वमभिप्रेत्य द्वयोपादानम् । **अनुरागः** *नाथ! योनिसहस्रेषु या प्रीतिरविवेकिनामित्यादिनिदर्शिता विषयस्वभावनिबन्धना निरतिशयप्रीतिः । अमृतसिन्धुत्वरूपणेन सञ्जीवनत्वं स्वयं प्रयोजनत्वमक्ष[य]यत्वं च व्यज्यते । भाग्यविशेषवशात् भगवति निरुपाधिकभोग्यताविर्भावेन स्वयंप्रयोजनभक्तिलेशोऽपि परमभक्तिदशां प्राप्य नित्यकैङ्कर्यपर्यन्तस्स्यादित्यभिप्रायेण शीकरशब्दः ॥ २९ ॥

**विलासविक्रान्तपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम् ।**
**धनं मदीयं तव पादपङ्कजं कदा नु साक्षात्करवाणि चक्षुषा ॥** ३०

तदेवमिह तत्त्वज्ञानादिपूर्वकं मोक्षार्थतया प्रवृत्तस्य प्रपत्तिशास्त्रार्थस्याधिकारेण *न निन्दितमित्यादिभिस्सप्तभिः सामर्थ्यभागस्समर्थितः । अथ *विलासेत्यादिभिः सप्तदशभिः उत्तरखण्डार्थप्रदर्शकैः प्राप्यवैलक्षण्यप्रपञ्चनपूर्वकमर्थित्वभागः स्पष्टीक्रियते । तत्र प्रथमेन स्वविषयभक्तिप्रभावप्रतिपादनप्रीतेन भगवता यथामनोरथं सर्वं करिष्यामीत्युक्ते तद्दत्ततीव्रभक्तेः स्वस्य तत्पादारविन्दसन्दर्शने कालक्षेपाक्षमत्वं व्यनक्ति—**विलासेति** ॥ परावरशब्दाभ्यां हिरण्यगर्भादयो मनुष्यादयश्च गृह्यन्ते । तेषामालयाः पृथिव्यादयस्सत्यान्ता लोकाः ते विलासेन विक्रान्ता येन तद्विलासविक्रान्तपरावरालयम् । *यस्यो-

रुषु त्रिषु विक्रमणेषु अधिक्षियन्ति भुवनानि विश्वा, *क्रान्त्वा धरित्रीं गगनं तथा दिवमित्यादिप्रमाणप्रसिद्धमिदम् । विक्रमस्यानायासलीलारूपत्वव्यञ्जनाय विलासशब्दः । अत्र सर्वसुलभत्वं च सूच्यते । एवं सुलभस्यायत्नसेव्यत्वमनिष्ट-निवर्तकत्वं चाह—**नमस्यदार्तिक्षपणे कृतक्षणमिति** । नमस्यतां प्रह्वीभवतां तदैवाशेषार्तिविनाशने **कृतक्षणं** दत्तावसरं निवृत्तव्यापारान्तरं वा । * क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोरिति **नैघण्टुकाः । धनं मदीयम्**—अनन्योपायस्य ममाभिमतसाधनं पुरुषार्थभूतं च । **तव पादपङ्कजं** स्वरूपादिभिर्निरतिशयभोग्यस्याश्रितवत्सलस्य मुमुक्षुध्येयं मुक्तभोग्यं च पादारविन्दम् । **कदेत्यादि** ॥ *न चक्षुषा पश्यति कश्चनैनम्, *स्वाध्यायश्चक्षुरुत एकमस्य योगो द्वितीयमभिवीक्षणाय अध्ययनमनननयनोऽस्य द्रष्टा *न मांसचक्षुरभिवीक्षते तम्, *न मांसचक्षुषा द्रष्टुं ब्रह्मभूतस्स शक्यते, *[illegible] **न कस्यचित्** इत्यादिषु मादृशैर्दुर्दर्शतया प्रसिद्धं त्वामद्यैवानेनैव चक्षुषा साक्षात्कर्तुमिच्छामीत्यभिप्रायः । एतेन *तासा-माविरभूच्छौरिरितिन्यायेन धनञ्जयादिषु दिव्यचक्षुःप्रदानन्यायेन च दिदृक्षूणां यथामनोरथं सहसैव दृश्यो भवतीति प्रकाश्यते । अत्र मुक्तिदशाविवक्षायां *स वा एष दिव्येन चक्षुषा मनसेतिवत्स्वाभाविकज्ञानरूपेण चक्षुषेति योज्यम् ॥

**कदा पुनश्शङ्खरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ।**
**त्रिविक्रम त्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलङ्करिष्यति ॥** ३१

अथ *दिव्यं ददामि ते चक्षुरितिवदपेक्षितं साक्षात्कारं दास्यामीति भगवतोक्ते दूरस्थस्य कालान्तरेऽपि तत्संभव-माशङ्क्य शीघ्रं स्वोचितं तत्संश्लेषविशेषमपेक्षते—**कदा पुनरिति** ॥ पुनश्शब्दस्साशङ्कत्वद्योतकः । साक्षात्कारमात्रा-द्विशेषद्योतको वा । *शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम् । शरच्चन्द्रप्रतीकाशनखराजिविराजितम् ॥ सुरासुरैर्वन्द्यमान-मृषिभिश्चिन्तितं सदा । मूर्धानं मामकं देव! तावकं मण्डयिष्यति, *सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुश-ध्वजसरोरुहलाञ्छनाढ्यमित्यादिप्रसिद्धमाकारमनुसन्धत्ते—**शङ्खरथाङ्गेत्यादिना** । *एष ब्रह्मलोकस्सम्राडिति होवाच, *[illegible] श्रुतिस्मृतिप्रसिद्धसाम्राज्यचिह्नत्वाभिप्रायेण लाञ्छनशब्दः । तथा चोक्तं **नारदीये** *भृङ्गा-रासनवाजिकुञ्जररथश्रीवत्सचापेषुभिर्मालाकुण्डलचामराङ्कुशयवैश्शैलध्वजैस्तोमरैः । मत्स्यस्वस्तिकवेदिकाव्यजनकैश्शङ्खात-पत्राम्बुजैः पादे पाणितले नरा नृपतितां यान्ति स्त्रियो राज्ञितामिति । **त्रिविक्रमे**ति सम्बुद्ध्या निम्नोन्नतविभागानादरेण सर्वेषां शिरसि कृतपदन्यासत्वं स्वस्य तदलाभेन निर्वेदश्च सूच्यते । **त्वच्चरणाम्बुजद्वयम्** *अप्राप्यः केशवो राजन्! इन्द्रियैरजितैर्नरैरित्यादिष्वजितेन्द्रियैर्दुर्लभतया प्रसिद्धस्य तव लक्ष्मीभूमिलीलाकमलं शङ्खादिरे[illegible] चरणयुगलम् । **मदीयमूर्धानम्** अत्यन्तनिहीनस्य त्वत्पादस्पर्शानर्हस्य दुष्टतमतया कालियवत्पादरक्षदमनीयस्य मे चिरकालं *न नमेयमिति त्वत्प्रणामविरहेण दूषितमुत्तमाङ्गम् । **अलङ्करिष्यति** पश्यतां सत्त्वस्थानां प्रेक्षणीयं करिष्यतीति भावः । एतेन कलिदोषनिवृत्तिरप्यर्थिता भवति । उक्तं हि **महाभारते** *यावत्सपादपद्माभ्यां पस्पर्शेमां वसुन्धराम् । तावत्पृ-थ्वीपरिष्वङ्गे समर्थो नाभवत्कलिरिति । संसाराग्निदग्धोऽहं त्वत्पादस्पर्शेन परीक्षिदिव यथार्हं [illegible] भावः । अत्र *यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा धारयिष्यामि न मे शान्तिर्भविष्यतीति **भरतवाक्यम्**, *तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभि-वन्दिताविति **मार्कण्डेयवचनं** च दर्शनीयम् । यद्वा मुक्तिदशायां परिगृहीताप्राकृतशरीरस्य स्वस्य परमपदपर्यङ्कनिलय-भगवत्पादमूलप्रवेशे त्वरातिशय इह प्रकाश्यते ॥ ३१ ॥

**विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम् ।**
**निमग्ननाभिं तनुमध्यमुन्नतं विशालवक्षस्स्थलशोभिलक्षणम् ॥** ३२

उक्तप्रकारसन्दर्शनसंश्लेषसमनन्तरभाविसर्वविधकैङ्कर्योद्देश्यं भगवन्तं समस्तकल्याणगुणदिव्यमङ्गलविग्रहादिविशिष्टतया प्राप्यं चतुर्दशभिर्विशदमनुसन्धत्ते । तत्र प्रथमश्लोकस्य पूर्वार्धेन पीताम्बरपरभागविचित्रिताम् *अतसीपुष्पसङ्काशः पीतवासा जनार्दनः । व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिरिति महाभारतोक्तां दिव्यस्वरूपस्य समुदायशोभामनुभवति—**विराजमानोज्ज्वलपीतवाससमिति** ॥ पीताम्बरस्य श्यामवर्णविग्रहयोगात्स्वतश्च विराजमानत्वमुज्ज्वलत्वं भास्वरत्वं च । स्मितशब्दोऽत्र विकासार्थः । अतसीसूनम् अतसीप्रसूनम् । श्यामलरमणीयतया विग्रहस्य तत्समत्वम् । अमलच्छविम् उज्ज्वलकान्तिम् । ध्यायतां दोषप्रतिभटद्युतिमिति वा । अवयवेषु *प्रथममजनिष्ट च कस्य नाभेरिति प्रागुक्तपारम्यव्यञ्जकं पितामहोत्पत्तिस्थानं निर्दिशति—**निमग्ननाभिमिति** । निम्ननाभिमित्यर्थः । उदरस्याशेषभुवनगर्भत्वेऽपि कृशत्वेनाद्भुतत्वमभिप्रेत्याऽऽह—**तनुमध्यमिति** । तथा चाहुः **श्रीवत्साङ्कमिश्राः**—*अण्डानां त्वदुदरमामनन्ति सन्तः स्थानं तद्वरद कथं नु कार्श्यमस्य । माहात्म्यं स्वत इह येषु नूनमेषामृद्धिस्स्यान्महिमकरी न हीतरेषामिति । **उन्नतम्**—अतिह्रस्वत्वादिदोषरहितसर्वाधिकत्वव्यञ्जकदिव्यविग्रहमित्यर्थः । **विशालेत्यादि** । अतिविशालभुजान्तरशोभमानप्रकृतितत्त्वनिरूपकलक्ष्मीनिवासश्रीवत्सलक्षणम् । अत्र द्वितीयान्तानां सर्वेषां *भवन्तमिति वक्ष्यमाणेनान्वयः ॥ ३२ ॥

**चकासतं ज्याकिणकर्कशैश्शुभैश्चतुर्भिराजानुविलम्बिभिर्भुजैः ।**
**प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः ॥** ३३

भुजमध्यशोभाऽनुसंहिता । अथ वीरश्रृङ्गारचित्रितां भुजशोभामनुसन्धत्ते—**चकासतमिति** ॥ अवतारदशायां विरोधिनिराकरणार्थव्यापारव्यञ्जकैर्ज्याकिणैरङ्कितत्वं परविग्रहभुजेष्वपि तदभेदानुसन्धानेन निर्दिशति—**ज्याकिणकर्कशैरिति । शुभैः** औदार्यवीर्यसौन्दर्यादिशालिभिः । पररूपेऽपि चतुर्भुजत्वं प्रमाणसिद्धमिति प्रकाशयितुमाह—**चतुर्भिरिति** । यथोक्तं **विष्वक्सेनसंहितायां** *वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः । उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥ महायोगी जगद्धाता दिव्यसिंहासनोपरि । दिव्यसंस्तरणोपेते शेषाहिफणमण्डिते ॥ पञ्चोपनिषदाम्नातदिव्यमङ्गलविग्रहः ॥ अप्राकृततनुर्देवो नित्याकृतिधरो युवा ॥ नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवितः । बद्धाञ्जलिपुटैर्हृष्टैर्निर्मलैर्निरुपद्रवैः ॥ चतुर्भुजश्श्यामलाङ्गः श्रीभूम्यां सह नीलया । विमलैर्भूषणैर्नित्यैर्भूषितो नित्यविग्रहः ॥ पञ्चायुधैस्सेव्यमानश्शङ्खचक्रधरो हरिः । सहस्रस्थूणसंयुक्ते मण्डपे परमेश्वरः ॥ विन्यस्य वामकं बाहुमासने वामपार्श्वके । दक्षिणं जानुके न्यस्तं लम्बयन् जगतां पतिरिति । एवमेव ध्यानं **भाष्यकारैर्नित्ये** प्रोक्तम् । **बलपौष्करे** तु *देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः । सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तु चाखिलैः ॥ शङ्खचक्रधरो नित्यं जानुन्यस्तैकहस्तवान् । अभयप्रदहस्तश्च नीलजीमूतसन्निभः ॥ ध्यातव्यो नित्यलोकस्थो भुक्तिमुक्तिफलप्रद इति । अत्र अभयप्रदहस्तत्वादिवैषम्यमवस्थाभेदादुपपद्यते । यत्तु कैश्चिदुक्तं—*मुखं किमस्य कौ बाहू *बाहू राजन्यः कृत इति **पुरुषसूक्तवाक्याभ्यां** *दशहस्त्या अङ्गुलयो दश पद्या द्वावूरू द्वौ बाहू आत्मैव पञ्चविंश इत्यैतरेयोक्त्या, *पाणिभ्यां त्रयीं संभरतीत्यादिरहस्याम्नायोक्त्या च परस्य द्विभुजत्वं सिध्यतीति, तदयुक्तम्; तेषां वाक्यानां प्रकरणादिभिरन्यपरत्वेन परस्य चतुर्भुजत्वप्रतिषेधादर्शनात् । यच्चोक्तं **श्रीसात्त्वते** *नादावसानगगने देवोऽनन्तस्सनातनः । शान्त-

स्संवित्स्वरूपस्तु भक्तानुग्रहकाम्यया ॥ अनौपम्येन वपुषा ह्यमूर्तो मूर्ततां गतः । [illegible] कान्त्या पूर्णेन्दुयुततुल्यया । वरदाभयदेनैव शङ्खचक्राङ्कितेन च । त्रैलोक्योद्धृतिदक्षेण युक्तः पाणिद्वयेन सः इति, तदिदं तत्रत्यहृद्यागविशेषविधिपरम् । **श्रीपौष्करे** * द्विभुजं पुरुषाकारं युक्तमादित्यसन्निभैः । ध्वजैराभरणैश्चिह्नैश्शङ्खचक्रादिसंज्ञितैरिति । **सौमन्तवे** च * निरस्त्रा द्विभुजा सौम्या शङ्खचक्रकराङ्किता । महापुरुषरूपा च सुप्रसन्ना विलक्षणेति । **भारद्वाजे** च * द्विबाहुश्चक्रधृत्पाणिर्दक्षिणश्शङ्खधृत्परः । उपविष्टं तु मोक्षार्थी उत्थितं विश्वसिद्धय इति । **साङ्कर्षणे** च * पुरुषोत्तमस्य देवस्य शुद्धस्य स्फटिकत्विषः । समपादस्य पद्मोर्ध्वे ह्येकवक्त्रस्य संस्थितिः ॥ वरदाभयहस्तौ द्वावप्रवृत्ताख्यकर्मण इति । एतान्यन्यानि चैवंविधानि वाक्यानि तत्तद्रूपसद्भावमात्रपराणि । यत्पुन**रानन्दाख्यसंहितायामुक्तं** * स्थूलमष्टभुजं प्रोक्तं तस्मादेतत्त्रयं यजेदिति । एतदपि पररूपमधिकृत्यैव बह्वीषु संहितासु चतुर्भुजत्वप्रतिपादनात्, इच्छागृहीताभिमतोरुदेहस्य देवस्य वैकल्पिकध्यानपरतया सुसङ्गतम् । दृश्यते च नृसिंहकृष्णाद्येकैकरूपेष्वेव द्विभुजत्वचतुर्भुजत्ववर्णभेदाद्यवान्तरवैषम्यम् । परस्मिश्च नित्योदितशान्तोदितादिविभागस्सम्प्रतिपन्न इति सर्वं सुस्थम् । अत्र श्लोके ज्याकिणेत्यादिना स्वभक्तसंरक्षणार्थं महावीरत्वं प्रियावतंसेत्यादिना स्वानुरूपवीरपत्नीसंबन्धस्तत्पुरस्कारेण सर्वैरभिगमनीयत्वं च सूच्यते ॥ ३३ ॥

**उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम् ।**
**मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥** ३४

एवं [illegible] भुजानुभवानन्तरं दिव्यकण्ठशोभां मुखशोभां चानुसन्धत्ते—**उदग्रेति** ॥ उदग्रमुन्नतं पीनमकृशमुदग्रपीनांसविलम्बिभ्यां कुण्डलालकावलिभ्यां बन्धुरा सुन्दरा कम्बुवदभिरामा त्रिरेखालंकृता कन्धरा यस्य तथोक्तः । * [illegible] ग्रीवा कम्बुग्रीवेति कथ्यते । कुण्डलालकसमभिव्याहारः परभागकान्तिव्यञ्जनार्थः । * पापं हरति यत्पुंसां स्मृतं सङ्कल्पनामयम् । तत्पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखमित्यादिप्रसिद्धां पावनमनोहरां मुखशोभामनुभवति—**मुखश्रियेति** । मुखकान्त्येत्यर्थः । **न्यक्कृतेत्यादि** । यस्य मुखश्रिया न्यक्कृतं [illegible]रुहोज्ज्वलश्रीश्च स एवमुदीरितः । अम्बुरुहश्रिय उज्ज्वलत्वं नूतनविकासकान्तिसौकुमार्यादिभिः । अमृतांशुबिम्बाम्बुरुहयोर्वा द्वन्द्वः । तयोरुज्ज्वलश्रीरिति तत्पुरुषः ॥ ३४ ॥

**प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम् ।**
**शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकम् ॥** ३५

उक्तप्रकारां मुखशोभां प्रत्येकावयवभावनया पुनरपि निर्विशति—**प्रबुद्धेति** ॥ प्रबुद्धं विकसितं मुग्धं नूतनं सौम्यं वा । तथा च **नैघण्टुकाः** * मुग्धं सौम्ये नवे मूढ इति । अम्बुजवल्लोचनयोश्चारुत्वमाश्रितदर्शनप्रीतिविकसितत्वेन, तदनु[illegible] कान्त्यतिशयाच्च । **सविभ्रमभ्रूलत**मित्यनेनापि स्वभक्तसम्प्राप्तिजनितोल्लासातिशयस्सूच्यते । **उज्ज्वलाधरं** प्रवालादिभ्योऽप्यधिकप्रकाशमानाधरम् । विद्रुममौक्तिकन्यायेनाधरशोभया विशेषितां स्मितशोभामाह—**शुचिस्मित**मिति । अवदातस्मितमित्यर्थः । अथवा * स्मयन्निव नृपो हन्तीतिवद्विरुद्धाभिसन्धिं परिहर्तुमिह शुचित्वोक्तिः । एवं चोक्तं **श्रीपौष्करे** * पूर्वकर्मानलार्तानां ध्यायतां खेदशान्तये । स्वदन्तेन्दुचयोत्थेन ह्लादयन् गोगणेन त्विति । **कोमलगण्डं** सुकुमारकपोलम् । **उन्नसम्** उन्नतनासावंशम् । अलकानां पश्चादंसलम्बित्वं प्रागुक्तम् । अत्र तु पुरस्ताल्ललाटोर्ध्वभागलम्बित्वमाह—**ललाटपर्यन्तविलम्बितालकमिति** ॥ ३५ ॥

**स्फुरत्किरीटाङ्गदहारकण्ठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः ।**
**रथाङ्गशङ्खासिगदाधनुर्वरैर्लसत्तुलस्या वनमालयोज्ज्वलम् ॥** ३६

ईश्वरत्वेन शङ्कनीययोः ब्रह्मरुद्रयोरादिमं रूपं तापसवेषेण कर्मवश्यत्वव्यञ्जकम् । भगवतस्तु किरीटादियोगात् सर्वेश्वरत्वख्यापकमित्यभिप्रायेणाऽऽह—**स्फुरत्किरीटेति** ॥ **कण्ठिका** कण्ठभूषणं **मणीन्द्रः** कौस्तुभः, स च जीवतत्त्वाभिमानी । आदिशब्देनापरिमितानि दिव्याभरणान्तराणि संगृह्यन्ते । रथाङ्गादयः पञ्च मनस्तत्त्वतामसाहङ्कारसम्यग्ज्ञानवुद्धितत्त्वसात्विकाहङ्काराभिमानित्वेन प्रसिद्धाः । स्पर्शरूपगन्धविशेषैर्लसन्ती तुलसी लसत्तुलसी तया ; यद्वा लसन्ती तुलसी यस्यास्सा तयेति वनमाला विशेष्यते । स्फुरदुज्ज्वलमिति पदाभ्यामाभरणादेर्विग्रहस्य चान्योन्ययोगादपि शोभमानत्वं ख्याप्यते । अत्र *स्रग्वस्त्राभरणैर्युक्तं स्वानुरूपैरनूपमैः । चिन्मयैस्स्वप्रकाशैश्च अन्योन्यरुचिरञ्जितैरित्यादिकं द्रष्टव्यम् । चिन्मयैः अस्पृष्टसंसारतत्तद्देवतात्मकैरित्यर्थः ॥ ३६ ॥

**चकर्थ यस्या भवनं भुजान्तरं तव प्रियं धाम यदीयजन्मभूः ।**
**जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च ॥** ३७

ईदृशकिरीटादिभिस्सर्वेश्वरत्वेन व्यञ्जितस्य भगवतस्साम्राज्यं सलक्ष्मीकस्येति त्रिभिः श्लोकैः सहेतुकमनुसन्धत्ते । तत्र *ततोऽवलोकिता देवा हरिवक्षःस्थलस्थया *श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षस्स्थले स्थिताम्, *का चान्या त्वामृते देवि! सर्वयज्ञमयं वपुः । अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृत इत्यादिसूक्तमाह—**चकर्थ यस्या भवनं भुजान्तरमिति** ॥ *एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीमित्यादिप्रसिद्धमाह—**तव प्रियं धाम यदीयजन्मभूरिति** । ब्रह्मादीनां सर्वेषां तत्कटाक्षाधीनवैभवत्वमाह—**जगत्समस्तं यदपाङ्गसंश्रयमिति** । यथोच्यते *त्वया देवि! परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥ त्वयाऽवलोकितास्सद्यश्शीलाद्यैस्सकलैर्गुणैः । धनैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ स श्लाघ्यस्स गुणी धन्यः स कुलीनस्स बुद्धिमान् । स शूरस्स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥ इत्यादि । **श्रीमहाभारते** च श्रीवासवसंवादे स्वयमेव देवदेव्या स्ववैभवं प्रदर्शितं—*पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः । ममात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ साऽहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते । भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ अहं लक्ष्मीरहं भूमिः श्रीश्चाहं बलसूदन! । अहं श्रद्धा च मेधा च सन्नतिर्विजितिस्स्मृतिः ॥ अहं धृतिरहं सिद्धिरहं त्वद्भूतिरेव च । अहं स्वाहा स्वधा चैव सन्नतिर्नियतिः कृतिः ॥ राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च । निवासे धर्मशीलानां विषयेषु पुरेषु च ॥ जितकाशिनि शूरे च संग्रामेष्वनिवर्तिनि । निवसामि मनुष्येषु सदैव बलसूदन! ॥ धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि । प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः । सप्त देव्यो मदष्टम्यो वासं चैष्यन्ति चाष्टधा ॥ आशा श्रद्धा धृतिः क्षान्तिर्विभूतिस्सन्नतिः क्षमा ॥ अष्टमां विद्धि मां तासां पुरोगां पाकशासनेति । **श्रीविष्णुस्मृतेरन्ते ब्रह्मपुराणे** च **सहस्रनामस्तोत्रे** भगवच्छास्त्रे च **हिरण्यगर्भकाश्यपमङ्कणधनदादिसंहितासु** ब्रह्मरुद्रेन्द्रादीनां तदधीनवैभवत्वं विस्तरेण द्रष्टव्यम् । **यदर्थं** यत्प्राप्त्यर्थमिति यावत् । परस्परविश्लेषप्रसङ्गरहितयोरेव लक्ष्मीतद्वल्लभयोः विश्लेषाभिनयेन पुनः प्राप्तिरुच्यते । स्वसङ्कल्पनियता च स्वतन्त्रलीला

न पर्यनुयोगमर्हति । **अमन्थि** विष्ण्ववतारे । **अबन्धि** रामावतारे । यथोक्तं *ततः स्फुरत्कान्तिमती विकासिकमले स्थिता । श्रीर्देवी पयसस्तस्मात् उत्थिता धृतपङ्कजेत्यारभ्य *दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता । पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेरिति, *एष सेतुर्मया बद्धस्सागरे मकरालये । तव हेतोर्विशालाक्षि! नलसेतुस्सुदुष्कर इति च । अत्र जगत्समस्तमिति पादेनानुरूपत्वं पादान्तरैरभिमतत्वं च प्रख्यापितम् ॥ ३७ ॥

**स्ववैश्वरूप्येण सदाऽनुभूतयाऽप्यपूर्ववद्विस्मयमादधानया ।**
**गुणेन रूपेण विलासचेष्टितैः सदा तवैवोचितया तव श्रिया ॥** ३८

उक्तमेवाभिमतानुरूपत्वमनन्तरश्लोकेन प्रपञ्चयति—**स्ववैश्वरूप्येणेति** ॥ स्वस्य विश्वशरीरकत्वेनेत्यर्थः । **सदाऽनुभूतया** *यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत इतीदृशेन [illegible] सदा साक्षात्कृतयेत्यर्थः । एतदभिप्रायेण तदविनाभूतवैश्वरूप्यस्य हेतुत्वोक्तिः । यद्वा स्वरूपादिसर्वाकारेण *शान्तानन्तेत्यादिप्रक्रियया सर्वदा गाढोपगूढत्वेनानुभवो विवक्षितः । **अपूर्ववत्** अदृष्टपूर्ववत् । यद्वा इतःपूर्वमनालोचितवत इवेत्यर्थः । **विस्मयम्** अद्भुतरसहेतुभूतं भावम्, अनवधिकं प्रीतिविशेषमित्यर्थः । आदधानयेत्यत्रापि सदेत्यभिप्रेतम् । एतेन स्वभावसिद्धमभिमतत्वं प्रपञ्चितम् । **गुणेने**त्यादिना तु सर्वप्रकारानुरूपत्वमुच्यते । गुणशब्द इह ज्ञानकारुण्यादिविषयः । रूपेणाप्राकृतेनाखिलजगन्मातृत्वाभिव्यञ्जकेन दिव्यविग्रहेण । **विलासैः** भगवदभिमतैर्लीलाविशेषैः । **चेष्टितैः** आश्रितरक्षणावतारादिभिः । **तवैवोचितये**त्यनेन *तुल्यशीलवयोवृत्ताम्, *देवत्वे देवदेहेयम् *देवतिर्यङ्मनुष्येष्वित्यादिषूक्तमनुरूपत्वं प्रतिपाद्यते । **तव श्रिये**त्यनेन *विष्णोः श्रीरनपायिनीत्यादिप्रसिद्धं नित्यव्यवस्थितपतिपारार्थ्यं प्रतिष्ठापितम् । तृतीयान्तानां तयेत्युत्तरश्लोकस्थपदेनान्वयः ॥ ३८ ॥

**तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ।**
**फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥** ३९

*वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा इति पुराणप्रसिद्धमाह—**तया सहेति** ॥ भूम्यादिपत्न्यन्तरवतोऽपि श्रियः प्राधान्यादिह तदुक्तिः; तदपेक्षयाऽपि भगवतः प्राधान्यव्यञ्जनाय सहशब्दः । **आसीन**मित्यनेन *सहस्रस्थूणे विनिर्मिते दृढ उग्रे यत्र देवानामधिदेव आस्ते इति तवल्कारश्रुतिः स्मार्यते । उपात्ता चेयमभियुक्तैः—*सर्वात्मसाधारणनाथगोष्ठीपूरेऽपि दुष्पूरमहावकाशम् । आस्थानमानन्दमयं सहस्रस्थूणादि-[illegible] । **अनन्तभोगिनि** *गन्धर्वाप्सरसस्सिद्धास्सकिन्नरमहोरगाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते इति सुप्रसिद्धानन्तनाम्नि विश्वंभराधारणविनियुक्ते महाभोगिनि । **प्रकृष्टविज्ञानबलैकधामनि** प्रकृष्टयोर्विज्ञानबलयोरेकाश्रये । अस्य सङ्कर्षणाख्यव्यूहाभिमानविशेषयोगात्तदनुगुणौ गुणाविह निर्दिश्येते । पञ्चविधज्योतिस्सिद्धान्तप्रवर्तकत्वेन ज्ञानप्रकर्षोऽस्य प्रसिद्धः । सर्वाधारभूतभगवद्विग्रहधारणेन बलप्रकर्षोऽस्य व्यक्तः । *तेनेयं नागवर्येण शिरसा विधृता मही । बिभर्ति मालां लोकानां सदेवासुरमानुषामित्यादिभिश्च । यस्य **फणामणिव्रातमयूखमण्डलैः** प्रकाशमानोदरं दिव्यधाम स एवमाश्चर्याकारतयोत्तरार्धेनोक्तः । दिव्यधामशब्दोऽत्र वैकुण्ठाख्यमप्राकृतं नित्यं दिव्यं भगवद्विमानं वदति ॥ ३९ ॥

**निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।**
**शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ॥ ४०**

उक्तप्रभावं पर्यङ्कभोगिनं वृत्तिविशेषानुगुणसमाख्यान्तरेणापि विशिनष्टि—**निवासेति** ॥ निवासो दिव्यायतनम् । शय्यात्वं योगनिद्रावस्थायाम् । आसनं पर्यङ्कविद्यादिष्वाम्नातं दिव्यसिंहासनम् । पादुके *अधिरोहार्य ! पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यत इत्यवतारदशायां प्रसिद्धवैभवे । **अंशुकं** पीताम्बरादि । उपधानमुत्तमाङ्गधारकं पादधारकं च । वारणशब्दस्य द्वन्द्वात्परत्वाद्वर्षवारणमातपवारणं चेति योज्यम् । आदिशब्देन पादपीठादिसंग्रहः । **शरीरभेदै**रित्यनेन *अपरिमितधा भवतीतिन्यायोऽभिप्रेतः । **तव** कैङ्कर्योद्देश्यदिव्यमङ्गलविग्रहविशिष्टस्य । **शेषतां** स्वोपकारताप्राधान्यानादरेण परोपकारार्हताम् । *शेषः परार्थत्वादिति सूत्राभिप्रेतं **वेदार्थसंग्रहे** विवृतं *परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेष इति । **यथोचितम्** उक्तप्रवृत्तिनिमित्तानुगुणमित्यर्थः । **जनै**रित्येतत्पामरपरीक्षकसर्वलोकप्रसिद्धिज्ञापनार्थम् ॥ ४० ॥

**दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः ।**
**उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसंमर्दकिणाङ्कशोभिना ॥ ४१**

एवमनन्तवत्तत्तदवसरोचितसेवार्थनानाविधरूपभेदैः किंकुर्वाणेन गरुत्मता सेवितत्वमाह—**दास इति** ॥ पूर्वश्लोके शेषत्वमुक्तम् । अत्र तु दासशब्देन तदेव विशेष्यते । शेषत्वं हि अचेतनत्वं प्रत्यचेतनस्यापि भवति । दासत्वं तु चेतनं प्रत्येव चेतनस्यैव स्यात्, तथैव लोकव्यवहारात् । अत्र प्रथमं दास इत्युक्तिस्सखित्वाद्यवस्थायामपि स्वाभाविकस्य दासत्वस्यानपगमद्योतनार्था । उच्यते हि *लोकनाथस्य रामस्य सखा दासोऽस्मि रावणेति । गरुत्मतस्तु सखित्वं कदाचिदभिनयप्रयुक्तम् । यद्वा *समानचित्तवृत्तित्वं सखित्वमिति दर्शितमित्याद्युक्तचित्तवृत्तिसाम्यमिह विवक्षितम् । वाहनत्वादिकं तु गमनाद्यवस्थासु यथार्हं भाव्यम् । **त्रयीमयः** सर्ववेदमयविग्रह इत्यर्थः । श्रूयते हि *सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुरित्यादि । तथा *तस्य गायत्री जगती च पक्षावभवताम्, उष्णिक् च त्रिष्टुप् च पृष्ठ्यौ अनुष्टुप् च पङ्क्तिश्च धुर्यौ, बृहत्येवोक्तिरभवत्, स एतं छन्दोरथमास्थाय, एतमध्वानमनुसमचरदिति । **पुरः उपस्थितं** पुरस्तादाभिमुख्येन सेवितमित्यर्थः । त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिनेत्येतत्पूर्वोक्तज्याकिणन्यायेन कर्मवश्यत्वाभिनयदशायां भाव्यम् ॥ ४१ ॥

**त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा ।**
**प्रियेण सेनापतिना न्यवेदि तत्तथाऽनुजानन्तमुदारवीक्षणैः ॥ ४२**

अथ भगवतस्स्ववैभवानुरूपं स्वसङ्कल्पकल्पितनित्याधिकारसेनापतिसेवाप्रकारमभिदधानः *श्रीशभुक्तोज्झितशेषजीवन इति तन्मन्त्रोक्तमाह—**त्वदीयभुक्तोज्झितशेषभोजिनेति** ॥ त्वदीयभुक्तं त्वद्भुक्तमित्यर्थः । यद्वोक्तव्यतया भोजनपात्रनिहिते किंचिद्भुक्तं स्यात् तद्भुक्तोज्झितमित्युदीर्यते । तदेवात्र भुक्तशिष्टतया शेषशब्दार्थः । यद्वा भुक्तोज्झितैकदेशविषयोऽयं शेषशब्दः, अंशान्तरस्यान्यार्थतया विभजनीयत्वोक्तेः । **त्वया निसृष्टात्मभरेण** स्वच्छन्दवृत्तिना त्वया समर्पितात्मभरेणेत्यर्थः । असुरनिराकरणादिषु सेनानिर्वहणादिभारस्सेनापतित्वेन कल्पिते ह्यस्मिन् विन्यस्यते ।

अतस्तन्नियोगपूर्वकमन्ये प्रवर्तन्ते। जगत्सृष्ट्यादिभारोऽस्मिन् समर्पित इति केषांचिद्व्याख्यानं तु भगवदधीनतत्प्रभावातिशय-प्रशंसार्थम्। एकस्यैव हि सर्वशरीरिणो *बहु स्यामिति सङ्कल्पक्षमत्वमिति प्रागेव स्थापितम्। अत एव *श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यमिति श्रीवैकुण्ठगद्योक्तिरपि भक्तानां स्वामिसेवाविघ्नप्रशमने परिजननियोगादौ च योजनीया। विष्वक्सेनमन्त्रे तु *विश्वसृज इति पदं मुक्तवत्प्रभूतसृष्टिमात्रपरम्। विशेष्यभूतपरमात्मपर्यन्तं वा नेतव्यम्। नित्यानां ज्ञानभोगयोः ईश्वरेण मिथश्चात्यन्तसाम्येऽपि विग्रहाधिकारयोर्वैषम्यं भगवन्नित्येच्छासिद्धम्। प्रियेणेत्येतदनन्तगरुडादिष्वपि समानम्। अत्र तु विज्ञापनाधिकारिणि वाक्यानतिलङ्घनार्थं विशेषत उक्तम्। निवेदितमिति पाठे यदित्यस्य तदिति प्रतिनिर्देशोऽध्याहर्तव्यः। न्यवेदि तदिति पाठस्समीचीनः। यद्वृत्ते पूर्वं प्रयुक्ते तद्वृत्तमनन्तरं प्रयोक्तव्यमेवेति ह्याहुः। सेनापतिनिवेदितस्य भगवदभिमतत्वमाह—**तत्तथाऽनुजानन्तमुदारवीक्षणैरिति**। भगवति तत्परिजने च सर्वज्ञेऽप्येवं निवेदनप्रेक्षणादिव्यापारास्स्वच्छन्दलीलाप्रवृत्ताः। यद्यथा तत्तथेति स्वरूपप्रकारयोरविसंवादार्थम्। वीक्षणानामुदारत्वमैश्वर्यव्यञ्जकतया सौन्दर्यादिगुणातिशयात्तदाज्ञाभिप्रायगर्भतयाऽऽनन्दप्रदत्वाच्च ॥ ४२ ॥

**हताखिलक्लेशमलैः स्वभावतस्त्वदानुकूल्यैकरसैस्तवोचितैः।**
**गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम्॥** ४३

त एते नित्यसूरिषु प्रधानतमास्त्रय उक्ताः। अथ तद्वदसङ्ख्यातनित्यसूरिसेवाप्रकारमात्मनः प्राप्यत्वेनाभिसन्धायाह—**हताखिलेति**॥ अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः त एव मलत्वेनोच्यन्ते। तदविनाभूतत्रिगुणात्मकप्रकृतिसंबन्धो वा। अप्रतिबुद्धास्सर्वक्लेशाक्रान्ताः, प्रतिबुद्धास्तु कतिपयक्लेशरहिताः, उपायतो निवृत्तनिखिलक्लेशास्तु मुक्ताः, नित्यास्त्वनादिनिर्धूतनिखिलक्लेशा इत्यभिप्रायेण स्वभावत इत्युक्तम्। श्रूयते हि *तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति। न ह्येतन्मुक्तप्रभावविषयं, सदा दर्शनकर्तॄणां बहूनामभिधानात्। नित्यसर्वज्ञत्वादेव क्लेशादेरनवकाशः। एतेषां *तद्विप्रासो विपन्यवो जागृवांसस्समिन्धत इत्युक्तमनुभवप्रकारमभिप्रेत्याह—**त्वदानुकूल्यैकरसैरिति**। त्वच्छेषत्वानुरूपपारतन्त्र्यानुगुणकैङ्कर्यैकरुचिभिरित्यर्थः। सदानुकूल्येति पाठेऽप्ययमेवार्थः। **तवोचितैः** अनादिसर्वज्ञत्वाप्राकृतविग्रहत्वादिभिस्त्वदनुरूपैरित्यर्थः। एतद्विशेषणत्रयमेतेषां भगवदायत्तम्। इदं चानन्तगरुडादीनामपि समानम्। परिचारसाधनानि छत्रचामरादिसेवोपकरणानि। **सचिवैः**—आसन्नसेवायां तत्तद्विभूतिशेषनिर्वहणे च नियुक्तैस्सूरिभिः। **यथोचितं** तत्तदधिकारनियोगस्य सेव्याभिप्रायस्य स्वाभाविकदासत्वस्य चानुगुणमित्यर्थः॥ ४३ ॥

**अपूर्वनानारसभावनिर्भरप्रबद्धया मुग्धविदग्धलीलया।**
**क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम्॥** ४४

ईदृशस्य भगवतस्सर्वेषु व्यापारेषु लक्ष्मीसामरस्यमभिप्रेत्याह—**अपूर्वेति**॥ उक्तं च **श्रीवत्साङ्कमिश्रैः**—*क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तयेति। अपूर्वशब्देन रसभावपरंपरायामुत्तरोत्तरस्य विलक्षणत्वमननुभूतजातीयवदाश्चर्यत्वं वा विवक्षितम्। रसभावाः गान्धर्ववेदप्रदर्शिताः वीरशृङ्गारादय उत्साहादयश्च। तैर्निर्भरप्रबद्धया—प्रभूतसन्ततया। मौग्ध्यवैदग्ध्यसम्भेदादद्भुतत्वमभिप्रेत्याह—**मुग्धविदग्धलीलयेति**। लीलाया नित्यनिरतिशयत्वं व्यनक्ति—**क्षणाणुवत्क्षिप्तपरादिकालयेति**। क्षणमेव पर्वतस्थानीयं कृत्वा तस्याणुस्सूक्ष्मतम एकदेश इति कल्पितोऽयं दृष्टान्तः,

तद्वत्परादिकालः क्षिप्त इत्यतिशयोक्तिः । चतुर्मुखस्यायुः परो नाम कालः । आदिशब्देनासङ्ख्यातचतुर्मुखातिक्रान्तिकाव्यञ्जनम् । स्मर्यते हि * गङ्गायास्सिकताधारा यथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहा इति । **महिषीं** प्रधानपत्नीं श्रियमित्यर्थः । उक्तं च तस्याः प्रधानतमत्ववैषम्यं **श्रीवैकुण्ठगद्ये**—* शेषशेषाशनादिसर्वपरिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्येति । **प्रहर्षयन्त**मिति वर्तमाननिर्देशस्सदातनत्वाभिप्रायः । एवं प्रहृष्टायाः प्रियायाः * बभूव हृष्टा वैदीही भर्तारं परिषस्वज इत्युक्तप्रकारेण सर्वस्वभूतपरिष्वङ्गप्रदानानुगुणं प्रियस्य भुजवैभवमाह—**महाभुजमिति** । उक्तं ह्यवतारे तद्भुजमहत्त्वं * बाहुच्छायामवष्टब्धो यस्य लोको महात्मन इति ॥ ४४ ॥

**अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम् ।**
**श्रियः श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ॥** ४५

अथ प्रथमप्रस्तुतां यौवनविशेषितां सर्वचित्ताकर्षकसमुदायशोभामाश्रयणीयत्वभोग्यत्वौपयिकगुणविशेषांश्च सङ्कल्प्यानुभवति—**अचिन्त्ये**ति ॥ अचिन्त्यं परमयोगिभिरप्यपरिच्छेद्यं कुतर्कैरसंभावितमिति प्रतिक्षेप्तुमशक्यं च । दिव्यमप्राकृतम् । अद्भुतं सदाऽनुभूतत्वेऽप्यदृष्टपूर्ववदाश्चर्यावहम् । नित्यं कौमारवार्धकावस्थापरिच्छेदरहितम् । यौवनं लोके बाल्यानन्तर्येणोपलक्षणीयः कश्चिद्रमणीयसंस्थानविशेषः । स एव स्वभावः स्वासाधारणधर्मो यस्य स इत्यमृतोदधिर्विशेष्यते, स च लावण्यमयः लावण्यप्रचुरः । लावण्यं समुदायशोभा । तदेतल्लक्षयन्ति * भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति कथ्यत इति । निरतिशयभोग्यमहत्तराकारत्वमभिप्रेत्यामृतोदधित्वोपचारः । अप्राकृतामृतद्रव्यात्मकत्वं वा विवक्षितम् । पूर्वं * कः श्रीः श्रिय इति परत्वस्थापनायोक्तम् । अत्र तु कैङ्कर्योद्देश्यं निरतिशयभोग्यं रूपं सपत्नीकमिति ज्ञापयितुमाह—**श्रियःश्रिय**मिति । **भक्तजनैकजीवितं** भक्तजनानां प्रधानजीवितम् । * मच्चित्ता मद्गतप्राणा इत्यादिकमिह भाव्यम् । यद्वा भक्तजना एव जीवितं यस्य स तथोक्तः । तथाविधप्रीत्यतिशयादेव हि स्वयमेवाह—* ज्ञानी त्वात्मैव मे मतमिति, * मम प्राणा हि पाण्डवा इति च । **समर्थं** जगत्सृष्ट्यादाविवाश्रितानां सात्म्यभोगप्रदाने तद्विरोधिनिरसने च प्रतिबन्धकैः प्रतिहन्तुमशक्यमिति भावः । तथा च गीयते—* परित्राणाय साधूनामित्यादि । **आपत्सखम्** आश्रितानामापदि प्रियसखन्यायेन समानार्थतयाऽवस्थितमित्यर्थः । **अर्थिकल्पक**मित्यत्र स्वार्थे कः । अर्थिनां कल्पद्रुमवत् सर्वापेक्षितप्रदमिति यावत् । तथा च सूत्रितम्—*फलमत उपपत्तेरिति । यद्वा अर्थिनः कल्पद्रुमभूता यस्य सोऽर्थिकल्पकः; तदाह—* उदारास्सर्व एवैत इति । अथवा स्वयमर्थिनः कल्पयतीत्यर्थः । क्षेत्रज्ञानां तत्तत्पुरुषार्थाधिकारदशाऽपि हि परमपुरुषकल्पिता ॥ ४५ ॥

**भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः ।**
**कदाऽहमैकान्तिकनित्यकिंकरः प्रहर्षयिष्यामि सनाथजीवितः ॥** ४६

एवं प्राप्यं भगवन्तं यथावस्थितमनुसन्धाय तज्जनितहर्षप्रकर्षेण परमपुरुषार्थकाष्ठाभूतं निरुपाधिककैङ्कर्यमभ्यर्थ्यते—**भवन्तमिति** ॥ प्राप्यप्रापकत्वानुगुणप्रागुक्तसर्वाकारपरिपूर्णमित्यर्थः । कर्माधीनसेव्यान्तरनिवृत्तिव्यञ्जनार्थ एवकारः । एतेन * गीतिज्ञो यदि योगेन नाप्नोति परमं पदम् । रुद्रस्यानुचरो भूत्वा तेनैव सह मोदत इत्यादिषूक्तं रुद्राद्यनुचरणं च व्यवच्छिन्नं भवति । यद्वा मुक्तस्य स्वेच्छया भगवत्परिजनसेवाऽपि तच्छेषिपर्यन्तत्वबुद्धिपूर्विकेत्यभिप्रायः । **अनुचरन्**

तत्तदवस्थोचितवृत्त्या सेवमान इत्यर्थः। अत्र त्ववान्तरसेवाव्यावृत्त्यर्थं **निरन्तर**मित्युक्तम्। उत्तरावधिराहित्यमभिप्रेत्य वर्तमानव्यपदेशः। * एतमानन्दमयमात्मानमुपसंक्रम्य इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्निति श्रुतिश्चानेन सूच्यते। अत्र * कुरुष्व मामनुचरम्, * भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते, * तवानुभूतिसम्भूतप्रीतिकारितदासताम्। देहि मे कृपया देव न जाने गतिमन्यथा॥ सर्वावस्थोचिताशेषशेषतैकरतिस्तव। भवेयं पुण्डरीकाक्ष त्वमेवैवं कुरुष्व मामित्यादिकमनुसन्धेयम्। एवंविधकैङ्कर्यसिद्ध्यर्थं प्रयोजनान्तरेच्छा त्वयैव प्रशमनीयेत्यभिप्रायेणाह—**प्रशान्तनिश्शेषमनोरथान्तर** इति। ऐकान्तिकः एकस्मिन्नेव नियतः। यद्यपि ब्रह्मरुद्रप्राप्तौ क्वचिदपुनरावृत्तिरुच्यते, तथाऽपि * ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्युक्तन्यायात् क्रमेण मुक्तिपर्यन्तत्वं तत्राभिप्रेतम्। अतोऽत्र नित्यशब्देन देवतान्तरकिङ्करत्वव्यवच्छेदः। तदेतत् * क्वाहमत्यन्तदुर्बुद्धिरित्यादिवादिनं पुण्डरीकं प्रति भगवतोक्तम्—* आगच्छ वत्स भद्रं ते पुण्डरीक महामते। मद्रूपधारी नित्यात्मा मम पादपरिग्रह इति। **प्रहर्षयिष्यामि** त्वद्दासभूतस्य मे त्वत्प्रहर्ष एव प्रधानं प्रयोजनमिति भावः। एवं स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमरहितकैङ्कर्यप्रार्थना कृता भवति। इतः पूर्वं त्वदुपेक्षया त्वत्सनाथोऽपि नाथहीन इवाहमासम्। ईदृशं दैन्यं त्वत्सङ्कल्पादेव हि मे निवर्तिष्यत इत्यभिप्रायेणाह—सनाथजीवित इति॥ ४६॥

**धिगशुचिमविनीतं नि[र्भ]र्दयं मामलज्जं परमपुरुष योऽहं योगिवर्याग्रगण्यैः।**
**विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः॥** ४७

नन्वेवं मुमुक्षुदशां मया त्वं प्रापितोऽसि; इयं च मद्गुणास्वादगर्भतया मुक्त्यवस्थासमाना त्वया सनकादिभिरिव कञ्चित्कालमनुभूयतामिति भगवदभिप्रायमाशङ्क्य स्वस्य कार्पण्यस्थेम्ने विलम्बाक्षमतया त्वरातिशयव्यञ्जनाय च दुर्लभप्रार्थिनं स्वात्मानं निन्दति—**धिगशुचिमिति**॥ धिक्शब्दयोगात् द्वितीया। ननु * आत्मनिन्दाऽऽत्मपूजा चेति स्वनिन्दाऽपि निषिद्धा। सत्यम्; न तु सर्वत्र। यथा खल्वाञ्जनेयादेः स्वप्रशंसा क्वचिद्गुणः तथाऽऽत्मनिन्दाऽप्येतस्य स्वदैन्यख्यापनस्थल इति। अशुचिं त्वत्कैङ्कर्यविरुद्धप्रकृतिसंस्पृष्टं तदनुबन्धिक्लेशकर्मादिदूषितं भावशुद्धिरहितत्वेऽपि तद्वत्तां भावयन्तं च। नित्यशुद्धास्सूरयश्शान्तदोषा मुक्तंश्च त्वत्कैङ्कर्ययोग्याः। तत्र कोऽहमिति भावः। नन्वाचार्यवन्तमात्मानं किमर्थं निन्दसीत्यत्राह—**अविनीतमिति**। यद्वा आचार्यनियोगे ममावस्थानं स्यात्तदा क्षत्रबन्धुवत् क्रमेण मुक्तस्स्याम्, मम त्वाचार्यवत्ताऽपि विनयाभावात्सात्त्विकविडम्बनार्थैव संवृत्तेति भावः। अयोग्यस्य दुर्लभाभिलाषः * परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतमिति स्मरणादपचारस्स्यात्। अतः पुरोडाशार्थिनश्शुन इव मे दण्डघातस्स्यादिति भयरहितोऽहमित्याह—**निर्भयमिति**। निर्दयमिति केषांचित्पाठे तु परमभागवतभोग्ये परमामृते विषं सञ्जनयन्तमिति व्याचख्युः। अत्र च मदपराधेन मदनुबन्धिनामपि प्रत्यवायो भवेदिति ज्ञात्वाऽपि प्रवृत्ततया तेषु दयारहितोऽहमिति व्याख्यातुं युक्तम्। **माम्**—अहङ्कारादिग्रस्तमित्यभिप्रायः। घटदास्यास्सार्वभौमपरिष्वङ्गाभिलाषवत् अनुचितविषयोऽस्य मनोरथ इति सद्भिः परिहास्यतामनुसन्धायाह—**अलज्जमिति**। सूरिसेव्यस्य भगवतस्स्वसंबन्धानर्हं तुङ्गत्वं व्यनक्ति—**परमपुरुषेति**। स्वस्य निहीनतमत्वप्रसिद्धिमिदानीमपि दोषानुवृत्तिं चाभिप्रेत्याह—**योऽहमिति**। योगिषु वर्याः योगिवर्याः भगवद्भक्ताः। तथा च गीयते—* योगिनामपि सर्वेषामित्यादि। तेष्वग्रगण्याः प्रथमपरिगणनीयाः। **विधिशिवसनकाद्यै**रित्युभयभावनानां ब्रह्मभावनानां च सर्वेषां संग्रहः। **ध्यातुमत्यन्त-**

दूरमित्यनेन किंपुनः प्राप्तुमिति व्यज्यते । **तव परिजनभावं** स्वानुरूपानन्तगरुडाद्यपरिमितपरिजनवत्तया निरपेक्षं त्वां प्रति किङ्करत्वम् । यद्वा परिजनक्रियां सेवामित्यर्थः । **कामये** न मे केवलं सङ्गमात्रं किंतु विलम्बाक्षमतीव्रतमश्रद्धावानसीत्याशयः । कामतो वृत्तं यस्य सः कामवृत्तः । लोकशास्त्रानादरेणापरीक्षितयथेष्टकारीत्यर्थः । *लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता । पञ्च यत्र न विद्यन्ते न कुर्यात्तेन सङ्गतिमिति सर्वपरित्याज्योऽहं कथं त्वत्प्राप्त्यर्हे इति भावः ॥ ४७ ॥

**अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।**
**अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥** ४८

यद्येवं स्वेनापि निन्दनीयस्त्वमिदानीमप्यपराध्यसि, तर्हि कथं ते शीघ्रं मत्प्राप्तिं दास्यामीत्यत्रानर्हस्यापि ममात्यन्तदयनीयतया त्वत्प्राप्त्यर्हतापादनमात्मसात्करणं च कृपया स्वयमेव कुर्वित्याह—**अपराधेति** ॥ *न निन्दितमिति पूर्वोक्तमत्रापराधसहस्रभाजनमित्यनूदितम् । तच्च क्षमादिगुणैकभाजनेन त्वया सर्वं क्षन्तव्यमिति सूचनार्थम् । *निमज्जत इति प्रागुक्तं पतितमित्यादिना पुनर्गृहीतम् । ज्ञानिनां पुण्यफलांशोऽपि रागानुवृत्तिहेतुतयाऽत्यन्तभयावह इत्यभिप्रायेण भीमशब्दः । एवं संसारस्यातिघोरत्वोक्त्याऽपि स्वस्य परप्राप्तौ विलम्बाक्षमत्वं प्रतिष्ठाप्यते । **अगति**मित्यनेन प्रागुक्तानन्यगतित्वं स्थूणानिखननन्यायेन स्थिरीक्रियते । **शरणागत**मिति च पूर्वप्रयुक्तरक्षणव्याजानुवादः । तेन च *शरणं च प्रपन्नानां तवास्मीति च याचताम् । प्रसादं पितृहन्तॄणामपि कुर्वन्ति साधव इति सामान्यप्राप्तं त्वयि कैमुत्यसिद्धमिति व्यज्यते । शरण्येत्युक्तं हरिशब्देन स्थापितम् । समर्थः कारुणिको हि शरण्यः; तत्रानितरसाधारणं भगवतस्सामर्थ्यम् । *ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते इति पुराणोक्तम् । तथा कारुणिकत्वं चाश्रितानामनिष्टानि हरतीति विवक्षया व्यञ्जितम् । स्मर्यते हि *हरिर्हरति पापानि, *देव प्रपन्नार्तिहरेत्यादि । उक्तं च **परमसंहितायां**—*यस्माद्व्याप्तं जगत्तेन तस्माद्विष्णुरिति स्मृतः । हरणादेव दुःखानां हरिरित्यभिधीयत इति । *ज्ञातं मया वसिष्ठेन पुरा गीतं महात्मना । महतीमापदं प्राप्य स्मर्तव्यो भगवान् हरिः, *परमापदमापन्नो मनसा चिन्तयेद्धरिमित्यादिकमप्येतदभिप्रायम् । **कृपया** लब्धावसरयेत्यभिप्रेतम् । केवलमितः परं मद्व्यापारनिरपेक्षमिति भावः । एतेत साधनानन्तरनिष्पादनद्वारकं रक्षणं व्यवच्छिद्यते । **आत्मसात्कुरु**—दासभूतं मामुपायोपेयान्तरवैमुख्यकरणेन स्वकैङ्कर्यैकरसं कुरुष्वेत्याशयः । *धिगशुचिमिति पूर्वोक्तस्वात्मतिरस्कारानुवृत्त्याऽऽत्मन्यनादरद्योतनायात्र मामित्यनुक्तिः ॥

**अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि ।**
**भगवन् भवदुर्दिने पथः स्खलितं मामवलोकयाच्युत ॥** ४९

*न धर्मनिष्ठोऽस्मीत्यारभ्य अकिञ्चन इत्यन्तेनोक्तं प्रपञ्चयति—**अविवेकेति** ॥ अविवेकरूपैर्घनैरन्धानि प्रकाशरहितानि दिङ्मुखानि यस्य तत्तथोक्तम् । **बहुधा**—तापत्रयरूपेण शारीरमानसादितदवान्तरभेदैश्च । **संततदुःखवर्षिणि** अविच्छेदेन प्रतिकूलवर्गं सर्वत्र विदधाने । **भगवन्**—हेयप्रतिभटकल्याणैकतान, त्वमेव मां मोचयितुमर्हसीति भावः । प्रकाशगतिविरोधितया भवस्य दुर्दिनत्वरूपणम् । **पथः**—कर्मयोगादिनिवृत्तिधर्मरूपमुक्तिमार्गात्; **स्खलितं**—प्रभ्रष्टमित्यर्थः । **मां** *त्वत्पादमूलं शरणं प्रपद्ये इतिवादिनमिति भावः । **अवलोकय**—अनुगृह्णीष्वेत्यर्थः । **अच्युत**—*नत्यजेयं कथंचनेत्यादिवादिनं त्वामाश्रितः च्युतो न भवतीत्यभिप्रायः । *मूढोऽयमल्पमतिरल्पविचेष्टितोऽयं क्लिष्टं मनोऽस्य विषयै-

र्न मयि प्रसङ्गी । इत्थं कृपां कुरु मयि प्रणतेऽखिलेश त्वां स्तोतुमन्यजनयोऽपि हि देव नेश इति क्षत्रबन्धूक्तं, * सोऽहं ते देवदेवेशेत्यादि **कालिय**वाक्यं चानुसन्धेयम् ॥ ४९ ॥

**न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः ।**
**यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ दुर्लभः ॥** ५०

अथ [illegible] त्वदधिकदयनीयलाभात् तत्रैव मे त्वरा युक्ता किं त्वदवलोकनेनेत्यत्र त्वयाऽपि लब्धमभूतपूर्वमित्याद्युक्तं मुखान्तरेण शरण्यस्याप्यनिष्टप्रसङ्गं सूचयन् द्रढयति—**न मृषेति** ॥ स्ववाक्यसत्यत्वाभिसन्धिद्योतनायात्र व्यतिरेकतोऽन्वयतश्च निर्देशः । परमार्थमेव विज्ञापनं शृण्वित्यत्र नेदं स्वरक्षणप्रोत्साहनमात्रेण प्रयुक्तमित्यवधारणाभिप्रायः । **विज्ञापनं** सर्वज्ञेऽपि स्वामिनि दासोचितं स्वकार्यार्थिवाक्यमित्यर्थः । **शृण्विति** चानादरपरिहारपरम् । **एकं** रक्ष्यरक्षकयोर्द्वयोरपि लाभार्थतया प्रधानभूतम् । अथवा इदमेकमेव विज्ञापनम् । वक्ष्यमाणं सर्वमेतत्परिकरबन्ध इति भावः । **अग्रतः** न हि त्वं दूरस्थस्सन् पुरुषान्तरमुखेन विज्ञाप्यस इति भावः । **मे** कर्मयोगादिसुकृतलेशरहितस्यापराधसहस्रभाजनतया सर्वाधिकदुःखभागिनः । अत्र * अधीगर्थदयेशां कर्मणीति षष्ठी । **तव** दयाविषयान्वेषिण इति भावः । **तव दयनीय** इत्यन्वयः । **दुर्लभ** इत्यनेनान्वये तु संबन्धसामान्ये षष्ठी नेतव्या । मम च शरण्यान्तरं दुर्लभमित्यभिप्रायेण **नाथे**ति संबुद्धिः । उक्तं हि पूर्वं * चिराय मे कूलमिवासि लब्ध इति । * पराभवो नाथ न तेऽनुरूप इति प्रागुक्तं चात्र प्रतिसन्धेयम् ॥ ५० ॥

**तदहं त्वदृते न नाथवान्मदृते त्वं दयनीयवान्न च ।**
**विधिनिर्मितमेत[द]न्वयं भगवन् पालय मा स्म जीहपः ॥** ५१

अस्त्वेवं दुर्लभस्ततः किं कर्तव्यमित्यत्र ममैव लाभेऽपि त्वया त्वरितव्यम्; किं पुनस्तवापि लाभे सति; तस्मादावयोरिष्टभङ्गानिष्टप्रसङ्गपरिहारार्थं त्वन्मूलत्वत्प्रवृत्तिसिद्धं रक्ष्यरक्षकत्वरूपं संबन्धं निवारकरहितनिरङ्कुशस्वातन्त्र्यान्निष्फलीकर्तुं नार्हसीत्यभिप्रायेणाह—**तदहमिति** ॥ **तत्** उक्तस्यार्थस्य सत्यत्वादित्यर्थः । **अहं** मुमुक्षुस्सन्नाकिञ्चन्यधनः । **त्वदृते न नाथवान्** सर्वशक्तेः परमकारुणिकात्त्वत्तोऽन्येन शरण्यवान्न भवामीत्यर्थः । **मदृते त्वमित्यादि** । अपरिच्छेद्यापराधफलभूतानन्तदुःखाकरान्मत्तोऽन्येन त्वं दयाविषयवान्न भवसि । मत्परित्यागे मादृशास्सर्वेऽपि तव परित्याज्यास्स्युः । एवं सति विषयालाभात् दयागुणस्ते हीयेतेति भावः । सर्वस्मात्संसारिवर्गात् स्वकार्यसिद्ध्यर्थं स्वदोषाधिक्यमारोप्य वा **मदृत** इत्युक्तम् । **विधिनिर्मितम्** अनतिक्रमणीयनया दिष्ट्या निर्मितम् । अज्ञातसुकृतविशेषरूपव्याजावलम्बिन्या त्वत्कृपयैवावसरे क्लृप्तमिति यावत् । **एतमन्वयं** दयावत्त्वदयनीयत्वरूपं संबन्धम् । एतदन्वयमिति केचित्पठन्ति । तत्रापि स एवार्थः । एतयोरावयोस्संबन्धमिति वा । **भगवन्नि**त्यनेन मोक्षप्रदत्वमुक्तप्राप्यत्वानुगुणमुभयलिङ्गत्वमुद्भाव्यते । **पालय** सफलीकुरुष्वेति भावः । **मा स्म जीहपः** यद्यप्यहमपर्यनुयोज्यदुष्कर्मवशादिमं संबन्धं हातुमिच्छामि, तथाऽपि त्वया न तथा प्रवर्तनीयोऽहमिति भावः ॥ ५१ ॥

**वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः ।**
**तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥** ५२

अस्त्वेवं त्वदुक्तं सर्वं सत्यमुचितं च; तथाऽपि *ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मन इत्याद्युक्तस्वरूपज्ञानमन्तरेण स्वरूपानुरूपपुरुषार्थापेक्षापूर्वकतदुपायः कथं ते निष्पन्नः? त्वयि च सहजसंबन्धपरित्यागिनि ममापि रक्ष्यरक्षकत्वसंबन्धपरित्यागे को दोषः? *त्वं मेऽहं म इति चावयोरनादिर्विवाद इदानीमपि न शान्त इत्यत्र *स्वामिन्नित्यादिभिः प्रागपि संक्षिप्तं, *तद्वा एतदनुज्ञाक्षरं यद्धि किंचानुजानात्योमित्येव तदाहेति च्छान्दोग्याधीतानुज्ञाक्षरप्रदर्शितशेषत्वाभ्युपगमेनोत्तरमाह—**वपुरादिष्विति** ॥ आदिशब्द इन्द्रियादिसंग्रहार्थः। यथोक्त**मात्मसिद्धौ**—*देहेन्द्रियमनःप्राणादि]धीभ्योऽन्योऽनन्यसाधनः। नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखीति। **योऽपि कोऽपि वा**—अहं वपुरादेषु यः कश्चित् स्याम्। प्रमाणसिद्धस्याहमर्थस्य सारभूते त्वच्छेषत्वे मम निर्बन्धः। सामान्यतश्च स्वानुगुणसारग्रहणमुच्यते *यावानर्थ उदपाने, *बहुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः। सर्वतस्सारमादद्यात् पुष्पेभ्य इव षट्पद इत्यादिभिः। अत्र देहात्मभ्रमाद्यनुवृत्तिर्भवतु वा मा वा, *योऽहमस्मि स सन् यज इति न्यायमिहाश्रयामीति भावः। तथाऽपि ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविवेकमन्तरेण कथमुपायानुष्ठानं फलितं वा स्यादित्यत्राह—**गुणतोऽस्मानि यथातथाविध** इति। अणुत्वविभुत्वमध्यपरिमाणत्वजडत्वाजडत्वनित्यज्ञानत्वकरणाधीनज्ञानत्वादिविवेकोऽत्र नातीवापेक्षितः। अपेक्षितत्वेऽप्यात्मस्वरूपप्रकारयोरत्यन्तपरिज्ञाने मम शक्तिर्नास्ति। स्वतस्सर्वज्ञस्त्वमेव योऽसौ यत्प्रकारश्चेति मन्यसे स तथाऽहमिति सामान्यतः प्रबुद्धोऽहमिति भावः। **तत्**—एतावताऽपि प्रस्तुतशास्त्रार्थविरोधाभावादिति यावत्। **अयमहं**—त्वदनुसंहितयथावस्थिताकारशरणवरणानुगुणार्थित्वसामर्थ्यवानहमित्यर्थः। आत्मस्वरूपनिरूपणदशायामहंशब्दप्रयोगादहमर्थ एवात्मेति स्थापितं भवति। **तव पदपद्मयोस्समर्पितः**—*यस्यास्मि न तमन्तरेमीति न्यायात्त्वच्छेषत्वेन न्यस्त इत्यर्थः। **मया**—त्वद्दत्तकरणकलेबरबुद्धिश्रद्धाकार्पण्यादिशालिना। स्मर्यते हि *विचित्रा देहसंपत्तिरीश्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन्! हस्तपादादिसंयुतेति। इतः परं त्वया सह विवादो मे न भविष्यतीत्यभिप्रायेणाह—**अद्यैवेति**। अत्र यदि क्षणिकमेव मम स्वरूपम्, तथाऽपि तस्मिन्नेव क्षणे निक्षिप्त इति केषांचिद्व्याख्यानं त्वतिवादमात्रम्। एवं मुमुक्षूणामात्मात्मीयं सर्वं भगवच्छेषत्वेनानुसन्धेयमिति निवृत्तिधर्मसारो निष्कृष्टः। उक्तं चैतदु**परिचराख्याने** *आत्मा राज्यं धनं मित्रं कलत्रं वाहनानि च। एतद्भगवते सर्वमिति तत्प्रेक्षितं सदेति। **श्रीविष्णुतत्त्वे** च—*स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम्। उभयोरेष संबन्धो न परोऽभिमतो मम॥ स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि। आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मरेति। सर्वसंशयनिर्मोक्ता **नारदश्च पुण्डरीकसंवादे** प्राह—*दासोऽहं वासुदेवस्य देवदेवस्य शार्ङ्गिणः। शङ्खचक्रगदापाणेस्त्रैलोक्यस्यैकचक्षुष इति। **ईश्वरसंहितायां महादेवश्चाह** *दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः। अतोऽहमपि ते दास इति मत्वा नमाम्यहमिति ॥ ५२ ॥

**मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव।**
**नियतस्वमिति प्रबुद्धधीरथवा किं नु समर्पयामि ते ॥** ५३

ननु मया समर्पित इत्यत्र स्वशेषत्वानुसन्धानपूर्वकं स्वाधीनकर्तृत्वबुद्ध्या समर्पयसि चेत् *योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणेत्युक्तात्मापहारादिदोषः परिहृतो न स्यादित्यत्र स्वोक्ताभिप्रेतं विवृणोति—**मम नाथेति** ॥ अत्र जीवपरमात्मयाथात्म्यविषयः प्रमाणगणः पदद्वये प्रतिसन्धेयः। **यदस्तीति** स्वानुबन्धितया प्रमाणसिद्धगुणविग्रहादिसर्वसंग्रहः। **ममेति** व्यतिरेकोक्त्या देहात्मभ्रमादिः परिहृतः। त्र्यक्षरब्रह्मणि

तृतीयाक्षरविवक्षितं विविक्तात्मस्वरूपमाह—**योऽस्म्यहमिति । सकलं तत्**—आत्मात्मीयं तत्सर्वम् । **हि**शब्देन प्रमाणप्रसिद्धिर्द्योत्यते । **तव**—सर्वकारणतया सर्वरक्षकतया च प्रथमाक्षरप्रकृत्युक्तस्य । एवकारेण मध्यमाक्षरसिद्धमनन्यार्हत्वं प्रकाश्यते । **माधव**—श्रियः पते । एतेन निरुपाधिकसर्वशेषित्वं सूच्यते । चतुर्थीविवक्षितमाह—**नियतस्व**मिति । नित्यशेषभूतमित्यर्थः । **इति प्रबुद्धधीः**—एवं त्वत्प्रसादसन्धुक्षितैश्शास्त्रैः विकसितबुद्धिरिति भावः । शङ्कितदोषव्यवच्छेदाभिप्रायेणाह—**अथवेति । किंनु समर्पयामि ते!** सर्वस्वामिनः सर्वेश्वरस्य तव पूर्वमशेषभूतं मयेदानीं स्वातन्त्र्यस्वामित्वाभिमानपूर्वकं शेषीकर्तव्यं न किंचिदस्ति । अतः पूर्वश्लोककृतं समर्पणं त्वच्छेषत्वप्रतिपत्तिमात्ररूपम् ; न तु मदीयस्य त्वच्छेषत्वापादनरूपमिति भावः । अत्र पूर्वकृतस्वरूपसमर्पणानुशयेन तदेव प्रतिक्षिप्यत इति पक्षस्त्वप्रतिबुद्धानामा[illegible] । अस्य तु यामुनाचार्यस्य प्रागेव प्रतिबुद्धत्वादस्मदुक्तैव गमनिका । न खल्वद्यैव मया समर्पित इत्युक्तेरनन्तरमस्य तत्त्वप्रतिबोधः । एवं [illegible]तिपरः पूर्वश्लोकः । अयं तु तत्त्वविदां तस्यैवाकर्तव्यत्वस्थापनार्थ इति पक्षोऽपि * नियतस्वमिति प्रबुद्धधीः, * अवबोधितवानिमां यथेत्यादिभिर्न सङ्गच्छते । भरन्यासविधायकशास्त्रैश्च विरुध्येत । संबन्धज्ञानमात्रमेव प्रपत्तिरिति वादश्चात एव निरस्तो लोकविरुद्धश्च ॥

अप्रपन्नेऽपि संबन्धबुद्धिर्दासे हि दृश्यते । अमित्रे गत्यभावेन प्रपन्नेऽपि न दास्यधीः ॥

अन्यथा * तां त्वां दास इति प्रपन्न इति चेत्यादिभिरपि विरुध्येत । अतो मुमुक्षूणां भरसमर्पणरूपप्रपत्तौ संबन्धज्ञानमधिकारकोटौ स्थित्वाऽनुष्ठानकालेऽपि फलसङ्गकर्तृत्वादित्यागवत्तिष्ठतीति मन्तव्यम् ॥

महतामपि केषांचिदतिवादाः पृथग्विधाः । तत्तदर्थप्रशंसादितत्परत्वादबाधिताः ॥ ५३ ॥

**अवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम् ।**
**कृपयैवमनन्यभोग्यतां भगवन्! भक्तिमपि प्रयच्छ मे ॥** ५४

यद्येवं मच्छेषत्वप्रतिबोधस्ते संजातः, तेन लब्धाधिकार उपायनिष्पत्त्या मुक्तो भविष्यसि; अद्य पुनरादेहपातात्किमपेक्षितमित्यत्र त्वत्प्राप्तित्वराजननीं त्वदेकभोग्यत्वानुगुणभक्तिं देहीत्याह—**अवबोधितवानिति** ॥ त्वमेव ह्यनभिज्ञं मां ज्ञानिनं कृतवानिति कृतज्ञताप्रकाशनमिदम् । **इमां**—दृढप्रमाणप्रमितामदृष्टपूर्वतयाऽद्भुतत्वेन स्वादुतयाऽनुभूयमानां निरपेक्षकर्तृत्वादिदूरोज्झितां चेति भावः । **मयि नित्यां भवदीयतां**—त्वच्छरीरभूते मयि कालपरिच्छेदरहितां त्वच्छेषतामित्यर्थः । **स्वयं**—कृपानिविष्टस्त्वमेवेति यावत् । कृपयैवमितिपाठस्समीचीनः, यथाशब्दप्रतिनिर्देशस्य [illegible] । **अनन्यभोग्यतां**—भगवद्व्यतिरिक्तं भोग्यं यस्य सोऽन्यभोग्यः, तद्व्यतिरिक्तोऽनन्यभोग्यः, तादृशताम् । परमभक्तिगोचरत्वं तत्प्रदातृत्वं च तव युक्तमित्यभिप्रायेण संबोधयति—**भगवन्निति । भक्तिमपि**—त्वयि प्रकृष्टां प्रीतिं च । तदिदमुच्यते * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनीति । कृपयैतदिति पाठे त्वेतदिति वाक्यभेदः । एतदनन्यभोग्यतामिति समस्तं वा भक्तिविशेषणम् । स्वव्यतिरिक्तभोग्यतारहितमित्यर्थः । **भक्तिमपि प्रयच्छ मे**—अत्र * या प्रीतिरविवेकानामित्यादिश्लोकद्वयं भाव्यम् । ननु परमैकान्तिनां भगवति याच्ञा निषिध्यते । * निराशीःकर्मसंयुक्तं सात्त्वतं चाप्यकल्पयमिति चोक्तम् । सत्यम्; अहितं न याच्यो भगवानिति हि तत्र तात्पर्यम् । तदभिप्रायेण ह्युच्यते * अन्नं पानं धनं वस्त्रमायुरारोग्यमास्पदम् । आपद्यपि न याचेत पूजकः पुरुषोत्तमम् ॥ नाप्रपन्ने ददाम्येतद्याचितोऽपि दिनेदिने । अयाचतोऽपि तत्सर्वं प्रपन्ने विदधाम्यहमिति । तथा * याचितोऽपि सदा भक्तैर्नाहितं कारयेद्धरिः । बालमग्नौ पतन्तं

तु माता किल निवारयेदिति च। संहितान्तरे च *तत्पादभक्तिज्ञानाभ्यां फलमन्यत् कदाचन। न याचेत्प्रणतो विष्णुं याचनान्नश्यति ध्रुवमिति। अत्र भक्तिज्ञानवचनं वक्ष्यमाणभागवतकटाक्षादेरप्युपलक्षणम्। अवश्यापेक्षितविषये तु भगवन्तमेव याचेतेत्यपि नियम्यते॥ ५४॥

**तव दास्यसुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे।**
**इतरावसथेषु मा स्म भूदपि मे जन्म चतुर्मुखात्मना॥** ५५

न केवलं त्वद्भक्तिरेव मे प्रार्थनीया। तद्विवृद्धये तत्फलत्वेन च त्वदीयेषु भक्तिस्तत्सन्निकर्षश्च मे स्यादित्यभिप्रायेणाह—**तव दास्येति**॥ उक्तं हि तत्सङ्गतिफलं **च्यवननहुषसंवादे**—*संभाषा दर्शनं स्पर्शः कीर्तनं स्मरणं नतिः। पावनानि किलैतानि साधूनामिति शुश्रुम॥ सेव्याः श्रियोऽर्थिभिस्सन्तः पुण्यतीर्थफलोपमाः। क्षणोपासनयोगोऽपि न तेषां निष्फलो भवेत्॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः। कालेन फलदं तीर्थं सद्यस्साधुसमागम इति। एवं *सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम्। सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत्॥ अहन्यहनि धर्मस्य योनिस्साधुसमागमः। मोहजालस्य योनिर्हि मूढैरेव समागमः॥ वासो यथा रागवशं प्रयाति तथा स तेषां वशमभ्युपैति। तत्सन्निकर्षे परिवर्तितव्यं विद्याधिकाश्चापि निषेवणीयाः॥ सुवर्णतां गच्छति सन्निकर्षात् नीलः खगो मेरुमिवाश्रयन् वै इत्यादि वचनानि द्रष्टव्यानि। **तव दास्यसुखैकसङ्गिनां**—त्वत्कैङ्कर्यप्रीतिमात्रासक्तानामित्यर्थः। एतेन *एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रियप्रीतिनिवर्तकस्य। अध्यात्मविद्यागतमानसस्य मोक्षो ध्रुवो नित्यमहिंसकस्येत्यादिप्रसिद्धं वैषयिकसुखवैमुख्यं व्यज्यते। ईदृशानां स्वेनान्यैश्च बहुमन्तव्यत्वं **भगवतोक्तं**—*मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्। स्वयमभ्यर्चनं चैव समार्थे डम्भवर्जनम्॥ मत्कथाश्रवणे भक्तिस्स्वरनेत्राङ्गविक्रिया। ममानुस्मरणं नित्यं यच्च मां नोपजीवति॥ भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते। स विप्रेन्द्रो मुनिः श्रीमान् स यतिस्स च पण्डितः॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहमिति। **मोक्षधर्मे** च ब्रह्मादिभिरपि, *यत्प्रयुज्यते तत्सर्वं देवदेवस्य चरणावुपतिष्ठत इत्युक्त्वाऽनन्तरमुच्यते—*याः क्रियास्संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः। तास्सर्वाश्शिरसा देवः प्रतिगृह्णाति वै स्वयम्॥ अहो ह्येकान्तिनस्सर्वान्प्रीणाति भगवान् हरिः। विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयमिति। ईदृशभागवताभिमानगोचरत्वाय स्थानान्तरगमनानर्हानन्यगतित्वविवक्षया **कीटजन्मापी**त्युक्तम्। *शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत इत्युक्तमुत्कृष्टजन्म तिष्ठतु। *पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमित्यादिषूक्तमपकृष्टजन्मापि त्वदिष्टविनियोगसिद्धत्वाच्छेषत्वकाष्ठावेदिनो ममालम्। भागवताभिमानविषयभूतदेशवासित्वं तत्कैङ्कर्यं च ममापेक्षितमिति तात्पर्यम्। अपिशब्दस्तत्र गाढाभिसन्धिं द्योतयति। यथोक्तं—*मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्। तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषत इति। इतिहाससमुच्चये च *तस्माद्विष्णुप्रसादाय वैष्णवान्परितोषयेत्। प्रसादसुमुखो विष्णुस्तेनैव स्यान्न संशय इति।

**शाण्डिल्यस्मृतौ** च *सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्। न संशयोऽत्र तद्भक्तपरिचर्यारतात्मनाम्॥ केवलं भगवत्पादसेवया विमलं मनः। न जायते यथा नित्यं तद्भक्तचरणार्चनादिति। **श्रीपौष्करे** च *दुर्लभा भगवद्योगभाविनो भुवि मानवाः। तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदमिति। एवम् *आराधनानां सर्वेषां विष्णोराराधनं परम्। तस्मात्परतरं प्रोक्तं तदीयाराधनं परम्॥ तस्य यज्ञवराहस्य विष्णोरमिततेजसः। प्रणामं येऽपि कुर्वन्ति

तेषामपि नमोनम इत्यादि द्रष्टव्यम् । **इतरावसथेषु** [illegible]षु । **चतुर्मुखात्मनाऽपि जन्म मा स्म भूत्**—किं पुनर्मनुष्याद्यात्मनेति तात्पर्यम् । त्वद्भागिपन्ने चतुर्मुखात्मनाऽपि जन्म [illegible] पुनरपि मे इत्युक्तम् । एतेन भागवतानामभागवतसंसर्गः परिहार्य इत्युक्तं भवति । तथा च बह्वृचा आमनन्ति *नेदंविदनिदंविदा समुद्दिशेन्न सह भुञ्जीत न [illegible]मिति । स्मर्यते च *शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेदिति । *असतां दर्शनात् स्पर्शात् सम्पर्काच्च सहासनात् । धर्माचाराः प्रणश्यन्ति यथा सैकतमम्भसेति च । **शाण्डिल्यस्मृतौ** च *मूढैः पापरतैः क्रूरैस्सद्भागवतपराङ्मुखैः । संबन्धं नाचरेद्भक्तिर्नश्यत्येतैस्तु सङ्गमादिति । **वैष्णवे** च पुराणे *पुंसां जटाभरणमौण्ड्यवतां वृथैव [illegible]नाम् । [illegible]कृतानां संभाषणादपि नरा नरकं प्रयान्तीति । अन्यत्र च *वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसमिति । तथा *अद्यप्रभृति हे लोकाः! यूयं यूयं वयं वयम् । अर्थकामपरा यूयं नारायणपरा वयम् ॥ नास्ति सङ्गतिरस्माकं युष्माकं च परस्परम् । वयं तु किङ्करा विष्णोर्यूयमिन्द्रियकिङ्करा इति । पितृभिश्चैवमुक्तं *मा जनिष्ट स नो वंशे जातो वा द्राग्विपद्यताम् । आजन्ममरणं यस्य वासुदेवो न दैवतमिति । *अवैद्यः प्राकृतः प्रोक्तो वैद्यो वैष्णव उच्यते । अवैद्येन न केनापि वैद्यः किञ्चित्समाचरेदिति ॥ ५५ ॥

**सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।**
**महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥** ५६

एवमभागवतसंसर्गपरिहारेण भागवतैस्सन्निकर्षस्तव भवतु, तैस्ते किं [illegible]—**सकृदिति** ॥ सदा दर्शनस्यापेक्षितत्वेऽपि सकृद्विलोकनोक्तिस्तस्य पुरुषार्थभूयस्त्वव्यञ्जनार्था । तथा अयोध्यावासिनां वाक्यम्—*अलमद्य हि भुक्तेन परमार्थैरलं च नः । यथा पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ *इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननमिति । तथा *मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् । कदा द्रक्ष्यामहे रामं जगतश्शोकनाशनम् ॥ दृष्ट एव हि नः शोकमपनेष्यति राघवः । तमस्सर्वस्य लोकस्य समुद्यन्निव भास्कर इति । *यश्च रामं न पश्येत्तु यं च रामो न पश्यति । निन्दितस्स भवेल्लोके स्वात्माऽप्येनं विगर्हतीति चोक्तम् । **अनुत्तमभुक्तिः**—ब्रह्मादीनां भुक्तिः । सा च मुक्तिश्च यैस्तृणीकृते अनादृते तैस्तृणीकृतानुत्तमभुक्तिमुक्तिभिः । अनुत्तमशब्दस्य मुक्तावन्वयेऽपि न मुक्त्यन्तरं व्यवच्छेद्यं, मुक्तितारतम्यस्य प्रागेव निरस्तत्वात् । भगवदनुभवतां तदन्यतृणीकारः श्रूयते *किं प्रजया करिष्यामो येषां नायमात्मेत्यादि । पुराणे चोक्तं *पत्युः प्रजानामैश्वर्यं पशूनां वा न कामये । अहं कदम्बो भूयासं कुन्दो वा यमुनातट इति । निदर्शनविवक्षया चोच्यते *तृणं नारी विरक्तस्य तृणं शूरस्य जीवितम् । तृणं ब्रह्मविदो विश्वं निस्पृहस्य नृपस्तृणमिति । *महात्मानस्तु मां पार्थ, *स महात्मा सुदुर्लभ इति भगवदुक्तं सूचयन्नाह—**महात्मभि**रिति । उज्जीवनत्वे पुरुषार्थत्वे च भूयस्त्वापेक्षया बहुवचनम् । **मां**—[illegible] राजसतामसदृष्टिगोचरतया दूषितमिदानीं त्वदवेक्षणेन प्रतिबुद्धमिति भावः । **अवलोक्यताम्**—अवलोकनयोग्यताम् । तिष्ठतु तद्भवनेषु जन्म; तत्कटाक्षविषयत्वमात्रमपि मे पुरुषार्थ इति चाभिप्रेतम् । प्रख्यातो हि भागवतावलोकनप्रभावः *यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रतिष्ठिता । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैरिति । **नय**—एतावदुपकर्ता त्वमेव शेषं पूरयेति भावः । यथा त्वया तद्विश्लेषो दुस्सहः, तथा मया तदवलोकनविरहोऽतिदुस्सह इत्यभिप्रायेणाह—**क्षणेऽपि ते यद्विरहोऽति-**

**दुस्सह** इति। तदिदमामनन्ति **तैत्तिरीयाः**—*सन्धां च यां सन्दधे ब्रह्मणैषः। रमते तस्मिन्नुत जीर्णे शयाने। नैनं जहात्यहस्सु पूर्व्येष्विति। स्वयमप्याह—*न त्यजेयं कथंचन, *ज्ञानी त्वात्मैव मे मतमिति। आहुश्च महर्षयः—*पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम्॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः। विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके इति। तथा *नारायणेति यस्यास्ये वर्तते नाम मङ्गलम्। नारायणस्तमन्वास्ते वत्सं गौरिव वत्सलेति। *वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिरिति च। अत्र विरहशब्देन सर्वव्यापिनस्सर्वज्ञस्य भक्तानां स्वविग्रहाद्यनुभवविच्छेदो विवक्षितः। नतु तद्विरहो विश्लेषः। दुस्सहशब्देन खेदो न विवक्षितः, सर्वशक्तेर्हेयप्रत्यनीकस्य तदयोगात्। अतस्तादृशावस्थावतां स्वविश्लेषं नोत्पादयतीत्येव तात्पर्यम्। यत्कर्तृक-वियोगस्ते निराकर्तुमिष्टतम इति वा विवक्षितम्। *अवबोधितवानित्यादिश्लोकत्रयेण स्वयंप्रयोजनोत्तरकृत्ये काम्य-निषिद्धसंभेदप्रसङ्गोऽपि निरस्तः॥ ५६॥

**न देहं न प्राणान्न च सुखमशेषाभिलषितं न चात्मानं नान्यत्किमपि तव शेषत्वविभवात्।**
**बहिर्भूतं नाथ! क्षणमपि सहे यातु शतधा विनाशं तत्सत्यं मधुमथन! विज्ञापनमिदम्॥ ५७**

एवमिष्टं सर्वं दास्यामि; अनिष्टं त्विह किं ते निवर्तनीयमित्यत्राह—**न देहमिति**॥ यद्वा भागवतकटाक्षलब्धरुचि-विशेषात् सपदि सर्वं विरोधिवर्गं संग्रहेण निर्दिश्य तन्निवृत्तिमभ्यर्थयते। **अशेषाभिलषित**मित्येतत् देहादिषु सर्वेष्व-न्वेति; अन्येषां सुखार्थत्वात् प्रधानभूते सुखमात्रे वा। **आत्मानं**—स्वस्वरूपमित्यर्थः। पुत्रमित्रगृहक्षेत्रादिकं दूरतो निरस्तमित्यभिप्रायेणाह—**नान्यत्किमपीति। तव शेषत्वविभवाद्बहिर्भूतं**—त्वच्छेषत्वफलभूतकैङ्कर्याख्यसमृद्धेरनुपयुक्त-मित्यर्थः। न हि विश्वपतेरशेषभूतं किंचित् कदाचित् संभवति। **नाथ**शब्देन सर्वशेषित्वमिह विवक्षितम्। **क्षणमपि सहे** इत्येतत् न देहमित्यादौ सर्वत्र योज्यम्। आत्माभिमानार्हतया दुस्त्यजपरिग्रहस्य देहादेर्ब्रह्मादिस्थावरान्तसर्वापे-क्षितस्य प्रभूतस्याल्पस्य वा सुखस्य तद्वोक्तुः *आत्मार्थे पृथिवीं त्यजेदिति स्वेतरसकलपरित्यागेनापि परिग्राह्यस्यात्मनः तदनुबन्ध्यैश्वर्यादेरपि प्रत्येकमसह्यत्वद्योतनाय नञ्प्रयोगावृत्तिः। अत्र *यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना, *न देवलोकाक्रमणं नामरत्वमहं वृणे। ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना, *न च सीता त्वया हीना न चाहमपि राघव। मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥ *नहि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः। वसन्त्या राक्षसीमध्ये विना रामं महारथमित्यादिपूक्तः प्रकारोऽनुसन्धेयः। एवमसह्यत्वादेव तेषामत्यन्तनिवृत्तिः कार्येत्यभिप्राये-णाह—**या तु शतधा विनाश**मिति। निरवयवस्य नित्यस्यात्मनश्शतधा विनाशप्राप्त्ययोगात् कैङ्कर्यविरुद्धावस्थानिवर्तन-मेवात्र विवक्षितम्। ननु सर्वेष्वसंभाविताथत्वादहृदयमेतद्वाक्यमित्यत्राह—**तत्सत्यमिति**। न हि त्वदन्य ईदृशप्रबल-विरोधिनिवर्तनक्षम इति सूचयति—**मधुमथनेति**। पूर्वं *शृणु विज्ञापनमेकमित्युक्तम्; तद्वदिदमपि दयनीयत्वानुबन्धि-विज्ञापनमित्याह—**विज्ञापनमिदमिति**। तदिदं विज्ञापनं सत्यमिति समानाधिकरणं वा। विज्ञापितमिति केचित्पठन्ति। मुमुक्षुणा भगवत्कैङ्कर्यानुपयुक्तपरिग्रहस्त्याज्य इत्युक्तं भवति॥ ५७॥

**दुरन्तस्यानादेरपरिहरणीयस्य महतो निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि।**
**दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे तव स्मारंस्मारं गुणगणमितीच्छामि गतभीः॥ ५८**

एतत्सर्वमत्यन्तानर्हस्त्वं किमवलम्ब्य प्रार्थयस इति पुनर्भगवता पूर्वोक्तार्थस्थिरीकरणाय पृष्ट आह—**दुरन्तस्येति** ॥ प्रायश्चित्तानवसरातिघोरविपाकस्येत्यर्थः । **अनादेः**—पूर्वकोटिरहितप्रवाहस्य । **अपरिहरणीयस्य**—सर्वशक्तेस्तवैव सङ्कल्पमन्तरेण दुष्परिहरस्य । **महतः** [illegible] दिरूपस्यासङ्ख्यातस्य वा । [illegible] इत्याह—**निहीनाचार इति** । अत्यन्तनिकृष्टाचार इत्यर्थः । अत्र * सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्, * आचारहीनं न पुनन्ति वेदा इत्यादि द्रष्टव्यम् । **अहं**—मदन्यः क ईदृश इति भावः । **नृपशुः** नरजातीयतया चतुष्पाद्व्यावृत्तः पशुः, सम्यग्ज्ञानयोग्यजन्मलाभेऽपि * ज्ञानेन हीनः पशुभिस्समान इत्युक्तः । **अशुभस्यास्पदं**—त्वदपचारत्वदीयापचारादीनां सर्वेषामेकाश्रयः । अहमशुभस्यास्पदम्, त्वं तु * गुणानामाकरो महानिति प्रसिद्ध इति हृदयम् । **अपि**शब्देन विरोधद्योतनम् । [illegible] तया संबोधयति—**दयासिन्धो** इति । **बन्धो** *माता पितेत्यादिना निरुपाधिकसर्वविधबन्धुत्वेन प्रसिद्ध । **निरवधिकवात्सल्यजलधे** *रिपूणामपि वत्सल इति ह्युक्तम् । अत्र दयावात्सल[illegible] स्वापराधानां तत्र निमज्जनं सूच्यते । **तव**—स्वाभाविकासंख्यातगुणवत्तया शास्त्रप्रसिद्धस्य । **गुणगणं**—ज्ञानशक्तिकारुण्यादिकम् । **स्मारंस्मारं**—स्मृत्वा स्मृत्वा । निर्बाधतया विस्मर्तुमशक्यतया च निरन्तरमनुसन्धायेति भावः । तेनैव **गतभीः**—विरोधिभूयस्त्वदर्शनजन्यभयरहितः । **इतीच्छामि**—* विलासविक्रान्तेत्यादिभिः * अवबोधितवानिमां यथेत्यादिभिश्चोक्तप्रकारेण निरन्तरेच्छावान् भवामीत्यर्थः ॥

**अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रजस्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम् ।**
**तथाऽपीत्थंरूपं वचनमवलम्ब्यापि कृपया त्वमेवैवंभूतं धरणिधर! मे शिक्षय मनः ॥ ५९**

यद्येवमिच्छसि तदा ते सर्वमिदं संपत्स्यते । शास्त्रजन्यपरोक्षज्ञानमात्रेणादुष्टतयाऽवगतेऽपि [illegible]न्यत्र रुच्यनुवृ[illegible] यदि मुक्तिं दास्यामि, तदा [illegible] मया कृतं स्यादित्यत्राह—**अनिच्छन्निति** ॥ इत आरभ्य सप्तभिः श्लोकैः शिक्षणीयत्वे तन्मुखेन रक्षणीयत्वे च हेतुविशेषा उच्यन्ते । **यदी**त्यत्र यद्यपीति योज्यं, तथाऽपीति प्रतिनिर्देशात् । पुनश्शब्दोऽन्याभिप्रायत्वेऽपि [illegible] । **इतीच्छन्निवे**त्यादिना * साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । [illegible], * हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः, * अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव, * एताव[illegible] पुंसां संकीर्तनं भगवतो [illegible] । आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम्, [illegible] शब्दोऽस्ति वागस्ति वशवर्तिनी । तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम्, * रोगापद्भयदुःखेभ्यो मुच्यन्ते नात्र संशयः । अपि नारायणेत्येतच्छब्दमात्रप्रलापिन इत्यादीनि प्रमाणानि सूच्यन्ते । **रजस्तमश्छन्नः** [illegible]प्रकाशरहित इति भावः । **छद्मस्तुतिवचनभङ्गीं**—[illegible] । **इत्थंरूपं वचनमवलम्ब्यापि**—द्व्यर्थविषयच्छद्मवाक्यरूपं व्याजमङ्गीकृत्यापीति यावत् । एवंविधवचनमात्रेऽपि हि [illegible]निवृत्तिः स्मर्यते * कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट! दूरतरेण तानपापानिति । **कृपया**—स्वसङ्कल्पितयत्किञ्चिद्व्याजमात्रापेक्षिण्येति हृदयम् । **त्वमेव**—* राघवं शरणं गत इत्यपरीक्षितवाक्यमवलम्ब्य * न त्यजेयं कथंचन, * दोषो यद्यपि तस्य स्यादिति हि त्वयैवोक्तमिति भावः । यद्वा * सुहृदं सर्व-

भूतानाम्, * ददामि बुद्धियोगं तमित्यादिवादी । एवकारेणान्यनैरपेक्ष्यमन्याशक्यत्वं च द्योत्यते । **एवंभूतं**-स्वतस्सर्वज्ञं त्वामपि विप्रलब्धुमुद्यतमित्यभिप्रायः । **धरणिधरे**ति संबुद्धिस्सर्वलोकहितैषिण्या सर्वंसहया क्षमया युक्तस्त्वमिति सूचयति । अत्र वसुन्धरोद्धरणनिदर्शनेन स्वात्मसमुद्धरणार्हत्वमपि प्रकाश्यते । उक्तं हि **भगवच्छास्त्रे**-* नमस्सकलकल्याणदायिने चक्रपाणये । विषयार्णवमग्नानां समुद्धरणहेतव इति । **मे**—अन्यैश्शिक्षयितुमशक्यस्येति भावः । यथोच्यते * एकश्शास्ता न द्वितीयोऽस्ति, * शास्ता विष्णुरशेषस्येति । **शिक्षय**—छद्मरहितं सम्यगिच्छायुक्तं कुरुष्वेत्यर्थः । * शङ्खप्रान्तेन गोविन्दस्तं पस्पर्श कृताञ्जलिम् । उत्तानपादतनयं मुनिवर्यं जगत्पतिः ॥ ततः प्रसन्नवदनस्तत्क्षणान्नृपनन्दनः । तुष्टाव प्रणतो भूत्वा भूतधातारमच्युतमिति न्याय इहानुसन्धेयः ॥ ५९ ॥

**पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।**
**त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥** ६०

एवं स्वचेतश्शिक्षणेऽन्यानपि सामान्यतो विशेषतश्च बहुविधान् हेतूनाह—**पितेति** ॥ **पिता त्वम्**—उत्पादकस्त्वं हितप्रवर्तकश्च । **माता त्वं**—सा हि पुत्रार्थं भूयांसि कर्माण्यारभमाणा प्रियप्रवर्तनशीला च, तादृशस्त्वम् । सर्वाधिकप्रीतिविषयतया निरयनिस्तारकतया प्राप्तावसरेषु रक्षकतया च **दयिततनयस्त्वम्** । प्रियश्चासौ सुहृच्चेति **प्रियसुहृत्**—निरतिशयानन्दस्वरूपत्वं नित्यहितैषित्वं चात्र विवक्षितम् । उक्तसर्वप्रकारविशिष्टस्त्वदन्यो नास्तीति व्यञ्जनार्थमेवकारस्सर्वत्र योज्यः । *निवासश्शरणं सुहृदिति **सुबालोपनिषदि, गीतोपनिषदि** चाधीतम् । **त्वं मित्रं**—हितकार्येषु सवयास्सर्वरहस्ययोग्यश्च मित्रमित्युच्यते, त्वमपि तादृशः; गुहधनञ्जयगोपालादिषु तथात्वव्यक्तिः । उच्यते च—*मित्रमौपयिकं कर्तुम्, * तेन मैत्री भवतु ते, * अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति । **गुरुरसि**—सर्वेषां यथाधिकारं * मन्मना भव मद्भक्तः, *मामेकं शरणं व्रजेत्यादिभिस्तत्त्वहितपुरुषार्थोपदेष्टा, तत एव सर्वाज्ञाननिवर्तकश्च । तथा च निरुच्यते * गुशब्दस्त्वन्धकारस्स्यात् रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वात् गुरुरित्यभिधीयत इति । **गतिश्चासि**—उपायः प्राप्यश्चासि । श्रूयते हि * अमृतस्यैष सेतुरिति * यमेवैष वृणुते तेन लभ्य इति च । **जगता**मित्यनेन * पिताऽहमस्य जगतो माता धाता पितामहः *भूतानां योऽव्ययः पिता, * चराचरगुरुं हरिम्, * ममाप्यखिललोकानां गुरुर्नारायणो गुरुः, * तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम् । अर्च्यमर्चितुमिच्छामस्सर्वे संमन्तुमर्हथ, * पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयानित्यादिपूक्तं देवदानवादिसर्वसाधारण्यं व्यज्यते । एतत्सर्वं पूर्वं शरण्यबन्धुशब्दाभ्यां संगृहीतस्य प्रपञ्चनम् । अथ **त्वदीय** इत्यादिना स्वगतान् हेतूनाह । त्वच्छेषत्वप्रतिबोधवानहमस्मीति भावः । **त्वद्भृत्यः**—त्वयैव भरणीयः, पोषणीयश्च । **तव परिजनः**—स्वतस्त्वत्सेवार्हः स्तुतिरूपसेवायां त्वया नियुक्तश्च । **त्वद्गतिः**—त्वदेकप्रयोजनः । **अहं**—ईदृशीमवस्थां त्वयैव प्रापितइति भावः । **प्रपन्नश्च** *त्वत्पादमूलं शरणं प्रपद्य इति यथाहृदयमहृदयं वा भावितभरन्यासः । एतेन * सोऽहं त्वां शरणमपारमप्रमेयं संप्राप्तः परमपदं यतो न किंचित्, *अहमात्मा न देहोऽस्मि विष्णुशेषोऽपरिग्रहः । तमेव शरणं प्राप्तस्तत्कैङ्कर्यचिकीर्षयेत्यादिष्विव स्वनिष्ठा विज्ञाप्यते । भगवत्प्रपन्नस्य चैवं विशेष उच्यते—* देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन् । सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्न इति । त्वद्गतिरहं प्रपन्नश्चेत्युभाभ्यामनन्यप्रयोजनतया भगवन्तमाश्रितानां नरकादिनिवृत्तिश्च सूच्यते । श्रूयते हि **रहस्याम्नाये**—*तत्किममी यमविषयं गच्छन्ति

यमो वैतान् यातयतीति न भो इत्याह न खलु भागवता यमविषयं गच्छन्ति किं तर्हि हैवैषां केचिदुपक्लेशा भवन्ति काणा भवन्तीत्यारभ्य * तानुपक्लेशान्सहेरन् इति । **वैष्णवे** च पुराणे * स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानामिति । **वामने** च * देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणम् । न तेषां यमसालोक्यं न च ते नरकौकस इति । **श्रीनारसिंहे** * पुण्डरीकाक्ष देवेश नरसिंह त्रिविक्रम । त्वामहं शरणं प्राप्त इति यस्तं समुद्धरेति । तथाऽन्यत्र * यस्मिन् कस्मिन् कुले जाता यत्र कुत्र निवासिनः । वासुदेवरता नित्यं यमलोकं न यान्ति त इति । **एवं सति**—त्वयि भरस्वीकारार्हे मयि च भरन्यासवाक्यप्रयोक्तरि स्थिते सतीत्याशयः । अहमपीत्यनेन पूर्वोक्तसर्वदोषाकरोऽपि छद्मस्तुतिकर्ताऽपीति सूच्यते । यद्वा यथा प्राचीनाः पूर्णप्रपत्तिनिष्ठाः त्वया भरत्वेन स्वीकृताः तथाऽहमपीति भावः । **तव**—प्रस्तुतप्रभूतभरस्वीकारे प्राप्तस्य समर्थस्य च । न ह्येतादृशं भरं सोढुमहं वाऽन्यो वा त्वदतिरिक्तः कश्चि[illegible] इत्याशयः । हिशब्देन * मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिणः । तेषां वै छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ *स्थिते मनसीत्यादिप्रमाणप्रसिद्धिर्द्योत्यते ; स्वाङ्गीकारस्य सिद्धवत्कारं वा व्यनक्ति । **भरः**—*रक्षितव्यास्त्वया राजन् गर्भभूतास्तपोधना इति महर्षिवाक्यप्रकारेण मद्व्यापारनिरपेक्षं रक्षणीय इति भावः ॥ ६० ॥

**जनित्वाऽहं वंशे महति जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।**
**निसर्गादेव त्वच्चरणकमलैकान्तमनसामधोऽधः पापात्मा शरणद निमज्जामि तमसि ॥ ६१ ॥**

* अहमपि तवैवास्मि हि भर इत्युक्ते महायोगिकुलप्रसूतत्वमपि हेतुरस्तीत्यभिप्रायेणाह—**जनित्वेति** ॥ यद्वा योगिवंशप्रसूतेन त्वया कथमत्यन्ताकिञ्चनत्वं पुरस्कृत्य मय्येव भरन्यासः क्रियत इत्यत्र प्रागुक्तमकिञ्चनत्वमेवासमञ्जवदभिजनविरुद्धस्वभावतयाऽपि स्थापयति ॥ **जनित्वा**—* एतद्धि दुर्लभतरं लोके जन्म यदीदृशमित्युक्तदुर्लभतरं जन्म लब्ध्वाऽपीति भावः । **अहमित्यनेनास्मिन्वंशेऽहमेक** एव विपरीतवृत्त इति व्यज्यते । **वंशे महति**—अमानित्वाद्यात्मगुणसम्यग्वृत्तविद्यादिभूयिष्ठे महाभागवतकुले । * भूतले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहमिति च स्मर्यते । ईदृशवंशजन्मनः कृच्छ्रलभ्यत्वं **वाराहे** प्रोक्तं * वर्णाश्रमाचारपरस्सप्तजन्मानि यो द्विजः । एकान्तसूर्यभक्तस्स्यात्स विप्रस्सप्तजन्मसु ॥ ततस्तत्पुण्यमाहात्म्याद्रुद्रभक्तो भविष्यति । तथैव सप्त जन्मानि शिवभक्तिपरायणः ॥ महता तेन पुण्येन वैष्णवत्वं लभेत सः । विष्णुभक्तिपरस्तद्वत्सप्तजन्मानि मानवः ॥ एकान्तभगवद्याजी विप्रो भागवतान्वये । ततस्स लभते जन्म देवैरत्यन्तदुर्लभमिति । **जगति ख्यातयशसां**—* यद्वंशोऽधीत्य वेदानित्याद्युक्तप्रकारेणानुकूलप्रतिकूलरूपसर्वजनप्रसिद्धकीर्तिनाम् । **शुचीनां**—*योऽर्थे शुचिस्स हि शुचिर्न मृद्वारिशुचिश्शुचिः, *क्षेत्रज्ञस्येश्वरज्ञानात् विशुद्धिः परमा मतेत्यादिप्रसिद्धसर्वप्रकारशुद्धिमताम् । एतेन प्रयोजनान्तरसङ्गरूपाशुद्धिराहित्यं चाभिप्रेतम् । **युक्तानाम्**—आत्मावलोकनक्षमाणाम्, यद्वा त्वया सह नित्ययोगमाशंसमानानाम्, त्वदनुभवविश्लेषरहितानामिति वा । **गुणपुरुषतत्त्वस्थितिविदां**—त्रिगुणात्मकप्रकृतेः पुरुषस्य च तत्त्वस्थितिं याथात्म्यप्रतिष्ठां विजानताम् । यद्वा प्रकृतिपुरुषतत्त्वयोः स्वरूपस्वभावादिव्यवस्थितिवेदिनामित्यर्थः । **निसर्गा**दित्यादि जन्मप्रभृतित्वच्चरणारविन्दनियतभक्तीनामित्यर्थः । ईदृशव्यतिरिक्तो हि निन्दितः पितृभिः * मा जनिष्टेत्यादिना । अत्र युक्तानामित्यादिपदत्रयं स्वपूर्वेषु यथार्हं कर्मयोगज्ञानयोगभक्तियोगान्वयं वा विवक्षति । पापेष्वात्मा बुद्धिर्यस्य स **पापात्मा**; यद्वा पापमेव स्वरूपं स्वभावो यस्य सोऽहं पापात्मेति स्वनिन्दाप्रकर्षार्थे

औपचारिकः प्रयोगः । स्मर्यते हि *मानुष्यं प्राप्य लोकेऽस्मिन् मूको वा बधिरोऽपि वा । नापक्रामति संसारात्स खलु ब्रह्महा भवेदिति । **वाराहे** च *लब्ध्वा तु मानुषं देहं पञ्चभूतसमन्वितम् । मामेव न प्रपद्यन्ते ततो दुःखतरं नु किमिति । **नारसिंहे** च *शुभमिदमुपलभ्य मानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः । रचयति कुरुते न मोक्षमार्गं स दहति चन्दनमाशु भस्महेतोरिति । अधिकारानुरूपमुपायं त्वमेव प्रयच्छेत्यभिप्रायेण संबोधयति—**शरणदे**ति । यद्वा मत्स्वभावादसत्कल्पमपि महायोगिवंशजननं त्वत्स्वभावात्त्वमेव प्रस्तुतविषयमच्छिक्षणव्याजतया स्वीकृत्योपायपूर्तिं कुरुष्वेति भावः । **तमस्यधोऽधो निमज्जामी**त्यन्वयः । तमश्शब्द इह सम्यक्प्रकाशविरुद्धमज्ञानं चाभिसन्धत्ते । तमो गुणमयी प्रकृतिर्वा । तमसस्समुद्रस्थानीयत्वमभिप्रेत्य मज्जनशब्दः । एतेन स्वपरप्रकाशराहित्यं च सूच्यते । मद्वंश्यास्त्वदनुभवरसे निमज्जन्ति, अहं तु तमसि निमज्जामीति निर्वेदविशेषश्च । *महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया । प्राप्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यत इति संसारतरणहेतुतया त्वद्दत्तेन शरीरेणैव संसारे निमज्जामीत्युक्तं भवति । अधोऽध इत्यनेन स्वेनान्यैश्च स्वस्याशक्योद्धरणत्वमभिप्रेतम् । निमज्जामीति वर्तमानव्यपदेशः पापवशात्तादृशस्य तमसोऽद्याप्यनुवृत्तिं द्योतयति । एतेन स्वयमुपायान्तरानर्हस्य मे त्वत्प्राप्त्यर्थं सर्वंसहे त्वयि भरन्यासश्छन्नस्तुतिनिबन्धोऽपि त्वयैव यथावस्थितः कार्य इति विज्ञापितं भवति ॥ ६१ ॥

**अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।**
**नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥** ६२

यदि सर्वशक्तिः परमकारुणिकस्त्वमकिञ्चनस्य प्रपत्तिवाक्यमुखरमुखस्य मम शिक्षणे च न प्रवर्तसे, तदा महत्तरविपरीतगुणगणभराक्रान्तोऽहं कथं संसारजलधिमुत्तीर्य त्वत्पादपरिचर्यां प्राप्नुयामिति प्रागुक्तकार्पण्यस्थेम्ने स्वदोषाद्भीतस्य शरण्यगुणैराश्वसनीयत्वं द्रढयितुं च *पापात्मेति संगृहीतमेव विस्तृणीते—**अमर्याद इति** ॥ *वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिहेत्यादिपूक्तां श्रुतिस्मृतिमर्यादामतिक्रान्तोऽहम् । **क्षुद्रः**—उपायदारिद्र्यहेयपुरुषार्थकार्पण्यादियुक्तः । *क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोरिति निघण्टूक्तेषु नृशंसत्वस्य पृथगुक्तत्वाच्छेषं यथोचितं ग्राह्यम् । *पण्डितैरर्थकार्पण्यात्पण्यस्त्रीभिरिव स्वयम् । आत्मा संस्कृत्यसंस्कृत्य परोपकरणीकृतः ॥ **चलमतिः**—बहुभ्यो बहुशश्च सम्यक्छ्रुतेष्वपि शास्त्रेष्वप्रतिष्ठितबुद्धिः । असदर्थेषु तु *दृढपूर्वश्रुतो मूर्खो धर्माणामविशारदः । वृद्धानपृच्छन्संदेहानन्धः श्वभ्रमिवर्च्छतीत्यादिपूक्तं स्थिरमतित्वमपि हि दोषः । *व्यवस्थितः प्रशान्तात्मा कुपितोऽप्यभयङ्करः । अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्कर इत्याद्यपि ग्राह्यम् । **असूयाप्रसवभूः**—गुणेषु दोषाविष्करणमसूया । तद्वतः प्रकारं *राजन्! सर्षपमात्राणि परच्छिद्राणि पश्यसि । आत्मनो मेरुमात्राणि पश्यन्नपि न पश्यसीत्यादिभिराहुः । तस्याः प्रथमप्रादुर्भावस्थानम् । *असूयकायानृजवे जनाय न मां ब्रूयाः, *असूयकाय मां मा दाः *न च मां योऽभ्यसूयतीत्यादिष्वसूयावान् विद्याप्रदानादिषु परिहरणीय उच्यते । **कृतघ्नः**—त्वदन्यैस्त्वया च परमोपकारकेण कृतमनन्तमुपकारमपह्नुत्यापकारेष्वपि प्रवृत्त इति भावः । स चासौ सर्वेभ्यः पापकृद्भ्यस्समधिकस्स्मर्यते—*गोघ्ने चैव सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ सत्कृताश्च कृतार्थाश्च मित्राणि न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नं नोपभुञ्जत इति । एतस्य कल्मषनिबर्हणार्थप्रायश्चित्तसंभवेऽपि संसर्गानर्हताऽपि स्मर्यते—*शरणागतबालस्त्रीहिंसकान्संवसेन्न तु । चीर्णव्रतानपि सतः कृतघ्नसहितानिमानिति । **दुर्मानी**—निकृष्टमप्यात्मानम्

*ईश्वरोऽहमहं भोगीत्यादिप्रकारेणात्युत्कृष्टं मन्यमानः; तेन ह्युत्कृष्टजनावमानादौ शिशुपालादिवत्प्रवर्तते । यथाऽऽह **शाण्डिल्यः**—* मूर्खाश्च पण्डितंमन्याः अधर्मा धार्मिका इव । धर्मयुक्तान्प्रबाधन्ते साधूनां लिङ्गमास्थिता इति । आह च **विदुरः**—* अतिमानोऽतिवादश्च तथाऽत्याशा नराधिप ! । क्रोधश्चातिविवित्सा च मित्रद्रोहश्च तानि षट् ॥ एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् । एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु त इति ।

**स्मरपरवशः**—धर्मविरुद्धकामोपभोगश्रद्धाविह्वलः । अत एव ह्यस्वतन्त्रस्य स्वातन्त्र्याभिमानोऽपि जडकृत्यम् । *अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् । तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत्, *रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना । हिंसादिरहितः कायः केशवाराधनं त्रयम्, * पररन्ध्रेषु जात्यन्धाः परदारेष्वपुंसकाः । परीवादेषु ये मूकाः तेऽतीव दयिता ममेत्यादिकमत्र भाव्यम् । **वञ्चनपरः**—परद्रव्यापहाराद्यर्थं दम्भवृत्त्या स्वदोषापह्नवेन त्वदितरानिव स्वतस्सर्वज्ञं त्वामपि विप्रलब्धुकामः । ईदृशानां सर्वेषु कृत्येषु बहिष्कारस्स्मर्यते—* पाषण्डिनो विकर्मस्थान्बैडालव्रतिकान् शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्, * धर्मध्वजस्सदा लुब्धश्छाद्मिको लोकडाम्भिकः । बैडालव्रतिको ज्ञेयो हिंस्रस्सर्वातिसन्धकः, * अधोदृष्टिर्नैकृतिकस्स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकव्रतचरो द्विज इति । **नृशंसः**—आसन्नेषु व्याघ्रादिवत् क्रूरकर्मा । *आनृशंस्यं परो धर्म इति त्वदुक्तविपरीतस्वभावः । एवंप्रकारतया मम *पापात्मेति पूर्वोक्तमुपपन्नमित्यभिप्रायेणाह—**पापिष्ठ इति** । यद्वा प्रदर्शनार्थं किञ्चिदुक्तम् । * अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धस्समानि ब्रह्महत्यया, * पिशुनो यश्च विप्राणां रन्ध्रान्वेषणतत्परः । दद्यान्मर्मान्तिकं श्लोकं सोऽक्षयं नरकं व्रजेत्, * दह्यमानास्सुतीव्रेण नीचाः परयशोग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते, * यो राज्ञः प्रतिगृह्यैव शोचितव्ये प्रहृष्यति । स न जानाति मूढात्मा नरकानेकविंशतिम्, * कृष्णाजिनप्रतिग्राही रेतसश्चैव विक्रयी । गजच्छायासु भोक्ता च न भूयः पुरुषो भवेत्, * वादेन ब्राह्मणं जित्वा हृष्टो भवति यो द्विजः । श्मशाने पादपस्स स्याद्गृध्रकङ्कनिषेवितः, *गुरुं त्वङ्कृत्य हुंकृत्य विप्रं निर्जित्य वादतः । अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः, *यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम् । भुङ्क्ते स याति नरकान् सूकरेष्वपि जायते, *पितरं मातरं वाऽपि तथा दत्ताभयं सुतम् । त्यजेच्च तरुणीं भार्यां तं विद्याद्ब्रह्मघातुकम्, * राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु । ब्राह्मणानेव बाधन्ते विष्णुभक्तान्विशेषतः, * विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः । त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः, * परद्रोहेष्वभिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः । अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च शारीरं त्रिविधं स्मृतमित्यादिषूक्तान्यतिघोराण्यनन्तानि मे पापानि सन्तीत्यभिप्रायः । **अहं** प्रागुक्तप्रकारेण त्वत्परिचर्यामिच्छन्निव भावयन् । अथवा उक्तानुक्तदोषसहस्रसंपूर्णतया * दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेत्यादिप्रतिपादितविपरीताकार इति भावः ।

**कथं**—न कथंचिदित्यापाततोऽर्थः । ईदृशोऽपि शरणागतवत्सलं त्वामाश्रितः क्षत्रबन्धुवृत्रादिनयान्न विनश्यतीति गूढोऽभिप्रायः । तथा हि शरण्यस्स्वयमाह—* अपि चेत्सुदुराचार इत्यारभ्य * न मे भक्तः प्रणश्यतीति । **श्रीवैष्णवधर्मशास्त्रे** च—* अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन । मुच्यन्ते पातकैस्सर्वैः पद्मपत्रमिवाम्भसेति । **श्रीपुण्डरीकनारदसंवादे** च * अश्वमेधशतैरिष्ट्वा वाजपेयशतेन च । न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखाः ॥

ये नृशंसा दुरात्मनः पापाचाररतास्तथा । तेऽपि यान्ति परं धाम नरा नारायणाश्रया इति । **श्रीनारसिंहपुराणे** च भगवति च हरावनन्यचेता भृशमलिनोऽपि विराजते मनुष्यः । न हि शशकलुषच्छविः कदाचित्तिमिरपराभवितामुपैति चन्द्र इति । **श्रीसात्त्वते** च * दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा । समाश्रयेदादिदेवं श्रद्धया शरणं यदि ॥ निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मन इति । एवं * मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः । केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति, * सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैश्चितम् । पापराशिं दहत्याशु तूलराशिमिवानल इत्यादि-वचनानि भाव्यानि । एवमभिप्रायानभ्युपगमे शास्त्रविरोधः पूर्वापरविरोधश्च स्यात् । **इतः**—ऊर्मिषट्कबहुलत्वेनातिदुस्सह-तयोपलभ्यमानादित्यर्थः । अत्र दुःखशब्देन विषसंपृक्तमधुन्यायात्सांसारिकं सुखमपि संगृह्यते । दुःखस्य जलधित्वरूपण-मानन्त्यव्यञ्जनार्थम् । दुस्तरत्वाभिप्रायेणापारत्वोक्तिः । **उत्तीर्ण**शब्द इहौपाधिकसमस्ताकारात्यन्तिकनिवृत्तिपरः । अनिष्ट-निवृत्तेरिष्टप्राप्तिपर्यन्तत्वं **तवे**त्यादिनोच्यते । परिशुद्धप्राप्यस्य तव चरणयोरीदृशोऽहं त्वत्कृपामन्तरेण कथं परिचरेय-मित्युक्तं भवति । अत्र परिचरणोक्त्या * येनयेन धाता गच्छति तेनतेन सह गच्छति तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरं छाया वा सत्त्वमनुगच्छेत् तथाप्रकारम्, * एतमानन्दमयमात्मानमुपसंक्रम्य इमाँल्लोकान्कामान्नी कामरूप्यनु-सञ्चरन्, * स तत्र पर्येतीत्यादिमुक्तविषयश्रुत्युक्तास्सर्वे व्यापारास्स्वाम्यभिमतकैङ्कर्यरूपास्सूच्यन्ते ॥ ६२ ॥

**रघुवर ! यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यच्च चैद्यस्य कृष्णः ।**
**प्रतिभवमपराद्धुर्मुग्ध सायुज्यदोऽभूर्वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥** ६३

एवंविधस्यापि स्वस्य यत्किंचिद्व्याजमात्रेण सर्वेषामपराधानां क्षन्तव्यत्वे प्राङ्न्यायमपि दर्शयति—**रघुवरे**ति ॥ यद्वा स्वदोषाद्भीतश्शरण्येन स्वगुणानाविष्कृत्य प्रत्याश्वासितस्स्वदोषाणामपि काकादिदोषन्यायात् क्षन्तव्यत्वे किमाश्चर्य-मित्याह । अत्र संबुद्ध्या शरणागतरक्षणादिधर्मप्रवर्तनाय तदुचितवंशेऽवतीर्णत्वं तादृशेषु शरण्येषु च मुख्यत्वं व्यज्यते । आह च **विभीषणः**—*सर्वलोकशरण्याय राघवाय महात्मन इति । दृष्टं चैतत्स्वविषयवासिजन्तुजातस्य समरलीलासहायी-कृतानां वानराणां च जातिगुणवृत्तादिवैषम्यानादरेण यत्किञ्चिदानुकूल्यमात्रेण संरक्षणे । **त्वं**—* ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम्, * सदेवगन्धर्वमनुष्य-पन्नगाम्, * पिशाचान् दानवान् यक्षान्, *चापमानय सौमित्रे इत्यादिषु प्रसिद्धप्रभावस्त्वम् । न ह्यशक्तः क्षाम्यतीति भावः । **तादृशः**—देवीविषयासह्यापचारकर्तुः । **वायसस्ये**त्यनेन *पुत्रः किल स शक्रस्य वायसः पततां वरः । धरान्तर-चरश्शीघ्रं पवनस्य गतौ सम इत्युक्तं सूच्यते । नात्र जयन्तः कामुकतया समागत इति श्रीरामायणोक्तं, * न चाप्युपा-रमन्मांसाद्भक्षार्थी बलिभोजनः, *भक्षगृध्नेन काकेन दारितं तु स्तनान्तरमित्यादिमात्रवचनात् । अतो वालिवदसाविन्द्र-जन्मा प्रबलः कश्चिद्वायसः । * मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितमिति चोक्तम् । **प्रणत** इति । त्रींल्लोकान्संपरिक्रम्य गत्वा भूमौ निपतितं दयार्द्रबुद्ध्या प्रणतत्वेन परिगृह्येत्यर्थः । यद्वा सकृत्प्रणत इत्येतावन्मात्रेणेति । तदा तु प्रणतशब्दः प्रकृष्टप्रह्वीभावरूपप्रपत्तिपरः, * स तं निपतितं भूमौ शरण्यश्शरणागतमिति वचनात् । उक्तं चाभियुक्तैः—* काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षत इति । * वधार्हमपि काकुत्स्थः कृपया पर्यपालयदित्युक्तमाह—**दयालुरभू**रिति ॥ ननु दक्षिणाक्षिहिंसनेन दण्डयतः कथं दयालुत्वम् ? * राजभिर्धृतदण्डास्त्विति न्यायाद्दण्डोऽपि दयामूल इति चेत्तर्हि प्रणत इति हेतूक्तिर्न घटते । मैवम्; प्राणार्थिनः काकस्य प्राणरक्षणेन प्रपत्तिफलस्य संपूर्णत्वात्, अमोघस्य ब्रह्मास्त्रस्य लक्ष्या

नुबन्धिर्यत्किंचिन्निरसनीयत्वक्लृप्तेरवश्यापेक्षितत्वात्, [illegible]ऽपि सव्यदक्षिणभागसंचारितारकाव्यापारकल्पनेन दृष्टिद्वयफलसिद्धेः । दुष्प्रकृतेः काकस्य भूयोऽपराधभयानुवृत्त्यर्थं [illegible] शिक्षारूपत्वात्, तस्य काक-जात्यनुबन्धत्वक्लृप्तेस्सर्वत्र सर्वेषां [illegible] भावः ।

एवं दयाक्षमयोरुदाहरणान्तरमाह—**यच्चेति** ॥ अत्र कृष्णशब्देन [illegible] *कृषिर्भूवाचक-श्शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं प्रकुर्वीत कृष्ण इत्यभिधीयत इति निरुक्तिश्च सूच्यते । **प्रतिभवमपराद्धुरि**त्यनेन काकादप्याधिक्योक्तिः । जन्मत्रये सर्वदाऽपराधशीलस्येत्यर्थः । *अविज्ञाते[illegible]—**मुग्धेति** । मुग्धो ह्यपराधमनपराधं च विवेक्तुं न शक्नोति । अयं तु विविक्तं पश्यन्नपि *क्षमया पृथिवीसम इत्युक्तगुणविशेषेणापश्यन्निव भवतीति मुग्धत्वोपचारः । तस्मिन्नेव लयमुपययाविति [illegible]—**सायुज्यदोऽभू**रिति । नात्र लयशब्देन जीवप्रध्वंसो विवक्षितः; [illegible] । न चैक्यापत्तिः *परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत इति तत्प्रतिषेधात् । *ब्रह्म वेद ब्रह्मैव भवतीत्यादिकं तु [illegible], *निरञ्जनः परमं साम्यमुपैति, *यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम, *इदं [illegible] मम [illegible] इत्यादिश्रुतिस्मृत्यनुसारात् । सूत्रितं च *भोगमात्रसाम्यलिङ्गाच्चेति । अत-स्सालोक्यसारूप्यादिशब्दवत्सायुज्यशब्दोऽपि युक्साम्यपरः । सर्वं हि भगवता मुक्तेन च भोग्यत्वेन युक्तं *ते सर्वं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाविशन्ति, *सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इत्यादिश्रुतेः, *ब्रह्मवि-दाप्नोति [illegible]शाच्च । अत्र [illegible] परिकल्पितम् *एतासामेव देवतानाँ सायुज्यं सार्ष्टिताँ समानलोकतामाप्नोति इत्यत्र युगपत्क्रमेण वाऽनेकदेवतासायुज्ये तत्तदैक्यापत्तेरघटितत्वात् । *सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवा इति **परमसंहितायामु**क्तम् । **शाण्डिल्यस्मृतौ** च *यादृग्रूपस्तु भगवान् यत्रयत्रावतिष्ठते । मुक्तश्च पञ्चकालज्ञः तादृशस्सह मोदत इति । सायुज्य-शब्देन *शरवत्तन्मयो भवेदित्यादिपूक्तसंयोगविशेषो विवक्षित इति वदन्[illegible] । **आगश्शब्दो-ऽपराधवाची । तस्य ते क्षमायाः किमपदमागः?** न किंचिदस्ति । सर्वदर्शिना त्वया दृष्टमस्ति चेद्वद । त्वयाऽपि द्रष्टुं वक्तुं च न शक्यमिति भावः । दयाक्षमयोरिहाविनाभावात् अन्यतरोक्त्यावितरदन्तर्गतम् । ननु देहपातावधि-निरन्तरापराधस्य शिशुपालस्य केन व्याजेन मुक्तिः प्राप्तेति चेत्; इह तावत्प्रागेव भगवल्लोकविशेषवासिनश्शापाक्रान्तस्य प्रतिकूलजन्मत्रयान्ते मुक्तिर्भविष्यतीति प्रतिविधाननियतिः परमं निदानम् । अत एव ह्युपात्तचक्रे वधोद्यते भगवति शिशुपालस्य प्रद्वेषसंस्कारभूयस्तयाऽपि निरन्तरस्मृतिमतः प्रकाशितपारम्यं भगवद्रूपं पश्यतोऽनुकूलावस्थाप्राप्तिरुच्यते । अपगतद्वेषानुबन्धो भगवन्तमद्राक्षीत्, तावच्च भगवच्चक्रेणाशु व्यापादितः, [illegible] भगवताऽन्त-मुपानीतस्तस्मिन्नेव लयमुपययाविति ॥ ६३ ॥

**ननु प्रपन्नस्सकृदेव नाथ ! तवाहमस्मीति च याचमानः ।**
**तवानुकम्प्यस्स्मरतः प्रतिज्ञां मदेकवर्जं किमिदं व्रतं ते ॥** ६४

एवं [illegible], तथा [illegible] *सकृदेव प्रपन्नायेति श्लोकोक्तं ममापि साधारणमित्याह—**नन्विति** ॥ *सकृत्कृतश्शास्त्रार्थ इति स्वतःप्राप्तस्य विद्यान्तरनयादत्रापवादशङ्कायां

तन्निरासार्थ एवकारः । सकृदेवेत्यस्य सहसैव सर्वागसां निष्कृतिमकृत्वेति कैश्चिद्व्याख्यातम् । आवृत्तिव्यवच्छेदे तु प्रसिद्धिप्रकर्षः प्रयोजनभूयस्त्वं * सकृदेव हि शास्त्रार्थः, * मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यतीत्यादिप्रमाणानुगुण्यं च विद्यते । अत एव * सकृदेव ददामीति व्यवहितान्वयश्चात्र न युक्तः ॥

प्रचयापचयध्वंसप्रत्यूहरहिता प्रभौ । प्रपत्तिः क्लृप्तकाले तु फलतीत्यपि सूच्यते ॥

अत्र नाथशब्देन * लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति, *सर्वलोकशरण्यायेत्यादिकं ख्याप्यते । शरण्यत्वं कैङ्कर्योद्देश्यत्वं च तवैव प्राप्तमिति भावः । **तवाहमस्मीति च याचमानः**—तव दासभूतोऽहमित्येवंविधानुसन्धानपूर्वकं शेषवृत्तिं प्रपत्तिफलत्वेन प्रार्थयमान इत्यर्थः । **अस्मी**त्यस्य स्यामिति वाऽभिप्रेतम् । तदाऽपि तवाहं किङ्करः स्यामिति फलप्रार्थना । अत्र गोप्तृत्ववरणमात्मनिक्षेपश्च यथार्हं पृथङ्निर्दिश्यत इति केचित्; मानसी वाचिकी चेत्येके; प्रयोजनान्तरार्थप्रपत्तिरनन्यप्रयोजनप्रपत्तिश्चेत्यन्ये; प्रपत्तिर्भक्तिश्चेत्यपरे । **तवानुकम्प्य** इत्यादिना लोकरक्षार्थमवतीर्णस्य दक्षिणसागरवेलायां महापरिषदि दुरपह्नवप्रतिज्ञाकर्तृत्वं सूच्यते । **प्रतिज्ञाम्**—* अभयं सर्वभूतेभ्यो ददामीत्येवंरूपाम् । अत्र नित्यसिद्धसर्वसाक्षात्कारस्य भगवतः **स्मरत** इत्युक्तिर्लौकिकबुद्ध्यनुसारादौपचारिकी । **अनुकम्प्यः**—स्वप्रतिज्ञाभङ्गपरिहारार्थं त्वयैवानुकम्पा कर्तव्येति भावः । ननु यदर्थं मया प्रतिज्ञातं तेषु विभीषणादिषु प्रतिज्ञा सफला, किं त्वयेत्यत्राह—**मदेकवर्जं किमिदं व्रतं ते** इति । प्रपन्नाय याचत इति हि सामान्यतस्त्वया प्रतिज्ञातम्; * विभीषणो वा सुग्रीव यदि वा रावणस्स्वयम् । आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मयेति चोक्तम् । न च त्वया तदानीं मद्व्यतिरिक्ताया-भयं ददामीति व्रतमुपात्तम्; अतोऽहमपि त्वद्व्रतविषयभूत इति व्यज्यते । सर्वसाधारणस्वामित्वशरण्यत्वयोगं * रामो द्विर्नाभिभाषत इत्यादिवैधर्म्यात्स्ववाक्यस्य व्यावृत्तिविशेषणात्स्वप्रक्षेपानर्हत्वं च सूचयितुं पुनरपि त इत्युक्तम् ॥ ६४ ॥

**अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम् ।**
**पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥** ६५

ननु काकस्य *स पित्रा च परित्यक्तस्सुरैश्च समहर्षिभिः । त्रींल्लोकान्संपरिक्रम्य तमेव शरणं गतः ॥ स तं निपतितं भूमौ शरण्यश्शरणागतम् । परिद्यूनं विषण्णं च.... इत्युक्तावस्थाविशेषोऽस्ति; चैद्यस्य च प्राचीननियतिर्मातुर्वरविशेषश्च विद्यते; तव पुनस्स्वोक्तानाममर्यादत्वादीनामाकरस्योपायानुष्ठाने फलप्रार्थनायां च छद्मस्तुतिमात्रवादिनोऽनन्यथासिद्धेन केन हेतुना क्षन्तव्यत्वं शिक्षणीयत्वं रक्षणीयत्वं चेत्यत्र * पिता त्वं माता त्वम्, * दयासिन्धो बन्धो, * रघुवर, * ननु प्रपन्न इत्यादिभिश्शरण्यगतास्स्वरक्षणौपयिकगुणविशेषा ये प्रतिपादिताः; ये च * अकिञ्चनोऽनन्यगतिः, * दयनीयस्तव नाथ, * त्वदीयस्त्वद्भृत्य इत्यादिभिस्स्वगतगुणाः प्रदर्शितास्तेभ्यस्सर्वेभ्यस्समधिकं निरङ्कुशस्वातन्त्र्येण सर्वेश्वरेणाप्यनतिलङ्घनीयस्वासाधारणस्वाङ्गीकारहेतुमाह—**अकृत्रिमेति** ॥ क्रियया निर्वृत्तः कृत्रिमस्तदन्योऽकृत्रिमः, भगवत्कटाक्षविशेषाधीनमहावंशसंभवादेतस्मिन् जन्मनि प्रभूतयत्ननिरपेक्ष इत्यर्थः । अकृत्रिमत्वमिह प्रेमविशेषणम् । त्वच्छब्देन प्राप्यत्वप्रापकत्वौपयिकसर्वाकारवैशिष्ट्यं सूच्यते । चरणारविन्दशब्देन तु दासभूतस्य स्वतःप्राप्तसेव्यत्वं पावनतमत्वं निरतिशयभोग्यतमतया परमप्रेमार्हत्वं च प्रकाश्यते । * अनुरागमहिमातिशयान्तसीम्न इति प्रागुक्तमेव विधेयान्तरार्थमनुवदति—**प्रेमप्रकर्षावधिमिति** । लोके च राजादयस्स्वभक्तानुबन्धिनामपि रक्षणं कुर्वन्तीति भावः । **आत्म-**

**वन्तं**—जितमनस्कमित्यर्थः । तेन प्रयोजनान्तरवैमुख्यं व्यञ्जितम् । तदपि प्राप्तविषये प्रेमप्रकर्षहेतुः । तादृशप्रेम्णा सपरिकरभक्तियोगसामर्थ्येऽपि विलम्बाक्षमतया प्रपत्तिनिष्ठत्वं सूच्यते । यद्वा यथावस्थितभगवत्प्रेमजनिततद्ध्यानादिभिर्लब्धात्मेति पदद्वयाभिप्रायः । अयं च स्वभावो **गीतार्थसंग्रहे**ऽपि *ज्ञानी तु परमैकान्तीत्यारभ्य, *भगवद्ध्यानयोगोक्तिवन्दनस्तुतिकीर्तनैः । लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रिय इत्युक्तः । *आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयश्शुचिः । गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवं लक्षणसम्पन्नो गुरुरित्यभिधीयत इत्यादिसूक्तानामाचार्यगुणानां सर्वेषां सार इह संगृहीतः । तस्यैवं गुणवत्त्वे तव किमायातमित्यत्राह—**पितामह**मिति । अत्र विद्यया जन्मना चेति भाव्यम् । एतेन *नास्यावरपुरुषाः क्षीयन्ते नास्याब्रह्मवित्कुले भवतीति श्रुत्यर्थस्सूच्यते । **नाथमुनिं**—श्रीरङ्गनाथ इति त्वन्नामधारिणं त्वदेकमननशीलं चेति भावः । **विलोक्य**—*पशुर्मनुष्यः पक्षी वेत्यादिन्यायादनुबन्धिपर्यन्तमनुग्राह्यत्वेन मत्वेत्यर्थः । *आचार्यस्य प्रसादेन मम सर्वमभीप्सितम् । प्राप्नुयामिति यस्यास्ति विश्वासस्स सुखी भवेदित्युक्ताचार्यप्रसादोऽपि भगवत्प्रसादहेतुरित्यभिप्रायेणाह—**प्रसीदे**ति । अनाद्यनन्तमदपराधजनितकालुष्यं विहाय मामैकान्तिकात्यन्तिककैङ्कर्यसाम्राज्यधन्यं कुरुष्वेत्यभिप्रायः । **मद्वृत्तमचिन्तयित्वा**—मदीयममर्यादत्वादिप्रतिकूलवृत्तमुपायोपेयविषयच्छद्मस्तुतिवचनाद्यनुकूलवृत्ताभासं चातन्त्रीकृत्येत्यर्थः । स्मर्यते हि—*पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत् । आचार्यवत्तया मुक्तौ तस्मादाचार्यवान्भवेदिति । अत्र पूर्वकृतप्रपत्त्यादिकमपराधकोटौ निवेश्य प्रपदनान्तरमुच्यत इति वादोऽप्याचार्यसंबन्धप्राधान्यपरः; अन्यथा सर्वशास्त्राणां, संप्रदायस्य, *त्वदङ्घ्रिमुद्दिश्येत्यादिस्ववचनानां च विरोधस्स्यात् । स्वकृतप्रपत्तेर्वैकल्यमाशङ्क्य पूर्णप्रपत्तिनिष्ठमाचार्यं स्वरक्षणाय पुरस्करोतीति पक्षेऽपि मत्प्रपत्तिर्विकला चेदविकलां कुरुष्वेति तात्पर्यं ग्राह्यम् । अत्र वृत्तशब्देन प्रतिकूलवृत्तमात्रविवक्षायां तु न किञ्चिच्चोद्यम् ॥

तदिह यामुनाचार्यस्त्वत्यन्तरहस्यभूतं द्वयार्थगर्भं स्तोत्रं चिकीर्षुरादौ पञ्चभिश्श्लोकैः कृतज्ञताप्रकाशनपूर्वकं प्रकृतौपयिकसम्यग्ज्ञानप्रदातॄन् प्रणनाम । षष्ठेन प्राप्यप्रापकसंग्रहपूर्वकं स्तोत्रारम्भं समकल्पयत् । सप्तमेन स्तोत्रारम्भाक्षेपमुखेन भगवतः परत्वं समगृह्णात् । अष्टमनवमाभ्यां तत्समाधानमुखेन सौलभ्यं प्राचीकशत् । *नावेक्षस इत्यादिभिर्द्वादशभिर्नारायणशब्दवाच्यस्यैव सर्वस्मात्परत्वं सौलभ्यं च प्रपञ्च्य प्रह्वीबभूव । एवं सर्वशरण्यत्वे निरूपिते *न धर्मनिष्ठोऽस्मीत्यनेन तद्विषयां साधिकारां सपरिकरां चानन्यप्रयोजनशरणागतिं प्रायुङ्क्त । एतावता शब्दतोऽर्थतश्च पूर्वखण्डोऽपि प्रत्यभिज्ञापितः । *न निन्दितमित्यादिभिः पञ्चभिः *अकिञ्चनोऽनन्यगतिश्शरण्येत्युक्तमेव व्यवृणुत । *त्वदङ्घ्रिमुद्दिश्येत्यादिद्वाभ्यां फलगौरवोपायलाघवनिमित्तशङ्काव्युदासाय लघुतरभगवद्धर्मप्रभावमुदाजहार ॥ *विलासेत्यादिभिस्सप्तदशभिश्चतुर्थ्यन्तपदद्वयाभिप्रेतं व्यस्तृणीत ॥ तत्र *प्रहर्षयिष्यामीति सर्वदेशसर्वकालोचितनिरुपाधिकनिरवधिकसर्वविधकैङ्कर्यस्य परमप्रयोजनतया नमश्शब्दतात्पर्यमप्यसूचयत् ॥ *धिगशुचिमिति श्लोकेन स्वनिन्दाव्याजेन स्वापेक्षितपरमपुरुषार्थस्य सर्वातिशायित्वं स्वस्य त्वरां च व्यञ्जयामास ॥ *अपराधेत्यादिभिश्चतुर्भिश्शरण्यगुणविशेषेण प्रपत्त्यैव सर्वविरोधिनिवृत्तिं प्रादर्शयत् ॥ *वपुरादिषु, *मम नाथेति द्वाभ्यां शेषवृत्तेः पुरुषार्थत्वाय स्वस्य नित्यनिरुपाधिकानन्यार्हशेषत्वाध्यवसायमाचष्ट ॥ *अवबोधितवानिमामित्यादिभिश्चतुर्भिरनन्यप्रयोजनस्य स्वस्यात्यामिष्टप्राप्तिमनिष्टनिवृत्तिं च प्रार्थयामास ॥ *दुरन्तस्येति श्लोकेन स्वनिन्दाव्याजेन स्वापेक्षितपुरुषार्थस्य सर्वातिशायित्वं स्वस्य त्वरां च सूचयन् शरणागतस्य प्रपत्तव्यगुणविशेषैरेव प्रार्थितं सर्वं सिध्यतीति प्रागुक्तमेव स्थूणानिखनन्यायेन स्थिरीचकार ॥ *अनिच्छन्निति

श्लोकेनानन्यप्रयोजनस्य रक्षणोद्यतो भगवान् *नेहाभिक्रमनाशोऽस्तीति न्यायात्स्वयमेव शेषं पूरयतीत्यभाषत ॥ तत्र *त्वमेवेत्यादिनाऽभिप्रेतं *पिता त्वमित्यादिना विवृण्वन् परगतैः स्वगतैश्च हेतुभिश्शरण्यस्य स्वाभिमतभरस्वीकारेण स्वस्य निर्भरत्वं निरणैषीत् ॥ *जनित्वाऽहम् *अमर्याद इति द्वाभ्यां स्वस्योपायान्तरेण परमपुरुषार्थप्राप्तिर्न संभवतीति पूर्वोक्तमेव पुनः प्रतिसमाधत्त ॥ *रघुवरेति श्लोकेन शरण्यस्य प्राक्तनानुष्ठानन्यायात्स्वस्मिन्नपि सर्वापराधक्षमा प्राप्तेत्याह ॥ *ननु प्रपन्न इति श्लोकेन शरण्यव्रतविशेषस्वभावादपि तदेव प्रथयामास ॥ अथान्तिमेन स्वपरगतेषु स्वरक्षणहेतुषु भगवत्कटाक्षविशेपजनितसदाचार्यसंबन्ध एव प्रधानतम इतिनिर्धार्य तदधीनभगवत्प्रसादेन निर्भयः प्रहृष्टश्चासीत् ॥

इति किल निगमान्तभागधेयस्तुतिपरिवाहसमीक्षया प्रपत्त्या । अलभत परमं पदं मुरारेरनघमनोरथ एष यामुनेयः ॥

कथिताकथिते विभाव्य सद्भिस्सदसद्वेदिभिरत्र सावधानैः । बलवत्प्रथितप्रमाणदृष्ट्या बहुमन्तव्यमिदं यदस्मदुक्तम् ॥

उपनिषदुपधेयस्तोत्रतात्पर्यमेतद्यतिपतिरवधत्ते यामुनार्यस्स्वयं वा ।
अहमिह तु नियुक्तस्सद्भिराचार्यनिघ्नैरधिगतशुकवृत्तिर्व्याक्रियामन्वभूवम् ॥

स्वकमिति हरिदत्तं यामुनस्तोत्रवृत्त्या व्यवृणुत निगमान्ताचार्यकं वेङ्कटेशः ।
अगणि सदसि सद्भिर्यस्समस्यासहस्री कविकथकमृगेन्द्रस्सर्वतन्त्रस्वतन्त्रः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु रहस्यरक्षायां

**॥ स्तोत्ररत्नभाष्यं समाप्तम् ॥**

## ॥ चतुश्श्लोकीस्तोत्ररत्नयोः अकारादिक्रमेण श्लोकाः ॥

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

श्रीभगवद्रामानुजमुनिभिरनुगृहीतं

## ॥ गद्यत्रयम् ॥

### ॥ शरणागतिगद्यम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याण-गुणगणां पद्मवनालयां भगवतीं श्रियं देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीम् अखिलजगन्मातरम् अस्मन्मातरम् अशरण्यशरण्याम् अनन्यशरणः शरणमहं प्रपद्ये ॥ १ ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्तदेशिकविरचितं

## ॥ गद्यत्रयभाष्यम् ॥

**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

### ॥ रहस्यरक्षायां पृथुगद्याधिकारः ॥

प्रख्यातश्रुतविभवान्गुरूनशेषान्प्रश्रित्य प्रणयति वेङ्कटेशसूरिः ।
लक्ष्मीशप्रपदनवैभवप्रतिष्ठां रागान्ध्यप्रशमकरीं रहस्यरक्षाम् ॥ १ ॥

लक्ष्मीपतेर्यतिपतेश्च दयैकधाम्नोर्योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।
प्राच्यं प्रकाशयतु वः परमं रहस्यं संवाद एष शरणागतिमन्त्रसारः ॥ २ ॥

अत्र भगवान्भाष्यकारः सदाचार्यसंप्रदायागतद्वयवचनेन स्वयमनुष्ठितं न्यासाख्यविद्याविशेषं स्वानुबन्धिसंजिजीव-यिषया यथावत्प्रकाशयन्, *सीतामुवाचातियशा राघवं च महाव्रतम्, *सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीदित्यादि-प्रकारेण श्रीप्रपत्तितदनुग्रहपूर्वकं स्वस्य भगवता संजातं स्वयंप्रयोजनसंवादविशेषं निबध्नाति । प्रतिवचनांशस्तु शरणागति-वशीकृतशरण्याभिप्रायविशेषोन्नयनेन निबध्यत इत्येके । इह *संपत्स्यते इत्यन्तं श्रीमच्छब्दाभिप्रेतप्रदर्शनम् । *अखिले-

त्यादिकम् *अशरण्यशरण्य इत्यन्तं नारायणशब्दार्थविवरणम् । तन्मध्ये श्रीमन्नारायण इति द्विःपठनमुपायोपेयवाक्ययोः सिद्धरूपप्रधानांशव्यञ्जनम् । *अनन्यशरणोऽहमित्युत्तमपुरुषाभिप्रेताधिकारिविशेषोक्तिः । *त्वत्पादारविन्दयुगलम् इत्यादिकमप्यर्थतः स्वरूपतश्च मान्त्रवर्णिकपदत्रयज्ञापकम् । एवं प्रधानतमेन सिद्धोपायेन सिद्धप्राप्येन च सह महावाक्यार्थपर्यवसानभूमितया शाब्दप्राधान्यवान्साध्योपायांशो दर्शितः । साध्यप्राप्यमपि *पारमार्थिक इत्यादिना संक्षिप्तमिति ज्ञापयितुं मध्ये *द्वयम् इति व्याख्येयसमाख्यानिर्देशः । *पितरमित्यादिभिर्जितंताविशेषभगवद्गीतादिपठितैरुक्तसंवादकैरुपबृंहणग्रन्थैः, प्रस्तुतोपायविशेषपरिग्रहं शरण्यस्वभावानुसंधानपूर्वकं प्राप्यविरोधिनिवृत्तिप्रार्थनांशं च प्रपञ्चयिष्यमाणद्वयार्थतया संग्रहेण संकलय्याह । *मनोवाक्कायैः इत्यादिभिरर्थक्रमेण नमःशब्दार्थविवरणपूर्वकं चतुर्थ्यभिप्रेतपरमपुरुषार्थप्रार्थना प्रकाश्यते । प्रतिवचनवाक्यैस्तु, प्रकृताधिकारिनिर्भरत्वाय स्वीकृतभरस्य शरण्यस्य स्वाभाविकदयार्द्रमुत्तरखण्डोक्तपरमफलाङ्कुरकल्पमभिप्रायं व्यवृणुत । अतः कृत्स्नमिदं गद्यं द्वयविचरणमिति साधीयान्संप्रदायः । इह च भगवत्प्रपदने समुद्यतस्य सम्यग्ज्ञानसंपादनपुरुषकारपुरस्कारादिकं पूर्वकृत्यम् । साङ्गस्वरक्षाभरसमर्पणं तत्कालकृत्यम् । स्वनिष्ठानुसन्धानपूर्वकं स्वाधिकारोचितकैंकर्यादिकमुत्तरकृत्यम् । शरण्यस्य तु पूर्वकृत्यं पुरुषकारप्ररोचनादिकम् । तत्कालकृत्यं समर्पितसर्वभरस्वीकरणम् । उत्तरकृत्यं तु स्वयंप्रयोजनभक्त्यादिप्रदानान्तिमदशाप्रबोधनप्रभृति परिपूर्णकैंकर्यरूपमुक्तिप्रदानपर्यन्तम् । एतदखिलमिह शब्दतोऽर्थतश्च यथास्थानमनुसंधेयम् । किंच—

संबोधनैः परं तत्त्वं न्यासोक्त्या परमं हितम् । प्रार्थनाभिश्च परमः पुमर्थ इह दर्शितः ॥

नन्वेवं सकलफलप्रदो भगवानेव तत्प्रपत्तिसिद्ध्यर्थमप्याश्रीयताम्; किमिह लक्ष्मीप्रपदनेन ? मैवम् ; यदि भगवत्प्रपदनमिदानीं शक्यमिति निश्चिनुयात्, तदा मोक्षार्थमेव तदुपाददीत; न पुनस्तदर्थं तत्प्रयुञ्जीत ; अनिश्चिते तु शक्यत्वे नतराम् । ननु विदितश्चेत्प्रपत्तिशास्त्रार्थः, स च सुकरः ; तदा स्वयमेव मोक्षार्थमनुष्ठीयताम् ? मैवम् ; दुष्करकर्माद्यङ्गविरहात्, सौकर्येऽपि महाविश्वासाद्यङ्गकप्रपत्तिस्वरूपे *श्रूयते किल गोविन्दे *सत्यं शतेन विघ्नानामिति न्यायेन संभवत्प्रतिबन्धे मात्रया दौष्कर्यात् । उक्तं च—*उपायः सुकरः सोऽयं दुष्करश्च मतो ममेति । अतः *स्थिते मनसि इत्यादिप्रक्रियया विषयतः स्वरूपतश्च विशिष्टाकारप्रपत्त्यनुष्ठाने प्राप्याभिलाषप्रापकाध्यवसायप्रापकान्तराननन्वयानुवृत्त्यनुगुणमनस्समाधानाद्यर्थमिह तत्प्रार्थनं युक्तम् । एवमपि सुकृतविशेषैरेव लक्ष्मीप्रपत्तिवत् भगवत्प्रपत्तिरप्यस्तु; मैवम् ; तदर्थ एव ह्ययं सुकृतविशेषः । न चात्रापि पूर्ववदशक्यत्वचोदना, स्वतन्त्रबुद्ध्यैव पूर्वं [illegible] । तदभिप्रायेण ह्युक्तं भगवता **शौनकेन**—*वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियमिति । **श्रीसात्त्वते** च—*यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् । निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः इति । सा चैवं स्वयमाह—*प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे । मामेकां देवदेवस्य महिषीं शरणं श्रयेत् इति । न चैवं तदर्थं प्रपत्त्यन्तरापेक्षयाऽनवस्थाप्रसङ्गः, स्वतन्त्रसंकल्पेन व्यवस्थितत्वात्सामग्रीविशेषाणाम् । सामग्रीप्रवाहानवस्था तु सर्वस्मिन्नपि कार्ये सर्वैः सिद्धान्तिभिः स्वीकर्तव्यता स्वीकृता चेति नासौ दोषः ॥

**(भगवदित्यादि ॥)** अतोऽपवर्गार्थभगवत्प्रपत्तिसिद्धये *यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ *विद्यासहायवन्तं मामादित्यस्थं सनातनमित्यादिभिः सर्वविद्याप्रवर्तकतया तत्तद्विद्यात्वेन निर्दिष्टां सम्यग्ज्ञानव्यवसायोपायादिप्रदाने विशेषाधिकारवतीमनुग्रहैकस्वभावां श्रियमादौ प्रपद्यते—**भगवदिति** ॥ अत्र

* अशरण्यशरण्याम् इति वक्ष्यमाणस्योपयुक्ता विशेषा नवभिः पदैः ख्याप्यन्ते । ननु * विष्णुपत्नी विष्णुवल्लभेत्यादिषु भास्करेण प्रभेव पत्याऽसौ निरूप्यताम् । यथोक्तं ताभ्यामेव—*अनन्या हि मया सीता, *अनन्या राघवेणाऽहम् इति । इह तु तया तन्निरूपणे व्याख्येयस्थे किमिति भगवताऽसौ निरूप्यते ? प्रस्तुतोपयोगार्थमिति ब्रूमः । भगवदभिमतानुरूपत्वे हि, तस्यास्तेनेच्छाविघाताभावात् तद्विरुद्धेच्छाविरहाच्च ततोऽसदिष्टं सिध्येत् । 'प्रभया प्रभावत इव व्याख्येयगतं तया तस्य निरूपणमपि श्रीवल्लभादिव्यपदेशेन दर्शयिष्यति । इदं च परस्परनिरूप्यत्वमन्यत्राप्युक्तम्—* तदेतत्सूक्ष्ममिथुनं परस्परविचिह्नितम् । आदावन्योन्यमिश्रत्वादन्योन्यप्रतिपादकमिति । आदावन्योन्यमिश्रत्वात्—* शान्तानन्तेति प्रकारेण नित्यमन्योन्यसंबद्धत्वादित्यर्थः । न च परस्परनिरूप्यत्वेऽन्योन्याश्रयदोषः, प्रभाप्रभावतोरिव प्रमाणतः प्रकारान्तरेणापि तयोर्निरूपणात् । अत्र द्विषट्काष्टाक्षरगताभ्यां भगवन्नारायणशब्दाभ्यां *शुद्धे महाविभूत्याख्ये, *नरसंबन्धिनो नाराः इत्यादिभिर्निरुक्ताभ्यामुभयलिङ्गत्वमुभयविभूतिमत्त्वं च ख्याप्यते । भगवच्छब्दस्य * उत्पत्तिं प्रलयं चैवेत्यादिप्रदर्शितक्रमेण * अन्यत्र ह्युपचारतः इत्यौपचारिकप्रयोगप्राचुर्यमस्ति । नारायणशब्दस्य तु तन्नास्ति । कारणवाक्येषु चानन्यथासिद्धनिःसंदेहविशेषनिर्धारणोपयुक्तश्चायम्, * एको ह वै नारायण आसीत् न ब्रह्मा नेशानः इत्यादिश्रुतेः । * सहस्रशीर्षमित्यनुवाके च तेनैव सर्वपरविद्यावेद्यनिर्धारणम् । अतस्तेनात्र विशेष्यस्य निर्देशः । ततश्च तद्विशेषणतया भगवच्छब्दोऽनादृतरूढिरुभयलिङ्गत्वव्यक्त्यर्थमेव ॥

**(अभिमतेत्यादि ॥)** उक्तप्रकारं भगवतः स्वरूपं निरतिशयानन्दतया मुक्तानां नित्यानामिव च स्वस्याप्यभिमतम्; ततोऽपि स्ववल्लभायास्स्वरूपादिकमित्यभिप्रायेण **अभिमते**त्युक्तम् । श्रूयते हि—*श्रियं लोके देवजुष्टामुदारामिति । निरवधिकक्रीडादिमता' निरुपाधिकदेवेन भगवता प्रीतिविषयीकृतामित्यर्थः । सापेक्षनिरपेक्षयोर्निरपेक्षसंप्रतिपत्तेः, बाधकस्य चाभावात्, औचित्यातिशयात्, तथैव वेदवि[द्या]ख्यातत्वाच्च देवशब्दोऽत्र वासुदेवपरः । देवैर्जुष्टामिति तु मन्दम् । स्मर्यते च—* प्राणेभ्योऽपि गरीयसीमिति, * अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवतीति च । अभिमतत्वेऽप्यननुरूपत्वम्, अनुरूपत्वेऽप्यनभिमतत्वं च लोके दृष्टमिति तद्व्यवच्छेदार्थमुभयोक्तिः ; यथा * चकर्थ यस्या भवनमित्यादि श्लोकयोः । लोके केनचिदाकारेणाभिमतानुरूपत्वम्, आकारान्तरेण तदभावश्च क्वचिद्दृश्यते ; तद्व्युदासाय **स्वरूपरूपा**दिसर्वोक्तिः ॥

तत्र स्वरूपस्य गुणत्वायोगात्, स्वरूपं रूपं गुणः विभवः ऐश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्चेति द्वन्द्वः । अनुरूपत्वमिह संबन्धे सति प्रकृष्टं सादृश्यम् ; यथा—* परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैरिति । रत्नकाञ्चनमुक्ताप्रवालादेरिव स्वसंबन्धेन शोभातिशयहेतुत्वरूपमौचित्यं वा ; यथा—* अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः इति, * तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणेति च । अत्र वयोलक्षणयोस्तुल्यशब्द औचित्यपरः, दम्पत्योर्न्यूनाधिकवयस्कत्वात्, स्त्रीपुंसलक्षणानां च भिन्नप्रकारत्वात्, तत्सहोक्त्या शीलादिष्वपि औचित्यपर एव, तुल्यशब्दोक्तार्थस्य * अर्हतीति समुदायनिर्देशाच्च । यद्वा, अर्हत्वस्य साधकतया तुल्यशब्देन सदृशत्वमुच्यते । वयसः सदृशत्वम् * घनकनकद्युती युवदशामपि मुग्धदशामित्युक्तमासन्नतरत्वम् । लक्षणस्य सदृशत्वं पतिलक्षणवत्सर्वोत्कर्षव्यञ्जकत्वम् ; येन स पुरुषोत्तमः, सा च * सर्वलक्षणसंपन्ना नारीणामुत्तमेत्युच्यते । * सदा तवैवोचितया तव श्रिया, * आहुः स्वैरनुरूपरूपविभवैरित्यादिकमत्रानुसंधेयम् ॥

भगवत्स्वरूपादेरेतत्स्वरूपादीनां यथाक्रममानुरूप्यमूह्यम् । तत्र स्वरूपं स्वासाधारणधर्मनिरूप्यं धर्मि ; तस्यानुरूप्यं * नानयोर्विद्यते परमित्यादिषु ग्राह्यम् । रूपं * हिरण्यवर्णामित्याद्याम्नातम् ; तस्यानुरूपत्वं हि अतिरमणीयत्वनित्यत्वाप्राकृतत्वादिविशिष्टमद्भुततमत्वम् । *नित्यैव इत्युपक्रम्य *विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुमिति च निगमितम् । अत्र रूपादनन्तरो गुणशब्दः सौन्दर्यादिदिव्यविग्रहगुणपरः, * गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो व्यवर्धत इतिवत् । विग्रहगुणानां स्वरूपगुणानां च पृथङ्निर्देशः प्रीत्यतिशयद्योतनार्थः । विभवः * फणिपतिः शय्यासनं वाहनमित्यादिभिरुक्तं विभूतिद्वयम् ; यथोक्तम्—* अस्या मम च शेषं हि विभूतिरुभयात्मिका इति । उक्तं च **श्रीराममिश्रैः**—* उभयाधिष्ठानं चैकं शेषित्वम् इति । एवं द्वयोर्विभवस्यैकत्वेऽपि तदानुरूप्यवचनम् अन्यूनानतिरिक्तविभूतिमत्त्वपरम् । यद्वा, * अर्थो विष्णुरियं वाणी इत्यादिभिर्लौकिकदम्पतिन्यायेन विभज्य निर्दिष्टो विभूत्यंशः । स्वासाधारणविभूषादिकं च विभवः । * निधिः पद्मो निधिः शङ्खश्चतुर्दन्ती गजस्तथा । कल्याणसर्पः पञ्चास्यः [चिक्लीतो] शिक्षितो गृहरक्षकः इत्यादि च पुराणप्रसिद्धमानुरूप्यमिह यथार्हं ग्राह्यम् । ऐश्वर्ये शीले च अन्वितेनादिशब्देन परत्वसौलभ्यौपयिकगुणवर्गद्वयसंग्रहः ; *सर्वैश्वर्यगुणोपेता नित्यं तद्धर्मधर्मिणी इत्यादिभिरेतत्सिद्धिः । अत्र परस्परेच्छाविघाताभावादैश्वर्यमनुरूपम् । शीलं च गुहादिषु रामस्येव, त्रिजटादिषु तस्याः प्रसिद्धम् । एवं पतिपारार्थ्ययुक्ततदितरसर्वशेषित्वान्वितानामन्येषामपि गुणानामानुरूप्यं सुगमम् ॥

**(अनवधिकेत्यादि ॥)** * ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः इत्युक्तेभ्यः सातिशयसंख्यातगुणेभ्यो व्यावृत्त्यर्थमाह—**अनवधिकातिशयासंख्येयेति ॥** अनवधिकत्वमिह स्वापेक्षयोत्कर्षावधिराहित्यम् । ननु भगवत एवैश्वर्यमनवधिकातिशयम्, * तमीश्वराणां परमं महेश्वरम्, * सर्वेश्वरेश्वरः कृष्णः, * न तत्समश्चाभ्यधिकश्च दृश्यते, * न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः इत्यादिभिस्तथोक्तेः । * पुंप्रधानेश्वरेश्वरी इति नाम तु स्त्रीप्रत्ययानुपपत्तेः श्रुत्यादिविरोधाच्चान्यथा नेयम्—पुंप्रधानयोः गोबलीवर्दन्यायेन विशेषत उक्तानां ब्रह्मादीश्वराणां च भगवान् ईश्वरः, तत्पत्नीयम्—इति । * पुंयोगादाख्यायामिति स्त्रीप्रत्ययोपपत्तिः । पुंप्रधाने स्वशक्त्यैव नियच्छति, ईश्वरं च वाल्लभ्येनेति निर्वाहो विरूपः क्लिष्टश्च । * ईश्वरीं सर्वभूतानाम् इत्येतदप्येतेन गतार्थमिति । अत्रोच्यते ; यद्यपि नाम्नि तथा निर्वाहः ; तथाऽपि श्रुतौ न तथा स्यात्, * सर्वभूतानामिति षष्ठ्यन्वयवैघट्यप्रसङ्गात् । स्त्रीप्रत्ययस्तु बाहुलकेन नेयः । * अस्येशाना जगतो विष्णुपत्नी इति च मन्त्रान्तरेणोक्तम् ; तदपि हि तद्विभूतिभूतभूमिविषयत्वात् तत्पर्यवसाय्येव । **श्रीवैकुण्ठगद्ये** च शेषादीनामपि तदाज्ञानुविधायित्वमुक्तम्—* शेषशेषाशनादिसर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या इति । आहुश्च **भगवद्यामुनाचार्याः**—* यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुर्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः इति । **वेदार्थसंग्रहे** चोक्तम्—* स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकमहिममहिषी इति । उक्तं च **श्रीवत्साङ्कमिश्रैः**—* देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते इति । तदात्मजैश्च—* प्रशकनबलेत्यारभ्य * तव भगवतश्चैते साधारणा गुणराशयः इति । न चैतावता भगवतो निःसमाभ्यधिकत्वविरोधः ; प्रत्युत तत्प्रतिष्ठापनमेव, * ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः । न ह्येवंविधपत्नीविशिष्टत्वं कस्यचित्तदन्यस्यास्ति, येन तत्साम्यादिशङ्का स्यात् । उपबृंहितं च—* अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा इति । एवमस्याः शीलादीनामनवधिकातिशयत्वेऽप्यविरोधः ।

यथा प्रभागुणोत्कर्षे भास्करो निःसमाधिकः । श्रीमानपि तथैव स्यात्पतिः पत्नीगुणोन्नतौ ॥
ज्ञानभोगसमानत्वे नित्यमुक्तेश्वरेषु च । यथा वैषम्यनियतिस्तथैवात्रेत्यनाविलम् ॥

शास्त्रेषु बहुधा भगवद्गुणत्वादिरूपेण निर्दिष्टायास्तस्याः कैश्चिन्निर्गुणत्वादिकं शङ्क्यते इति तद्व्युदासाय **कल्याणगुणोक्तिः** । गुणत्वादिनिर्देशास्तु अस्या द्रव्यत्वाद्यविरोधेन अन्यपरा इति तत्र तत्र द्रष्टव्यम् । * ततोऽवलोकिता देवाः, * त्वयाऽवलोकितः सद्यः, * स श्लाघ्यः स गुणी इत्यादिभिरेतदवलोकनात्क्षुद्राणामपि गुणसिद्धौ सर्वकल्याणगुणशालित्वमस्याः कैमुत्यसिद्धम् । कल्याणत्वं मोक्षपर्यवसायितत्त्वज्ञानादिमङ्गलावहत्वं स्वयं नित्यानुकूलत्वं च । * न ते वर्णयितुं शक्ता गुणान् जिह्वाऽपि वेधसः इत्याद्यभिप्रेतसर्वापरिच्छेद्यगुणानन्त्यातिशयसूचनाय गणशब्दः ; ऐश्वर्यादेरनेकावान्तरगुणसमुदायात्मकत्वाद्वा, * प्रकृष्टं विज्ञानमित्यादिन्यायात् ॥

(**पद्मवनेत्यादि** ॥) अथ विभूतितोऽपि मङ्गलनिर्वाहकत्वं प्रदर्शयति—**पद्मवनालयामिति** ॥ एतेन *पद्मे स्थितां पद्मवर्णाम्, * गन्धद्वारामित्याद्याम्नातसौवर्ण्यसौगन्ध्यातिशयोऽपि सूचितः । तच्छरणवरणमन्त्रे चोक्तम्—* तां पद्मनेमीं शरणमहं प्रपद्ये इति । नाभिस्थानीयकर्णिकावस्थानात्, पद्ममस्या नेमिवद्भवति । पद्ममेव नेमिः नयनसाधनं यस्याः सा पद्मनेमीति केचित् । * मातरं पद्ममालिनीम्, *आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्, *श्रीनिलयमालाधारिणी, * प्रियाणि तस्याः पुष्पाणि कमलानि विदुर्बुधाः, * विकासिकमलस्थिता इत्यादिष्वप्यस्या विशेषतः पद्माङ्गीकारश्रुतेः, **श्रीविष्णुस्मृत्यादिषु** विस्तरेणोक्तानां मङ्गल्यविभूतिभेदानामियं विशेषतो देवतेति ज्ञापयितुमिह सुप्रसिद्धमुख्यमङ्गलभूतपद्मवनोदाहरणम् । *यत्र पद्मवनानि चेति भगवतो विशेषसंनिधिस्थाने पद्मवने तद्विग्रह इवासौ विशेषेण संनिधत्ते । एतेन * साऽहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते । भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी इति श्रीवासवसंवादोक्तं सर्वभूतोज्जीवनार्थावतारसौलभ्यमपि प्रदर्शितं भवति । एवं मङ्गलगुणविभूतियोगेन निर्दोषत्वमपि संकलय्याह—**भगवतीमिति** ॥ * ज्ञानशक्तिबलेत्यारभ्य * विना हेयैर्गुणादिभिरिति हि स्मर्यते । अथ उक्तवक्ष्यमाणसर्वातिशयस्थापिकया सुप्रसिद्धस्वासाधारणसमाख्यया सर्वसमाश्रयणीयत्वादिकमाह—**श्रियमिति** ॥ एवं हि श्रीशब्दो निरुच्यते—* शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥ इति, * श्रयन्तीं श्रीयमाणां च शृणन्तीं शृण्वतीमपि । इति च । अस्य च नाम्नः सर्वप्रकारोत्कर्षज्ञापकत्वमाहुः—* श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् इति, * श्रीरसि यतः इति च । भगवन्नारायणपदोक्तस्यानुरूप्यं च * भगवतीम्, * श्रियम् इति पदाभ्यां दर्शितम् । श्रीपदनिरुक्तिभिः संश्रितदोषनिराकरणम्, प्राप्यरुचिप्रापकाध्यवसायादिप्रदानम्, उपायस्वरूपनिर्वर्तकत्वम्, * पितेव त्वत्प्रेयान् इत्युक्तं पतिप्रसादजनकत्वं च सिद्धम् । एवमाश्रितार्थव्यापारास्तदनुगुणावतारादयश्च न कर्मकृता इत्याह—**देवीमिति** ॥ भर्तुर्लीलायामैकरस्यात्तदनुगुणव्यापारोपपत्तिरिति भावः । * भगवतीमित्यादिपदत्रयेण द्विषट्कार्णस्थभगवद्वासुदेवपदार्थानुरूप्यं च ज्ञाप्यते । श्रियं देवीमिति समभिव्याहारेण, * श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्, * श्रीर्देवी पयसस्तस्मादुत्थिता धृतपङ्कजेत्यादिश्रुतिस्मृतयः सूच्यन्ते । * श्रियः श्रीश्च भवेदग्र्येत्युक्तं पतिसंबन्धेन द्योतमानत्वादिकमपि देवीमित्यनेन गम्यते ॥

(**नित्यानपायिनीम्** ॥) एवम् * क्रीडार्थमवतीर्णस्य तस्येत्याद्युक्तलोकानुकम्पाहेतुकावताराया अपि तस्याः * पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः, * मया विना शुष्यति शोकदीनमित्यादिभिरागन्तुकसंश्लेषविश्लेषादिव्यप-

देशात्कथमपराधभीतानां तत्तदवस्थासु तत्पुरस्कारेण भगवदाश्रयणं स्यादित्यत्राह—**नित्यानपायिनीमिति** । *श्रीवत्सवक्षा नित्यश्रीः, *नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी, *अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी, *भगवद्वासुदेवस्य नित्यैवैषाऽनपायिनी, *महाविभूतेः संपूर्णषाड्गुण्यवपुषः प्रभोः । मम सर्वात्मभूतस्य नित्यैवैषाऽनपायिनी ॥ इत्यादिभिरनयोर्न कदाचिदपि विश्लेषः । अवतारेष्वपि कदाचिद्विश्लेषशोकादेरभिनयमात्रमेव; इदं च **श्रीमद्रामायणान्ते** सूचितम्—*रामस्य सव्यपार्श्वे तु पद्मा श्रीः समवस्थिता । दक्षिणे ह्रीर्विशालाक्षी व्यवसायस्तथाऽग्रतः इति । एवं देवीमित्यन्तेन व्याख्येयस्थश्रीशब्दार्थो दर्शितः । तन्मुखेन नित्यं भगवतः सुखप्रसादनीयत्वं व्यञ्जयितुं नित्यानपायिनीमित्यन्तेन तत्रत्यमतुबर्थश्चोक्तो भवति ॥

(**निरवद्याम्** ॥) ननु भगवतीमित्यादिभिः स्वतो निर्दोषत्वादौ नित्यसंबन्धे च सिद्धेऽपि, स्त्रीत्वोपाधिवशात् कदाचित्पतिपारार्थ्यवैमुख्यं, पतिप्रतिकूलाभिप्रायत्वम्, अविमृश्यकारित्वम्, नृशंसत्वम्, निग्रहरुचित्वं च, *शतह्रदानां लोलत्वं मत्स्यानां प्रतिकूलताम् । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ *विद्यते स्त्रीषु चापल्यं किं न कुर्वन्ति योषितः । इत्यादिभिः प्रसिद्धं यदि स्यात्; तदा कथं नित्यमशरण्यशरण्यत्वं स्यादित्यत्राह—**निरवद्यामिति** ॥ सामान्यतः स्त्रीत्वनिबन्धनदोषवचनं क्षेत्रज्ञेष्वेव कर्मोपाधिविशेषनियतं प्रायिकं चेति नास्यास्तत्प्रसङ्गः । उक्तं च तथैव—*अनवद्याऽनवद्याङ्गी नित्यं तद्धर्मधर्मिणी इति । **श्रीमद्रामायणे** च—*इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता इति । किं च, *आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः इति स्मारयन्त्या नृशंसत्वप्रसङ्ग एव नास्ति । निग्रहरुचिश्च समर्थाया एवास्या अत्यन्तापकारिष्वपि न संभवतीति स्ववाक्यसिद्धम्, *असंदेशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसेति । एतद्विभूतिभूतदेवतादिषु कर्मवशादीदृशदोषसंभवेऽपि नास्यास्तन्मूलभूतः संकल्पः । *त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥ *संत्यक्ता ये त्वयाऽमले इत्यादिषूक्तसंत्यागोऽप्युपेक्षामात्रम्, तच्च प्रीतिकोपविरहेणावस्थानम् ॥

(**देवदेवेत्यादि** ॥) नन्वेवं भगवदभिमतत्वादिकं शरण्यत्वौपयिकं सर्वं तत्पत्न्यन्तरेऽपि स्यात्, *विष्टम्भो दिवो धरुणः पृथिव्याः इत्यादिभिस्तन्माहात्म्यप्रसिद्धेः; तारतम्यं तु दुरूहम्; अतः कथम् *अशरण्यशरण्यामनन्यशरणः इत्युच्यते? तत्राह—**देवदेवदिव्यमहिषीमिति** ॥ यथा मनुष्यादिभ्योऽधिकानां ब्रह्मादिदेवतानां मनुष्यस्थानीयानां सर्वप्रकारसमधिकतया भगवान् देवः, तथा ब्रह्मादिदेवपत्नीभ्यः समधिकानां भगवत्पत्नीनामप्यसौ प्रधानतमेत्यभिप्रायेणात्र दिव्यशब्दः । इयं ह्युभयाधिष्ठानैकशेषित्वसाम्राज्येन सर्वमङ्गलप्रदायित्वादिभिश्च प्रकृष्यत इति भगवच्छास्त्रे उक्तम् । तथा **ब्राह्मे** पुराणेऽपि—*अनन्तनामधेया च शक्तिचक्रस्य नायिकेति । पत्न्यादिषु शक्तिशब्दस्तद्विहारादिकार्योपयुक्तविशेषणत्वाभिप्रायः । तदिदं प्राधान्यम्, *कृताभिषेका महिषी इति विशेषणात् महिषीशब्देनैव वा विवक्षितम्; तदा दिव्यशब्दः तद्विग्रहस्य भगवद्विग्रहस्येवाप्राकृतत्वादिकं व्यनक्ति ॥

(**अखिलेत्यादि** ॥) एवं चिकीर्षितभङ्गपरिहाराय प्रत्याख्यानानर्हत्वाय च पतिवाल्लभ्यातिशय उक्तः । अथ तथाविधोत्कर्षस्वनिकर्षस्वापराधदर्शनजनितसाध्वसपरिहाराय प्रजावात्सल्यातिशयमाह—**अखिलजगन्मातरमिति** ॥ जगच्छब्द इह चेतनपरः । *नमामि सर्वलोकानां जननीमब्धिसंभवाम्, *त्वं माता सर्वलोकानाम् इत्यादिभिरस्याश्चतुर्मुखादीन्सर्वान् जन्तून्प्रति मातृत्वात् लोकमातेति नाम पठ्यते । एवमुपबृंहणबलात् *निचदेवीं मातरमित्यादिषूक्तमस्या मातृत्वं भगवतः

पितृत्वेन समानविषयम् । न हि मदेकवर्जमिदमस्या मातृत्वमित्यभिप्रायेण अखिलशब्दः । तदिदं विश्वमातृत्वप्रदर्शितं निरुपाधिकवात्सल्यं रिपूणामपि वत्सलस्य पत्युरनुरूपतमम् । तच्च हितचिन्तारहितेषु अहितचिन्तकेष्वपि कयाचिन्नियत्या कदाचित्फलति ; किं पुनरिदानीं हितचिन्तोन्मुखे मयीति भावः । दुःसहनिरन्तरापराधे दोषैकनिधौ रावणेऽपि हि सोन्मादपुत्र इव जननीत्वेनैव जातवात्सल्या * मित्रमौपयिकं कर्तुम्, * विदितः स हि धर्मज्ञः, * प्रसादयस्व त्वं चैनमित्यादिभिः सर्वाधिकं रहस्यमुपदिश्य, तद्भ्रमप्रशमने प्रयतते स्म । एवमखिलजगन्मातरमित्यन्तैः पदैः श्चिकीर्षितायास्तत्प्रपत्तेरतिशयितामोघधर्मत्वं सूचितम्; यथोक्तं काश्यपीये—* नारायणात्मिकां देवीं श्रियं त्रैलोक्यमातरम्। भजमानो महाभाग परमो धर्म उच्यते ॥ इति । अयं च तदात्मकत्वव्यपदेशस्तत्पत्नीत्वाभिप्रायेण । अत्र *असत्स्वामिन्नितिवत् * असन्मातरमित्यपि **श्रीविष्णुचित्तादयः** पठन्ति ; व्याचक्षते च * यामुनमुनिवंशजननेन पुनश्च विशेषेण अस्मन्मातरमितीति ॥

**(अशरण्यशरण्याम् ॥)** उक्तैः स्वभावैः सिद्धमपेक्षितानुगुणमाकारमाह—**अशरण्यशरण्या**मिति । येषां मोक्षोपायनिष्पत्तिकामानां सर्वलोकशरण्योऽपि न भवेच्छरण्यः, तेषामप्यसौ शरण्या ; यथोक्तं **त्रिजटया**—* भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ * प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा । अलमेषा परित्रातुं राक्षस्यो महतो भयादिति । वानरपरिषदि चैतदनुवदन्वायुसूनुराह—* अलमेषा परित्रातुं राघवाद्राक्षसीगणम् , * ततस्सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ इति । * पापानां वा शुभानां वेत्यादीनि च प्रभञ्जनसुतं प्रति तद्वाक्यानि । कुपितनरसिंहसमीपागतिभीताश्च प्रजापतिप्रभृतयस्तामेव विश्वमातरमाश्रित्य तत्पुरस्कारेण तमुपसेदुरिति पुराणप्रसिद्धम् । आहुश्च—* मातर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधास्त्वया रक्षन्त्येत्यादि ।

**(अनन्येत्यादि ॥)** भवत्वेवमशरण्यशरण्यत्वं तस्याः; भवतस्तेन किमायातमित्यत्र तदेकप्रपत्तियोग्यां स्वावस्थां दर्शयति—**अनन्यशरण** इति । अन्यत् शरणं यस्य नास्ति सोऽनन्यशरणः । शरणमुपायः * उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥ इति [व्यव]स्थापनात् । एवमुत्तरत्रापि द्रष्टव्यम् । उत्तमपुरुषेणैव स्वान्वये सिद्धे अहम् इत्यधिकोक्त्या स्वस्य दुष्करोपायान्तराशक्तिः सूच्यते । प्रपद्य इत्यत्र यद्यपि गत्यर्थेन धातुना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथाऽपि प्रमाणानुसारात् शरणशब्दतात्पर्या[नुसारा]च्च प्रार्थनाद्यन्वितभरन्यासं करोमीत्युक्तं भवति । प्रार्थ्यते चानन्तरं फलविशेषः । यस्तु परस्परोपकारेण दक्षिणादानेन प्रशासनेन वा भरन्यासः, नासौ प्रपत्तिः । नन्विदं मुमुक्षोरेव भगवद्व्यवच्छेदेन तदन्यप्रपदने तदैकान्त्यं विहन्यात् ; मैवम् ; यथा कर्मयोगादिकमनन्योपासनार्थतयोपादीयते, तथाऽनन्यप्रपदनार्थतयोपादीयमानमिदं तद्वदैकान्त्यमेव स्थापयति । यथा स्वाधिकारोचितपरिकरार्चनेऽनन्यत्वाविरोधः, तथेहापि । * आप्तो विष्णोरनाप्तश्च द्विधा परिकरः स्मृतः । नित्यो वन्द्यो न चानित्यः कर्मवश्यो मुमुक्षुभिरिति चोक्तम् । एवं घटकतया वरणेऽपि न विरोधः ; अन्यथा गुरुभजनतत्पुरस्कारादिकमपि विरुध्येत । अथ * तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् * आचार्यमुपासीतेत्यादिभिस्तादर्थ्यात् तत् संगृह्यते ? इदमपि पूर्वोक्तैस्तथैव, अविशेषात् । किंच, श्रियः प्रपत्तिम् * चन्द्रां प्रभासामिति मन्त्रेण अलक्ष्मीनाशनार्थमामनन्ति ; तथा * ऋचः सामानि यजूꣳषि सा हि श्रीरमृता सतामिति । या मुमुक्षूणां मोक्षहेतुर्विद्यैव लक्ष्मीः, तदभावनाशोऽनया

क्रियत इति तदर्थं शरण्याभिप्रायसंवादिनी तन्महिषीप्रपत्तिर्युक्तैवेति सिद्धम् । एवं सेयं साक्षात् परंपरया वा सर्वफलसाधिका । * उदारामिति श्रौतं पदं ह्यनवच्छिन्नविषयम् । तच्च * सर्वकामप्रदां रम्यां संसारार्णवतारिणीम् । क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेदित्यादिस्वायंभुवादिवचनैरुपबृंहितम् । व्याचख्युश्च—* ऐश्वर्यमक्षरगतिं परमं पदं वा इत्यारभ्य * कथय कोऽयमुदारभावः इति । व्यतिरेकमुखेन चैतत्स्थिरीकृतं **चतुःश्लोक्याम्**—*श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् इति ॥ १ ॥

**पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीति - कारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैंकर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्दशरणागतिर्यथावस्थिता अविरताऽस्तु मे ॥ २ ॥ अस्तु ते ॥ ३ ॥ तयैव सर्वं संपत्स्यते ॥ ४ ॥**

तत्किमत्रापेक्षितमित्यत्राह—**पारमार्थिकेति** । पारमार्थिकशब्दस्य चरणारविन्दविशेषणत्वे अर्थशब्दः प्रयोजनवाची । पारमार्थिकं परमार्थ इत्यर्थः । यद्वा, परमप्रयोजनभूतानुभवग्राह्यं परमभोग्यमित्यर्थः । एतेन परभक्त्यादिजननार्हत्वं व्यज्यते । निर्दोषगुणवत्स्वामिचरणयोः सेवकस्य भक्त्यतिशयः स्यादित्यभिप्रायेण भगवच्चरणशब्दः । अरविन्दत्वरूपणं चोषायदशायामपि स्वादुत्वसूचकम् । * स भ्रातुश्चरणौ गाढम्, * यावन्न चरणौ भ्रातुः, * तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितावित्यादिष्विवान्योन्ययोगादपि शोभमानत्वद्योतनाय युगलशब्दः । पारमार्थिकशब्दस्य परभक्त्यादिविशेषणत्वे अनुभवविशेषणत्वेऽपि परमप्रयोजनत्वं भ्रमकैतवराहित्यं वा विवक्षितम् । ऐकान्तिकत्वं प्रयोजनान्तरानन्वयेन तदेकनियतत्वम्; तत एव नित्यानुवृत्तत्वमात्यन्तिकत्वम्, अन्यार्थत्वे हि तत्सिद्धौ निवर्तेत । निरतिशयत्वमात्यन्तिकत्वमिति चाहुः । अत्र परभक्तिः उत्तरोत्तरसाक्षात्कारेच्छात्मिका धीः; सा च * या प्रीतिः इत्यादिष्विव विषयस्वभावजा, न त्विष्टसाधनत्वबुद्धिजा । परज्ञानम् उत्तरोत्तरसाक्षात्कारः । साक्षात्कृते निरन्तरानुबुभूषा परमभक्तिः । अनुभवस्त्विहानुकूलतमत्वेन साक्षात्कार एव । नित्यानां मुक्तानां च नित्यानुवृत्तैकरूपानुभवः क्षणभेदेन परभक्तित्वाद्याकारभेदैश्च विकल्प्यते । पूर्वपूर्वक्षणेभ्य उत्तरोत्तरक्षणावच्छिन्नस्वरूपस्येष्टतमत्वमभिप्रेत्य कृतत्वव्यपदेशः; तस्य मुख्यत्वं तु योगविशेषजन्यानुभवे । नन्विहोपायभूतपरभक्त्यादिभिर्मुक्तदशानुभवस्य कृतत्वं मुख्यमेवास्तु; तथासत्युपरि श्लोकत्रयोदितज्ञानस्य स्थानत्रयोदितपरभक्तेश्च प्रार्थनमुपपद्येत । तदर्थं च यथाभाष्यं संप्रतिपन्नाङ्गप्रपत्तिरिह प्रार्थिता स्यात्? मैवम्; * प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानेत्यादिवक्ष्यमाणसरूपतया तदनुगुणमिह व्याख्यातुमुचितत्वात् ।

न च भगवत्प्रपत्तेः स्वतन्त्रतया मोक्षसाधनत्वं नास्तीति वाच्यम्; श्रुतिस्मृतिभगवच्छास्त्रेषु तत्स्वातन्त्र्यदृष्टेः । * यो ब्रह्माणम् इत्यादिके हि श्वेताश्वतरमन्त्रे हिरण्यगर्भादिकारणभूतपरमपुरुषशरणागतिर्मुमुक्षुणाऽनुष्ठेयेति प्रतीयते । न च क्वचिदङ्गत्वदर्शनात् गुरुलघुविकल्पानुपपत्तेश्चात्र व्यवहितसाधनत्वं कल्प्यम्; अधिकारिभेदेन व्यवस्थापनात् । तथा चोपबृंहितं **ब्राह्मे** पुराणे—* शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदमिति । **अहिर्बुध्न्येन** च सुस्पष्टमुक्तम्—* यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्सांख्येन योगेन

न च भक्तितः ।। प्राप्यते परमं धाम यतो नावर्तते यतिः । तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ।। परमात्मा च तेनैव प्राप्यते पुरुषोत्तमः । इति । प्रपत्तिप्रयोगश्चाविलम्बितफलप्रद एवमुदाहृतः—* अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ।। शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम् । तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्ति तत्क्षणादिति । अत्रापि * त्वमेवोपायभूतो मे भव इत्यादिभिर्न्यासात्मकत्वं सूच्यते । * तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतमिति चाह । न्यासशब्दस्य चात्र शरणागतिविषयत्वं दर्शितम्—* निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपीति । * न्यास इत्याहुर्मनीषिणो ब्रह्माणम् इत्यत्र न्यासशब्दसामानाधिकरण्यं त्वन्यपरम् । एवं स्वतन्त्रप्रपत्तिसिद्धौ * भक्त्या परमया वाऽपि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैंकर्यलिप्सुभिः ।। इति विकल्पोऽपि व्यवस्थितविषय उपपद्यते । श्लोकत्रयोदितज्ञानादिकमप्यत्र स्वयंप्रयोजनतया प्रार्थ्यत इति न विरोधः । न च प्रपत्तिस्वातन्त्र्ये **भाष्य**विरोधः ; तथा हि—* चतुर्विधा भजन्ते मामित्यादिना उपासनस्येव प्रपदनस्यापि *तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् । यावन्न याति शरणं त्वामशेषाघनाशनम् ।। *प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते । सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदेत्यादिभिः सर्वाभिमतसाधनत्वावगतेः, सर्वफलसाधारणमपि तत्र चरमश्लोकविधेयं प्रकृतोपायविरोधिपापनिवर्तनरूपोदाहरणविशेषे प्रदर्शयामास । इह तु साध्यान्तरसाधनान्तररहितमन्त्रविवरणप्रवृत्तत्वात् प्राप्तिविरोधिनिरसनार्थतयोदाहरति । तस्मान्नोपायभक्त्यादिकमिहोच्यत इति सिद्धम् । परभक्त्यादिभिः साध्यमनुभवादिकं तदभावेऽपि मे प्रपत्तिमात्रेण भवत्विति विवक्षायां प्रस्तुतविरोधाभावेऽपि, वक्ष्यमाणानुसारेण विवक्षान्तरं दर्शितम् ।

आर्तोपच्छन्दनं गद्यं भाष्यं तु पररञ्जनम् । इत्याविलधियोऽप्येवं प्रसीदेयुः प्रमाणतः ।।

पुनश्च मुक्तानुभवं **परिपूर्णे**त्यादिभिः षड्भिर्विशिनष्टि । अत्र हि मुमुक्षूणां भगवदनुभवविशेषेषु यथासंभवं सुकृततारतम्येन परिमिताकारगोचरत्वम्, खद्योतस्फुरणवत्सान्तरत्वम्, कंचित्कालं निरन्तरत्वेऽपि सारस्वतस्रोतोन्यायेन विच्छिन्नप्रवाहत्वम्, सामान्यतः सर्वविषयत्वेऽपि परोक्षरूपत्वम्, स्वयंप्रियत्वेऽपि मधुरभेषजनयेन मुक्तिरूपस्वप्रयोजनसाधनत्वबुद्ध्या उपादेयत्वम्, अत एव सावधिकरसत्वं च स्यात् ; निःशेषनिवृत्तप्रतिबन्धस्य तु न तथेति भावः । अत्र प्रीतिहेतुत्वाभिधानेऽपि तदर्थबुद्ध्या उपादेयत्वाभावादनन्यप्रयोजनत्वमविरुद्धम् । तत्र हेतुरनवधिकातिशयप्रियत्वम् । * भगवदनुभवेत्यनेन मुक्तौ पाषाणकल्पत्वपक्षः, स्वात्ममात्रानुभवनिर्गुणप्राप्त्यादिवादश्च व्युदस्यते ; सर्वविशिष्टब्रह्मानुभवे प्रधानानुभाव्यं च व्यञ्जितम् ।।

अत्रानुभवजनितप्रीतिर्नाम * निरतिशयानुकूलोऽयं विषयो मयाऽनुभूयते इति स्वयमपि निरतिशयानुकूल्यवती कृतार्थताबुद्धिः, * कृतार्थोऽस्मीत्यमन्यत इतिवत् ; सा च सामग्र्यनुवृत्त्या प्रतिक्षणभाविनी प्रवाहविच्छेदरहिता चेत्येके । अन्ये तु—प्रीतेः स्वरूपतोऽनुवृत्तत्वेऽपि पूर्ववदनुभवस्यैव प्रयोज्यप्रयोजकाकारविभागेन जन्यजनकवाचोयुक्तिः—इति । अस्याश्च प्रीतेरनवधिकातिशयत्वं प्रीत्यन्तरापेक्षया निकृष्टत्वविरहात् ; ईश्वरस्य नित्यानामपि हि न मुक्तेभ्योऽतिशयिता प्रीतिः, *श्रोत्रियस्य चाकामहतस्य *भोगमात्रसाम्यलिङ्गाच्चेति समानभोगव्यवस्थापनात्, ईश्वरनित्यमुक्तभोगानामुपचयापचयतारतम्यवादयोरपन्यायमूलत्वाच्च । कैंकर्यस्य भगवदिच्छाकारितत्वेऽपि, * प्रहर्षयिष्यामि इति तत्प्रीत्युद्देशेन प्रवृत्तत्वेऽपि, * प्रीतिकारितेत्यादिना * यथार्हं केशवे वृत्तिमिति न्यायात् प्रीतेः प्रेरकत्वातिशयेन स्वरसप्रवृत्तिः, नियोगनैरपेक्ष्यं

च द्योत्यते । एवं प्रीत्या प्रवृत्तस्यापि कैंकर्यविशेषेषु स्वाम्यभिमतिविशेषास्त्वनुरोधनीयाः । तादृशमेव च कैंकर्यम् *एतत्साम गायन्नास्ते *जक्षत्क्रीडन् रममाणः *स यदि पितृलोककामो भवतीत्यादिष्वप्युक्तम् । अशेषावस्थाशब्देन परव्यूहादयः स्थानासनशयनादयो जगत्सृष्ट्यादयश्च भगवतोऽवस्थाः, स्वस्य च सशरीरत्वाशरीरत्वानेकशरीरत्वरूपा गृह्यन्ते । कैंकर्यस्य तत्तदवस्थोचितत्वम्, यथालोकं यथागमं च चामरग्रहणादिना भोक्तृतया भोग्यतया च संनिधाय कृतत्वात् । अशेषशेषता आत्मनः आत्मीयस्य च सर्वस्य परशेषभावः । यद्वा, सर्वप्रकारशेषवृत्तिः । अनन्तगरुडादि-प्रतिनियताधिकारकृत्येषु मुक्तस्येच्छाविरहात्, इष्यमाणेष्वपि सर्वेषु *एकधा भवति *तावन्ति चक्रे रूपाणि भगवान् देवकीसुतः इति प्रकारेण शेषशेषिणोर्यथाभिमतरूपपरिग्रहेण मुक्तस्य स्वाभिमतसर्वशेषवृत्तिः स्यादेव; तस्याम् एक-शब्देन स्वप्रयोजनप्राधान्यव्युदासः । अथ वा, नित्यानां मुक्तानां च भगवत्प्रीतिफलासु सर्वासु शेषवृत्तिषु परकृतासु स्व-कृतासु च प्रीत्यविशेषो विवक्षितः, *नित्याभिवाञ्छितपरस्परनीचभावैः *याभिस्त्वं स्तनबाहुदृष्टिभिरिवेत्यादिन्यायाच्च । एकरूपा वा रतिः एकरतिः, कालभेदेन संकोचाद्यभावात् । रतिरिह प्रीतिरिच्छा वा; तया हेतुभूतया कैंकर्यं निरूप्यत इत्यभिप्रायेण रूपशब्दः । *शेषतैकरतिरित्येतत् **श्रीवैकुण्ठगद्ये** *परिचर्यैकमनोरथः इत्यनेन विवृतम् । अत्रानुभव-रतिकैङ्कर्यशब्देषु ज्ञानचिकीर्षाप्रयत्नक्रमश्च प्रकाशितः । यद्वा, शेषतैकरतिरेव कैङ्कर्यस्य प्रधानं स्वरूपम्; तत्परिवाहतया तु व्यापारान्तराणि भवन्तीत्यभिप्रायः । प्राकृतप्रलयादिष्वप्यविच्छिन्नप्रवाहतया अत्रत्यकैङ्कर्याद्व्यावृत्त्यर्थं नित्यत्वोक्तिः; *प्रलये न व्यथन्ति चेति हि गीतम् । स्वामिसमादेशापेक्षी तच्चोदितकारी किंकरः, तस्य वृत्तिः कैङ्कर्यम्; तस्यान्यै-र्दुष्प्रापत्वेनालभ्यलाभत्वसूचनार्थम्, इतः पूर्वं प्राप्तेरभावात् अप्राप्तप्राप्तिपक्षव्युदासेनापेक्षार्हत्वज्ञापनार्थं चाधिकः प्राप्ति-शब्दः । *संपद्याविर्भावः इत्यादिकं हि नित्यसिद्धेष्वेवाकारेषु मुख्यम्, न तु साध्ये निरङ्कुशविकासे तत्पूर्वक-व्यापारे च । तत्र तु निवृत्तप्रतिबन्धस्वरूपोपाधिकत्वसूचनार्थम् *आविः स्युर्मम सहजकैङ्कर्यविधयः इत्यभियुक्तैरुक्तम् ।

आत्माभिमानानुगुणपुरुषार्थव्यवस्थया । भगवत्पारतन्त्र्यादि प्रबुद्धस्य सुखायते ॥
परेच्छायत्तभूम्नोऽपि स्वेच्छाया अविघाततः । सर्वं परवशं दुःखमित्याद्यं नात्र बाधकम् ॥
स्वतः शेषत्वकैङ्कर्ये न कुत्राप्यसुखावहे । कर्मजत्वात्तथात्वस्य लोके च व्यभिचारतः ॥
महानन्दमहिम्ना च प्राग्दुःखावेक्षणादपि । मोहदुःखे तदा स्यातामिति मूढस्य जल्पितम् ॥
सुखस्य मोहनत्वं च तामसत्वाद्युपाधिभिः । सुखाय च भवेत्क्वापि पूर्वदुःखावमर्शनम् ॥

एवमिह *अपेक्षयेत्यन्तं व्याख्येये सोपबृंहणचतुर्थ्यभिप्रेतस्य प्रपञ्चनम् । भगवत एव शरणत्वे वक्तव्येऽपि, दिव्यविग्रहस्य शरण्यगुणादिव्यञ्जकत्वम्, चरणग्रहणस्य कृपोत्तम्भकत्वातिशयेनानतिक्रमणहेतुत्वं चाभिप्रेत्य चरणशब्दः । अरविन्दशब्द उपायदशायामपि भोग्यत्वं सूचयति । अत्र भगवच्छब्दो निरपेक्षरक्षणौपयिकाकारपौष्कल्यप्रदर्शकः । कृत्स्नविदपि **भाष्यकारः** प्रश्रयप्रकाशनाय *पारमार्थिकी *यथावस्थितेति सामान्यतो निर्दिशति, *त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे, *यद्धितं मम देवेश तदाज्ञापय माधव इतिवत् । एतेन भगवत्प्रपत्तेर्मोक्ष-साधनत्वमित्येतावन्मया निर्णीतम्; सा यत्स्वरूपा, यत्प्रकारेति च न जाने; अतस्त्वयैव वत्सलतया मोक्षार्थभगवत्प्रपत्तेः स्वरूपादिकं यथाप्रमाणं ज्ञापयित्वा अनुष्ठापनीयोऽहमिति विशेषनिष्कर्षरहितानामपि विज्ञापनप्रकारः शिक्षितो भवति । एवं सामान्यत उक्तेऽपि सर्वज्ञा सर्वहितैषिणी देवी स्वयमेव सर्वं विधास्यतीति तात्पर्यम् । *देवानां गुह्यम् इत्याद्युक्तं गोपनीयतमत्वम्, तत एव तत्रतत्र तदनुगुणनिर्देशैः प्रपत्तिस्वरूपादेर्दुरवगाहत्वं च सामान्यनिर्देशेन द्योत्यते । ननु

सर्वलोकसर्वागमप्रसिद्धायाः प्रपत्तेः कथं दुरवगाहत्वम्? इत्थम्—केचित् भक्तिप्रपत्त्योर्व्यतिकरितप्रयोगादैक्यमिच्छन्ति। लक्षणभेदात् भेदमिच्छन्तोऽपि केचित्स्वातन्त्र्येण मुक्तिसाधनत्वं नानुमन्यन्ते। अन्ये तु स्वातान्त्र्याभ्युपगमेऽपि *षड्विधा शरणागतिः इति वचनानुरोधात् आग्नेयादिषट्कवत् संभूय साधकत्वमाहुः। तत्रैव षण्णां प्रत्येकं साधनत्वमपरे। तेष्वेव यथेष्टं केचित्कतिपयोपेक्षया कतिपयपरिग्राहिणः। नियतैकसंग्रहेऽपि स्वरूपन्यासमात्रत्वम्, प्रार्थनाभरन्यासयोरन्यतरमात्रत्वम्, तयोरेव यथेष्टमङ्गाङ्गित्वम्, विकल्पं वा, केचिदाहुः। इतरे च प्रपत्तेरविधेयज्ञानरूपत्वम्, अनिवारणादिरूपत्वम्, दक्षिणाज्ञादिहेतुकभरन्यासाविशिष्टत्वम्, अनङ्गत्वम्, द्वित्राद्यङ्गत्वम्, सर्वधर्मस्वरूपत्यागाद्यङ्गकत्वम्, भक्तियोगवत् आप्रयाणादनुवर्तनीयत्वम्, भक्तियोगाद्यङ्गकत्वम्, आरब्धकार्यपुण्यपापनिवर्तनाक्षमत्वम्, किं बहुना—गृहागमनाञ्जलिप्रणामादिमात्रतां च, प्रतिपादयन्ति। एवं विप्रतिपत्तियोग्यतया दुष्करः प्रपत्तेर्निष्कर्षः; स तर्हि कथं स्यात्? उच्यते; तत्र तावत् भक्त्यैक्यादिपक्षा**निक्षेपरक्षादिषु** निराकार्ष्म। षाड्विध्योक्तिरपि *न्यासः पञ्चाङ्गसंयुतः इति वचनबलात् अष्टाङ्गयोगोक्तिवत् अङ्गाङ्गिसमुच्चयेन स्थापिता। अत एव हि *षडङ्गं तमुपायं चेत्यादिकमपि संगच्छते। स्वरूपन्यासस्यात्रापेक्षितत्वेऽपि *आत्मात्मीयभरन्यासः, *त्वयि निहितभरोऽसि सोऽहं यतः, *तव भरोऽहमकारिषि धार्मिकैः इत्यादिप्रमाणसंप्रदायैर्भरन्यासप्राधान्यं सिद्धम्। यदप्युक्तं **भरतमुनिना**—*अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः॥ इति; यदपि च **अहिर्बुध्न्येन**—*प्रार्थनामतिः शरणागतिः इति; तत्रापि पूर्वोक्तप्रमाणानुसारात्, अनन्यसाध्यत्वतदेकोपायत्वोक्तितात्पर्याच्च, प्रार्थनापूर्वकभरन्यासात्मकत्वसिद्धिरित्येषा दिक्। अतो दुरवगाहत्वद्योतनाय *पारमार्थिकी इत्यादिसामान्यनिर्देश उपपन्न इति॥

एवमीदृशभरन्यासात्मकतया शरण्यत्वोपयुक्ताकारविशिष्टपरतत्त्वविषयतया च निरूप्यायामस्यां प्रपत्तौ स्वरूपतो विषयतश्च तमःकार्यवैपरीत्यविरहः पारमार्थिकत्वम्। प्रकारतोऽङ्गतश्च रजःकार्यप्रकारान्यथाभावराहित्यं यथाप्रमाणं फलसङ्गकर्तृत्वादित्यागश्चात्र यथावस्थितत्वम्। राजसतामसबुद्धिप्रकारश्च *यया धर्ममधर्मं च, *अधर्मं धर्ममिति या इति श्लोकाभ्यां गीतः। एतेन अनाप्तागमसिद्धत्वम्, नित्यागमसिद्धत्वेऽपि पुरुषबुद्ध्या अन्यथाकल्पितत्वं च निरस्तं भवति॥

एवं तु व्याख्यातं **व्यासार्यैः**—*पारमार्थिकीति तमःकार्यव्युदासः। आनुकूल्यादिशरीरवती च सा। तद्धि तस्या उपायान्तरेभ्यो व्यावृत्तं स्वरूपम्। यथावस्थितेति रजःकार्यव्युदासः। प्रपत्तव्यविषयसंबन्धरूपः प्रकारः, तत्साहित्यमभिप्रेतम्। शरणवरणानर्हे शरण्यत्वधीर्ह्ययथावस्थिता स्यादिति। **अविरता**—आमोक्षदानादविश्रान्तव्यापारेत्यर्थः। व्यापारश्चात्र शरण्यप्रसादविशेष एव। *सकृदेव हि शास्त्रार्थः, *सकृदेव प्रपन्नाय, *ननु प्रपन्नः सकृदेव नाथेत्यादिबलादङ्गतः स्वरूपतो वा अनुवृत्तिरिह न विवक्षिता। व्याख्येये *प्रपद्ये इति वर्तमाननिर्देशस्त्वनुष्ठानकालाभिप्रायः। व्यापारानुवृत्तिकथनात्तु भाष्योदाहृतभक्त्यङ्गप्रपत्तिव्यवच्छेदः; सा हि मध्ये साधनरूपं साध्यान्तरमुत्पाद्य विरतव्यापारा भवति; तदेव तु मुक्तिं साधयति। *अस्त्वित्याशासनेन भगवत्प्रपत्तेः स्वरूपतोऽपि स्वादुतमत्वं सूच्यते। **मे**—अकिंचनतमस्यानन्यशरणस्य॥ २॥

एवं विज्ञापिताया विष्णुपत्न्याः प्रतिवचनं निबध्नाति—**अस्तु ते इति**॥ रावणेऽपि *तेन मैत्री भवतु ते इति वादिन्याः शरणागतविषये कैमुत्यसिद्धमिदं वरप्रदानवाक्यमित्युत्प्रेक्ष्य प्रोक्तम्। **ते**—मयि न्यस्तभरस्य मया स्वीकृतभरस्य च।

उपायदानमेतस्यास्तदिदं पतिसंमतम्। यथा तस्याः प्रसीदन्त्या हारदानं हनूमते॥ ३॥

भगवत्प्रपत्तेः पूर्वोक्तनित्यकैङ्कर्यप्राप्तिपर्यन्तफलाविनाभावमाह—**तथैव सर्वं संपत्स्यते इति** ॥ एवकारेण अत्रोपायान्तरव्यवधाननैरपेक्ष्यं द्योत्यते । यद्वा, *अस्तु ते इत्येतावतैव पर्याप्ते *तथैवेत्यादिकं विभीषणशरणागतराक्षसन्यायेन यथाभिमतानुबन्धिरक्षणाभिप्रायम् । अथवा, श्लोकत्रयोदितज्ञानित्वादिकमत्र परत्र च यत्प्रार्थयिष्यते, तत्सर्वमिह सर्वशब्दार्थः; उक्तेन सह वक्ष्यमाणमनुक्तं चानुबन्धिरक्षणमभिमतत्वाविशेषात्संकलय्य प्रोच्यते । *संपत्स्यते इति भविष्यन्निर्देशः प्रपत्त्यनन्तरक्षणप्रभृति तत्तदुचितकालाभिप्रायः । वदान्यत्वव्यञ्जकं चेदं वाक्यद्वयम्; प्रियवाग्दानशीलो हि वदान्यः ॥४॥

**अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपस्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूप, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसंकल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णव, स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषण, स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदासिशार्ङ्गाद्यसंख्येयनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध, स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ, एवंभूतभूमिनीलानायक, स्वच्छन्दानुवर्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तकल्याणगुणगणशेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल, परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वाभिमतविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्यनिरतिशयवैकुण्ठनाथ, स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुषकालात्मकविविधविचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखिलजगदुदयविभवलयलील, सत्यकाम, सत्यसंकल्प, परब्रह्मभूत, पुरुषोत्तम, महाविभूते, श्रीमन्, नारायण, वैकुण्ठनाथ, अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकजलधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, अशेषचराचरभूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषिभूत निखिलजगदाधार, अखिलजगत्स्वामिन्, अस्मत्स्वामिन्, सत्यकाम, सत्यसंकल्प, सकलेतरविलक्षण, अर्थिकल्पक, आपत्सख, श्रीमन्, नारायण, अशरण्यशरण्य, अनन्यशरणः त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये ॥ ५ ॥**

एवं श्रीमच्छब्दाभिप्रेतमर्थमुपयोगविशेषपर्यन्तमुदाहृत्य, प्राप्यत्वप्रापकत्वोपयुक्तसर्वाकारसंग्राहकनारायणशब्दं व्याचिख्यासुः, तत्र तत्पुरुषव्युत्पत्तौ अयनशब्दार्थम्, बहुव्रीहौ अन्यपदार्थं च दिव्यात्मस्वरूपं तावदाह—**अखिलेति** ॥ अत्र संबुद्ध्यन्तप्रयोगाद्व्याख्येयेऽपि तथात्वेन त्वच्छब्दाध्याहार इति केचित् । *श्रीमन्नारायण स्वामिन्नित्यादौ मन्त्रा

न्तरे च तत् द्रष्टव्यम् । अन्ये तु, प्रार्थनानुगुणतात्पर्यानुसारेण संबुद्धिरिह प्रयुज्यत इत्याहुः । अखिलहेयप्रत्यनीकत्वम् अखिलहेयात्यन्ताभाववत्त्वम्; तेन कतिपयहेयरहितेभ्यो व्यवच्छेदः । कल्याणैकतानत्वं कल्याणानां सर्वेषां गुणानां साधारणाश्रयभूतविस्तारत्वम् । नित्यादीनामपि न सर्वमङ्गलगुणवत्त्वम् । *समस्तहेयरहितं विष्णवाख्यं परमं पदम्, *तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः *स च सर्वगुणोपेतः इत्यादिप्रसिद्धः उभयलिङ्गाधिकरणार्थ उपयोगातिशयात्प्रथममिहोक्तः । *नराज्जातानि तत्त्वानीत्याद्युक्तकारणत्वादिशङ्कितमचिद्गतं चिद्गतं च विकारापुरुषार्थादिकं प्रणतोपेक्षादिपर्यन्तमवद्यं न किंचिदप्यस्यास्ति; न च कल्याणगुणेष्वस्य अविद्यमानः कश्चिदित्यर्थः । पश्चात्तु ज्ञानबलादिगुणोक्तिरेतद्विवरणम् । स्वरूपनिरूपकं ज्ञानत्वादिकमप्यत्र कल्याणशब्देन सामान्यतः संगृहीतम् । एवं सगुणनिर्गुणश्रुत्योर्विषयभेदेन अविरोधात् कुदृष्टिपक्षश्च निरस्तः । यद्वा, कल्याणैकतानं प्रदेशभेदेन कालभेदेनाप्यकल्याणत्वरहितमित्यर्थः । *ज्ञानानन्दैकस्वरूप इति तु तद्विशदीकरणम्; ज्ञानतया आनन्दतया च कार्त्स्न्येन कल्याणत्वमुक्तं भवति । जडात् भोग्यात् प्रतिकूलोदासीनरूपज्ञानाभ्यां च व्यवच्छेदाय ज्ञानानन्दयोरुभयोरप्युक्तिः । आनन्दकल्याणशब्दौ स्वपरापेक्षया आनुकूल्यं ब्रूतः । एवम् *आनन्दादयः प्रधानस्य *अक्षरधियां त्ववरोधः इत्यधिकरणद्वयोक्तं स्वरूपनिरूपकवर्गद्वयं व्यञ्जितं भवति । अथ वा, हेयप्रत्यनीकत्वम् आश्रितानां यथोपायं स्वेच्छया हेयनिवर्तकत्वम्; तथा सति लोके स्वसंकल्पायत्तहेयसद्भावस्य न विरोधः । न च विरुद्धघटनशक्तिकल्पना, स्वरूपमात्रेण हेयनिवर्तकत्वस्यानङ्गीकारात्, अन्यथाऽतिप्रसङ्गात् । कल्याणैकतानत्वम्, आश्रितानामभिमतेषु कल्याणेष्वैकाग्र्यम्, अनिष्टनिवर्तनमिष्टप्रापणं चेत्यर्थः । स्वस्य निर्दोषमङ्गलगुणाकरत्वमप्यत्रार्थसिद्धम्; *फलमत उपपत्तेरित्यधिकरणार्थश्च दर्शितः ॥

**(स्वेतरेत्यादि ॥)** त्रिविधानां चेतनानामचेतनानां च पराधीनत्वादिसाम्यादेवंभूतं वस्त्वन्तरं नास्तीत्यभिप्रायेणाह—**स्वेतरसमस्तवस्तुविलक्षणेति** ॥ एतेन ज्ञानभोगसाम्येऽपि सर्वप्रकारसाम्यनिषेधः सिद्धः । *नित्यं विभुं सर्वगतं सुसूक्ष्मम् *विश्वमेवेदं पुरुषः इत्यादिप्रसिद्धं त्रिविधपरिच्छेदराहित्यं प्राधान्यतः पृथगाह—**अनन्तेति** ॥ सर्वव्यापित्वात् देशपरिच्छेदराहित्यम्; सर्वकालवर्तित्वात् कालपरिच्छेदाभावः; साक्षात्परंपरया वा सर्वप्रकारित्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वाद्वस्तुपरिच्छेदविरहः; येन केनापि प्राशस्त्येन स्वस्मादुत्कृष्टैः कैश्चिद्वस्तुभिरधरीकृतत्वाभावाद्वा । तद्विग्रहादीनां तु सन्तोऽपि केचिदतिशयास्तद्विभूतिगता एवेति तैरपि तस्यैवोत्कर्षः । वितस्त्यादिभिः प्रस्थतुलादिभिश्च परिच्छेदो देशपरिच्छेदान्तर्गत एवेति तन्निषेधेन सोऽपि निषिद्धः । वस्त्वन्तरशून्यत्वाद्वा सर्ववस्तुस्वरूपैक्याद्वा वस्तुपरिच्छेदाभाव इति पक्षौ तु सर्वप्रमाणविरुद्धौ, अनन्तपदपूर्वापरश्रुतिविरुद्धौ च ॥

**(स्वाभिमतेत्यादि ॥)** यद्यपि दिव्यात्मस्वरूपापेक्षया सर्वेषामाधेयत्वं समानम्; यद्यपि च विग्रहस्य गुणनियाम्यतया गुणानामन्तरङ्गत्वम्; तथाऽपि स्वरूपवद्भूषणास्त्रस्वरूपनिखिलजगदाधारत्वेन तदनुरूपत्वात्, तादृशस्वरूपव्यञ्जकत्वात्, सालम्बनयोगविषयत्वेन मुमुक्षूणां शुभाश्रयत्वाच्च प्राधान्यं दर्शयितुं गुणेभ्योऽपि पूर्वं विग्रहमाह—**स्वाभिमतानुरूपेति** ॥ निरवधिकानन्दरूपस्य स्वस्याप्यभिमतमनुरूपं च दिव्यरूपम् । स्वरूपस्य नित्यनिरवधिकानुकूलत्वमन्याभिमतिं न बाधते, सर्वस्य सर्वदा विशिष्टैकानुभवगोचरत्वेन प्रमाणसिद्धत्वात् । सा चाभिरूपस्य आभरणाभिमतिवत् न स्वरूपानुकूल्यबाधिका; एवं भूषणादावप्यभिमतत्वाविरोधः । अनिष्टावहशरीरादिव्यावर्तकैरप्राकृतत्वध्येयत्वप्राप्यत्वादिभिरपि विग्रहादेरानुरूप्यम् । सर्वदा उक्तप्रकारविशिष्टत्वमेकरूपत्वम् । नानारूपेष्वपि व्यूहविभावार्चावतारेष्वप्राकृतशुभाश्रयत्वादिकम्

*समस्ताः शक्तयश्चैताः, *समस्तशक्तिरूपाणि, *बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते । अर्चाऽपि लौकिकी या सा भगवद्भावितात्मनाम् । मन्त्रमन्त्रेश्वरन्यासात्साऽपि षाड्गुण्यविग्रहा इत्यादिभिरुच्यते । परव्यूहादिविग्रहवत् तत्तद्विग्रहानुप्रवेशात् अर्चाऽपि षाड्गुण्यप्रकाशकशुद्धसत्त्वद्रव्यमयीत्यर्थः । देवतिर्यङ्मनुष्यादिविचित्रावतारदशायामपि *आदित्यवर्णं तमसः परस्तात् इत्यादिप्रसिद्धस्य परमपदनिलयविग्रहस्य संनिवेशैकरूप्यं वा विवक्षितम् । चिन्त्यत्वेन चोदितस्याप्यचिन्त्यत्वोक्तिः इतरसजातीयतया चिन्तयितुमशक्यतामाह ; तेन अनित्यत्वादिसाधकसावयवत्वाद्यनुमानानां धर्मिग्राहकमानबाधोऽभिप्रेतः । **दिव्य**शब्दौ द्रव्यतः संनिवेशादिभिश्च वैलक्षण्यपरौ, अप्राकृतस्थानवर्तित्वाप्राकृतत्वपरौ वा, *रूपं विशिष्टं दिवि संस्थितं च, *न भूतसंघसंस्थानो देहोऽस्य परमात्मनः । *न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा इत्यादिभिस्तथोक्तेः । **अद्भुतत्वम्** *तस्य ह वा एतस्य पुरुषस्य रूप यथा माहारजनं वासः, *सर्वाश्चर्यमयं देवम्, *तेनाश्चर्यपरेणाहम्, *अपूर्वरूपसंस्थानमित्यादिप्रसिद्धनिरतिशयवैचित्र्यवत्त्वम् । नित्यत्वमपि *नित्यालिङ्गा स्वभावसंसिद्धिः, *नित्यं नित्याकृतिधरमित्यादिभिरुक्तम् । तेन शुभाश्रयपरविग्रहस्य कल्पितत्वकृतकत्वादिपक्षाः प्रतिक्षिप्ताः । अवतारविग्रहाणामपि सत्यानामेव तत्रैव विभागाविभागावुपदिष्टौ ; तेषां प्रत्येकमपि नित्येच्छाधीनतां केचिदाहुः । **निरवद्यत्वं** क्षेत्रज्ञशरीरवत् कर्ममूलत्वदुःखावहत्वादेरभावात् । दिव्यात्मस्वरूपे प्रक्रान्तयोगपुरुषापेक्षयोक्तमनालम्बनत्वरूपमप्यवद्यं दिव्यविग्रहे नास्ति, तस्य यथाश्रुतं यथादर्शनं च सुखानुसंधेयत्वात् । इह खल्वीश्वरापेक्षया न किंचिदपि प्रतिकूलम्, सर्वस्य तदनुकूलतयैव प्रमाणसिद्धत्वात् । तस्य तु परप्रतिकूलसर्वाश्रयस्यापि स्वप्रतिकूललेशरहिततया समस्तहेयरहितत्वोक्तिः । एवं मुक्तनित्यापेक्षयाऽपि न कस्यचित्प्रातिकूल्यम्, तेषामीश्वरेण समानभोगत्वात् । अचेतनापेक्षया तु प्रतिकूलानुकूले कदाचिदपि न स्तः । [अत एव] तस्य हेयमुपादेयं च नास्ति । तस्य सावद्यत्वोक्तिस्तु चेतनविशेषप्रतिकूलस्वभावयोगितया तदपेक्षा । क्षेत्रज्ञानां तु स्वप्रतिकूलदुःखतत्कारणसंबन्धात्सावद्यत्वम् । ईश्वरबुद्धिविशेषरूपस्य क्षेत्रज्ञकर्मसाध्यनिग्रहस्यापि कर्मवश्यगोचरतया तद्दोषत्वमेव; ईश्वरस्य त्वसौ प्रशासनरूपतया गुण एव । एवं स्थिते दिव्यविग्रहस्य निरवद्यत्वोक्तिरीश्वरापेक्षया तदाश्रितापेक्षया च शरीरत्वादिशङ्कितप्रतिकूलस्वभावराहित्यपरा । निरतिशयत्वम् औज्ज्वल्यादिषु सर्वेष्वन्वीयते ; तच्च तदपेक्षयोत्कृष्टाभावात्, अनुत्तमत्ववत् । **औज्ज्वल्यम्** *आदित्यवर्णम्, *दिवि सूर्यसहस्रस्येत्यादिषूक्तं भास्वरतमत्वम् । **सौन्दर्यम्** अवयवशोभा; येन *साक्षान्मन्मथमन्मथः इत्युच्यते । *सर्वगन्धः इति श्रुतिरनुकूलगन्धविषया । स्रक्चन्दनादि चात्र कृतकरमित्यभिप्रायेण **सौगन्ध्य**शब्दः । **सौकुमार्यं** महाबलत्वेऽपि *पुष्पहासः इति नाम दुहानं मार्दवम् ; यथोक्तम्—*सुकुमारौ महाबलौ इति । **लावण्यं** समुदायशोभा; *भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥ इत्याहुः ॥

**यौवन**मिह न कालकृतावस्था ; किंतु तादृशो विग्रहस्वभावः, तद्यौवनस्य नित्यत्वात् । अन्येषामपि हि यौवने कौमारानन्तरभावित्वमुपलक्षणमात्रमेव, युवतयैव केषांचिदुत्पत्तिश्रवणात् । आदिशब्देन शुभाश्रयादिप्रकरणोक्तसर्वगुणसंग्रहः । तत एवानन्त्यम् । **निधि**शब्द इहाश्रयपरो निरतिशयभोग्यत्वव्यञ्जकश्च ॥

**(स्वाभाविकेत्यादि ॥)** एवमुपकारकतमत्वाद्यभिप्रायेण गुणेभ्यः पूर्वं विग्रह उक्तः । अथेदृशविग्रहाभिव्यङ्ग्यप्रकृष्टगुणभूयिष्ठतामाह—**स्वाभाविके**ति ॥ अत्र सर्वगुणकन्दभूतैराश्रितानाश्रितगोचरव्यापारभेदसाधारणैर्ज्ञानादिभिः परत्वम्, आश्रितरक्षणैकान्तैः सौशील्यादिभिः सौलभ्यं च व्यज्यते । स्वाभाविकशब्देन नित्यत्वमनन्याधीनत्वं चात्र विव-

क्षितम्; ताभ्यां मुक्तनित्यज्ञानादिभ्यो व्यवच्छेदः। तद्बलादिभ्यो व्यवच्छेदस्तु अनवधिकातिशयत्वादपि। अनवधिकातिशयशब्दः पूर्ववत्। *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च इत्याम्नातं स्वाभाविकत्वं परत्वं च सर्वेषु गुणेषु योज्यमिति भावः। संकर्षणादिव्यूहत्रयाभिव्यक्तिक्रमेण ज्ञानादिगुणद्वन्द्वत्रिकोक्तिः। प्रत्येकं च गुणद्वन्द्वेषु पौर्वापर्यहेतुर्भगवच्छास्त्रोक्तः; यथा—* बलं वीर्यं तथा तेज इत्येतत्तु गुणत्रयम्। श्रमाद्यवद्याभावाख्यं ज्ञानादेरुपसर्जनमिति। ज्ञानमिह सर्वसाक्षात्काररूपम्, *यः सर्वज्ञः सर्ववित् *सर्वदर्शी स्वाधीनोऽनादिः सर्वेश्वरः सर्वदृगित्यादिभ्यः। उक्तं च **नाथमुनिभिः**—*यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः इति। **बलं** नाम श्रमप्रसङ्गरहितं सर्वधारणसामर्थ्यम्; *एष सेतुर्विधरणः, *यत्र विश्वं भवत्येकनीलम्, *तत्सवितुर्वरेण्यम्, *ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम, *यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। *परमात्मा च सर्वेषामाधारः परमेश्वरः इत्यादिसिद्धम्। **ऐश्वर्यम्** *एष सर्वेश्वरः, *सर्वेश्वरेश्वरः कृष्णः इत्यादिषूक्तम् अव्याहतेच्छं सर्वनियन्तृत्वम्; *अजः सर्वेश्वरः इति च तन्नामपाठः। **वीर्यं** सर्वोपादानत्वे सर्वधारणे सर्वनियमनेऽपि विकाररहितत्वम्; यथोक्तम्—*विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा इत्यादि। **शक्तिः** स्वेतरसर्वनिर्वाहिका *जगत्प्रकृतिभावो मे यः सा शक्तिरितीर्यते इत्यादिषूक्ता सर्वोपादानत्वात्मिका। यद्वा, यत् अन्यैरशक्यत्वादघटितमिव भाति, तद्घटनसामर्थ्यरूपा। **तेजः** अस्वाधीनसहकार्यनपेक्षत्वम्; तदुक्तम्—*तेजस्त्वन्यानपेक्षता इति, *सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या। तेजः षष्ठगुणं प्राहुस्तमिमं तत्त्ववेदिनः इति च। *न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः *ज्योतींष्यादित्यवद्राजन् कुरून्प्रच्छादयन् श्रियेत्यादिनिदर्शितं पराभिभवनसामर्थ्यं तेजः केचित्प्रचक्षते। लोके कश्चित् स्वापाद्यवस्थायां स्वविभूतिं न जानाति, जानन्नपि न धारयति; ज्ञात्वा धारयन्नपि न सर्वथा नियन्तुं शक्नोति; शक्तोऽपि धारणनियमनाभ्यां ग्लानो भवति; अग्लानोऽपि न तत्सत्तास्थितिहेतुः स्यात्; तद्धेतुश्च पराधीनसहकारिसापेक्षः स्यात्; नैवमसाविति गुणक्रमोक्तितात्पर्यम्।

अथ *तवानन्तगुणस्यापि षडेव प्रथमे गुणाः। यैस्त्वयेव जगत् कुक्षावन्येऽप्यन्तर्निवेशिताः, *प्रकृष्टं विज्ञानमित्याद्युक्तषाड्गुण्यविततिरूपा आश्रितसंग्रहणरक्षणयोर्विशेषत उपयुक्ता गुणा उच्यन्ते। तत्र **सौशील्यं** शोभनशीलत्वम्; तच्च अतिमहीयसोऽप्यतिहीनेषु गुहगोपालादिष्वपि साध्वसप्रशमनानन्यप्रयोजननीरन्ध्रसंश्लेषस्वभावत्वम्—*गुहेन सहितो रामः, *अहं वो बान्धवो जातः इत्यादि। **वात्सल्यम्** *शरणागतवत्सलः इत्याद्यभिप्रेता स्वरक्षणीयतयाऽभिमतेषु दोषतिरस्कारिणी प्रीतिः। दोषाणां गुणत्वेन दर्शनमिति त्वतिवादः। क्षमाकाष्ठाभूतवात्सल्यकथनेन क्षमाऽप्युक्ता भवति; *अपिचेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ *अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन। मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसेति चाह। **मार्दवम्** *तं विना कैकयीपुत्रमित्यादिवादिन आश्रितविरहाक्षमतया सुप्रवेशत्वम्, सापराधेषु शासनोन्मुखस्यापि सामप्रधानत्वं वा; यदाह—*सामोपहितया वाचा रूक्षाणि परिवर्जयन् इति। **आर्जवम्** *ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे इत्यादिषूक्तं मनोवाक्कायव्यापाराणां मिथःसंवादित्वम्; तेन संश्रितेषु विप्रलिप्सानुदयः। **सौहार्दम्** *सुहृदं सर्वभूतानाम्, *उरसा प्रतिजग्राह पार्थं संछाद्य माधवः इत्यादिप्रसिद्धं सामान्यतो विशेषतश्च हितैषित्वम्; तच्च विषयभेदात्क्वचित् *एष एवासाधु कर्म कारयति तमित्याद्युक्ताधोनिनीषया न विरुध्यते। **साम्यं** जातिगुणवृत्तादिनिम्नोन्नतत्वानादरेण सर्वैराश्रयणीयत्वम्; यथा—*शबर्या पूजितः सम्यक्, *धन्योऽहमर्चयिष्यामीत्याह माल्योपजीवनः इत्यादि। अत एव *समोऽहं सर्वभूतेष्वित्याह। एतेन

स्वतोऽपक्षपातित्वम्, आश्रितेषु यथार्हमादरसंभावनाक्रमवैषम्यरहितत्वं च सिध्यति; यथाकर्म फलदायिन ईश्वरस्य आश्रयणीयत्वादिकं समत्वाविरोधी। **कारुण्यम्** अनुद्दिष्टस्वप्रयोजनान्तरा परदुःखनिराकरणेच्छा। परदुःख-दुःखित्वादिकं तु न लक्षणम्, अव्याप्तेरतिव्याप्तेश्च। सर्वप्रशासितुः सापराधनिग्रहस्यापि शास्त्रसिद्धत्वात् तदविरोधेन कारुण्यं नियन्तव्यम्, लोकेऽपि तथैव व्युत्पत्तेः। **माधुर्यं** क्षीरवदुपायभावेऽपि स्वादुत्वम्; तच्च * माधुर्यं परमित्यादि-सूक्तम्। द्वेषवतां जिघांसिनामपि दृष्टिचित्तापहारित्वेन रसावहत्वं वा; येन शिशुपालस्य तादृशी चरमदशा, अनन्य-मनसाम् * मच्चित्ता मद्गतप्राणाः इत्याद्युक्तावस्था च। वधोद्योगप्रदर्शनेऽपि हि सौम्यत्वम् * एह्येहि फुल्लाम्बुजपत्रनेत्रे-त्यादिषु प्रसिद्धम्। **गाम्भीर्यं** भक्तानुग्रहवदान्यत्वादेरानुकूल्यतो दुरवगाहत्वम्; आश्रितापराधेषु प्रतिग्रहीतृनिकर्षादिषु च सतोऽपि स्वज्ञानस्य गोपनेन दुर्ज्ञानत्वं वा। तदभिप्रायेण हि सर्वज्ञस्याप्यविज्ञातृत्वोक्तिः। **औदार्यं** पात्रलाघवं देय-गौरवं चानादृत्य दायविभागन्यायेन प्रत्युपकारादिनिरपेक्षं वितरणरसिकत्वम्, प्रभूतं दत्वाऽप्यतृप्तत्वं च। अत एव ह्यर्थिनः सर्वान्स्वयमुदारानाह। **चातुर्यम्** रक्षणीयेषु * जनयन्प्रत्ययं तदेत्यादिप्रसिद्धमतिशङ्काशमनदोषगोपनादिरूप-मजडक्रियत्वम्; येन विरोधिनामपि दृष्टिषु विरुद्धानप्यनुकूलयति, शुभाश्रयस्वाकारप्रदर्शनाद्ययत्नोपायैर्विषयवैराग्यादिकं च जनयति। **स्थैर्यं** शरणागतसंग्रहे दोषप्रदर्शकैरन्तरङ्गैरप्यकम्पनीयत्वम्; तथा चाह—* मित्रभावेन संप्राप्तं न त्यजेयं कथंचनेत्यादि। **धैर्यम्** *अप्यहं जीवितं जह्यामित्यादिषूक्तमत्यन्ताभिमतवियोगप्रसङ्गेऽप्यभिन्नप्रतिज्ञत्वम्। भीष्माद्याश्रित-प्रतिज्ञारक्षणाय स्वप्रतिज्ञाभङ्गेऽप्येतादृशप्रतिज्ञासिद्धिः; अत एव * द्यौः पतेत्पृथिवी शीर्येत् हिमवान् शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेदित्यादिभिरविरोधः। व्यत्ययेन वा स्थैर्यधैर्ये व्याख्यातव्ये। अतर्कितोप-नतेऽपि बलवति प्रतिपक्षे सावज्ञदृढचित्तत्वं वा धैर्यम्; यथाऽऽहुः-* कपोले जानक्याः इत्यादि। जीवत्यपि महाबले रावणे सागरेऽप्यलङ्घिते विभीषणाभिषेचनेन दर्शितोऽयं गुणः। **शौर्यम्** असहायस्यापि भीमे परबले स्वबल इव निर्भय-प्रवेशसामर्थ्यम्, यथा—जनस्थानयुद्धमूलबलनिबर्हणादिषु। **पराक्रमः** प्रविष्टस्य परसैन्ये * छिन्नं भिन्नं शरैर्दग्धमित्या-द्युक्तो व्यापारः। * अभियाता प्रहर्ता च इत्याद्युक्ताविमौ द्वौ गुणौ आश्रितविरोधिनिरसनार्थौ, धैर्यादयस्त्रयो वा॥

अथेष्टप्रापणार्थौ गुणावाह—**सत्यकामसत्यसंकल्पेति** ॥ इह एतौ [शब्दौ] भावप्रधानौ कर्मधारयवृत्तौ वा। काम्यन्त इति कामाः, स्वेन स्वाश्रितैश्च भोग्या विभूतयः; ते च सत्याः नित्या इत्यर्थः। अमिथ्याभूतकामत्वम् अप्रति-हतेच्छत्वं च नैरर्थक्यपुनरुक्तिभ्यां नात्र विवक्षितम्। सत्यसङ्कल्पत्वं स्वावताराद्यपूर्वभाग्यान्तरसृष्टौ जगद्व्यापारमोक्ष-प्रदानादिषु चामोघसङ्कल्पत्वम्; तेन तत्सङ्कल्पादभिमतलाभे निःसंशयत्वं स्यात्॥

उक्तगुणवर्गादधिकोपकारकं गुणद्वयमाह—**कृतित्वकृतज्ञतेति** ॥ कृतमिह उपकारः, कृतज्ञादिशब्दे तथा दृष्टेः; तद्वत्त्वं कृतित्वम्, उपकर्तृत्वमित्यर्थः। यद्वा, * अभिषिच्य च लङ्कायामित्याद्युक्ताश्रितकार्यपूरणेन कृतकृत्यत्वम्, कर्तव्यशेषरहितेषु कृतिशब्दप्रयोगात्। * न मे पार्थास्ति कर्तव्यमित्युक्तं विहितानुष्ठाननैरपेक्ष्यं परार्थकर्मानुष्ठानत्वं वा विवक्षितम्; तेनापि परोपकारार्थमेव प्रवृत्तत्वमुक्तं भवति; श्रूयते च—* न कर्मणा वर्धते नो कनीयानिति; तथा च श्रुत्यन्तरम्—* स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानिति। अथवा *आदिकर्मणि क्तः; कृतं कर्त-व्यत्वेनोपक्रान्तम् आश्रितानां यद्धितम्, तत्सर्वं पूर्वमेवानेन प्रयोजककर्त्रा प्रारब्धमित्यर्थः। स्वेन कृतं परोपकारं प्रत्यपि स्वस्यैव शेषित्वं वा कृतित्वम्। **कृतज्ञता** परैः कृतस्यानुकूल्यलवस्य पश्चात्तैरनन्तापकारकरणेऽपि स्वयं चानन्तप्रत्युपकार-

करणेऽपि अकृतप्रत्युपकारवत् तदनुबन्धिपर्यन्तसंरक्षणाय तस्यैवानुदर्शनम् ; यथोक्तम्—* न स्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेण कृतेनैकेन तुष्यति ॥ इति * गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् । * त्वदङ्घ्रिमुद्दिश्येत्यादि च । एतेन संश्रितानां पश्चाद्दोषसंभवेऽपि हितैषिणः शिक्षणमात्रप्रवृत्तत्वं सिध्यति । अथवा, अर्थिषु नियमान्तरानुसारेण स्वकृतं तादात्विकप्रत्याख्यानमकृत्यवज्जानातीति कृतज्ञः ; यदूचे—* शिरसा याचतस्तस्य वचनं न कृतं मयेति । इदं च प्राप्तावसरे भरतस्यैवापेक्षापूरणाय स्यात् ॥

**आदि**शब्देन * आनृशंस्यमनुक्रोशः इत्यादिप्रसिद्धसर्वगुणसंग्रहः । **असंख्येय**शब्दः * यथा रत्नानि जलधेरसंख्येयानि पुत्रक । तथा गुणा ह्यनन्तस्याप्यसंख्येया महात्मनः इत्यादिवचनस्मारकः । आश्रितविरोधिनिरसनार्थतया क्रोधादेरपि **कल्याण**शब्देन संग्रहः । * चतुर्मुखायुर्यदि कोटिवक्त्रः, *वर्षायुतैर्यस्य गुणा न शक्याः इत्यादिप्रसिद्धापरिच्छेद्यगुणानन्त्यं तापत्रयप्रशमनत्वं दुरवगाहत्वं च व्यनक्ति—**गुणगणौघमहार्णवे**ति ॥ एकैकगुणस्यावान्तरानेकगुणगर्भत्वं गणशब्देन व्यज्यते । गुणगणा एव ओघाः जलप्रवाहाः, तेषां महार्णव इवायमेकाश्रयभूत इति भावः ॥

अथ स्वरूपस्य विग्रहवत् गुणवच्च विग्रहस्य शोभातिशयहेतुभूतानि भूषणान्युच्यन्ते—**स्वोचितेति** ॥ उक्तस्वरूपरूपगुणवतः स्वस्यानुरूपत्वं स्वोचितत्वम् । किरीटत्वादिभेदस्य तत्तत्स्वरूपोपादानसिद्धत्वात्, आश्चर्यत्वस्य पृथगुक्तेश्च अत्र विविधविचित्रशब्दौ हेमरत्नमुक्तादिमयत्वेन तत्तदवान्तरशिल्पविशेषैश्च प्रत्येकं वैषम्यं ब्रूतः । **अनन्त**शब्दश्चाश्चर्यविशेषकः । असंख्येयत्वविवक्षाया**मपरिमित**शब्दः पृथुतरत्वपरः । नित्यनिरवद्यत्वाभ्यां प्राकृतभूषणव्यावृत्तिः ; * स्रग्वस्त्राभरणैर्युक्तमिति हि नित्यं रूपं प्रतिपाद्यते । सर्वदा निरवद्यत्वेन वा कादाचित्कावद्यशङ्काव्युदासः । सर्वगन्धस्यापि दिव्यरूपस्यामोदातिशयहेतुतया निरतिशयसुगन्धत्वम् । अनभिमतकाठिन्याद्यभावात् निरतिशयसुखस्पर्शत्वम् । सूर्यादितेजोभिभावुकदिव्यविग्रहतेजसाऽप्यनभिभूतत्वात् निरतिशयौज्ज्वल्यत्वम् । कर्णिकामकुटव्यावृत्त्या सर्वाधिपत्यसूचनार्थं किरीटशब्देन मकुटविशेषणम् ; धारकपुरुषभेदेन हि मकुटद्वैविध्यं शिल्पशास्त्रादिप्रसिद्धम् । यद्वा, * नाकुण्डली नामकुटी इति प्रयोगात् शिरोभूषणमात्रे मकुटशब्दः । अथ वा, किरीटस्योर्ध्वभागो मकुटशब्देनोच्यते । मकरसंनिवेशं कुण्डलं **मकरकुण्डलम्** । अविभक्तलक्षणरूपस्यापि श्रीवत्सस्य भूषणसमानतया भूषणत्वोक्तिः । तादृशपृथक्संस्थानयोगाच्च, भूषणदेवताध्याने तदभिव्यक्तिः । **मुक्तादामानि** एकावलीत्रिसरादीनि । पीताम्बरस्य भूषणतयोक्तिः शोभातिशयहेतुत्वमहार्घत्वाद्यभिप्राया ; यथा—* अतसीपुष्पसंकाशः पीतवासा जनार्दनः । व्यभ्राजत सभामध्ये हेम्नीवोपचितो मणिरिति । **आदि**शब्देन च हस्तबन्धाङ्गुलीयकादिसंग्रहः । उक्तगुणोत्कर्षहेतुभूतद्रव्यवैलक्षण्यज्ञापनाय भूषणायुधयो**र्दिव्य**शब्दः ॥

एवमाश्रितानामनुभवार्थानि भूषणान्युक्त्वा तदनुभवतद्रक्षणयोरुपयुक्तानि दिव्यायुधान्याह—**स्वानुरूपेति** ॥ पूर्वोक्तविग्रहादिविशिष्टापेक्षया स्वशब्दः । तत्तदानुरूप्यं यथोचितं ग्राह्यम् । सर्वेषामायुधानां सर्वायुधकार्य[शक्त]करत्वात् अचिन्त्यशक्तित्वोक्तिः । कुठारटङ्ककुद्दालादिकार्यं सालशैलवसुधातलभेदनमेकेन हि शरेण कृतमुच्यते * बिभेद च पुनः सालान्, * सहायकृत्यं किं तस्येत्यादिभिः । यद्वा, नित्यसूरिसमाविष्टतया तदिच्छानुगुणविचित्रकार्यसामर्थ्यमिह विवक्षितम् ; उक्तं **चोत्तरश्रीरामायणे**—* शरा नानाविधाश्चापि धनुरायतविग्रहम् । अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः इति । चक्रस्य हेतिराजत्वेऽपि शङ्खस्य पूर्वोक्तिः, सर्वशक्तेर्भगवतो मोक्षप्रदानशक्तिसूचकतया अभ्यर्हित-

त्वाभिप्राया; यथोक्तं **परमसंहितायाम्**—* सृष्टिबीजं तथा पद्मं चक्रं स्थितिनिबन्धनम्। गदा संहारबीजं तु शङ्खं मुक्तिनिबन्धनम् ॥ इति। एवमन्यत्रापि। अत्र पञ्चानां कण्ठोक्तिः प्राधान्यात्। पञ्चायुधानि पञ्चभूतशक्तिरूपाणीति **भा[रते]गवते** प्रोक्तम्; [illegible] तु महदादितत्त्वरूपाणीति; तदुभयं तात्पर्यभेदादविरोधेन नेयम्। **आदि-**शब्देन हलमुसलादिसंग्रहः। सहस्रभुजविश्वरूपादिविग्रहेष्वायुधानामसंख्येयत्वम् * अनेकदिव्याभरणं दिव्यानेकोद्यतायुधमित्यादिभिः सुव्यक्तम्। नित्यनिरवद्यत्वं पूर्ववत्। शुभलक्षणपौष्कल्यात्, आभरणकोटावपि निविश्य शोभातिशयहेतुत्वात्, अनुकूलतमस्वभावत्वात्, मुमुक्षुध्येयविग्रहविशेषणतया [illegible] निरतिशयकल्याणत्वम् ॥

**(स्वाभिमतेत्यादि ॥)** [illegible]विशिष्टस्य निरुपाधिकभोग्यस्य भर्तुः प्रधानभोक्तृत्वेनावस्थिता देवीः प्रतिपादयन् प्रथमं व्याख्येये प्राप्यप्रापकदशयोर्नित्यान्वितत्वेन निर्दिष्टां श्रियमादरातिशयादुक्तप्रकारविशिष्टत्वे प्रमाणदार्ढ्यद्योतनाय पूर्ववत्पुनराह—**स्वाभिमतेति** ॥ श्रियो वल्लभ इति विग्रहे * नित्यानुकूलं स्वतः इत्यादिप्रसिद्धस्वभावायाः श्रियोऽप्यसौ नित्यनिरतिशयभोग्य इति दर्शितं स्यात्। श्रीः वल्लभा यस्येति विग्रहे तु, प्रियतमया तया निवेदितं न प्रत्याख्यातीति फलति। ईदृशं चाभिमतत्वम् * न जीवेयं क्षणमपि विना तामसितेक्षणाम्, * न त्वहं तां विना सीतां जीवेयं हि कथंचन, * कच्चिन्न तद्धेमसमानवर्णम्, * कुशली यदि काकुत्स्थः, * मत्कृते काकमात्रे तु, * यदि रामः समुद्रान्ताम्, * दुष्करं कृतवान् रामः इत्यादिभिस्तात्पर्यवृत्त्या व्यज्यते ॥

नित्यनियतप्राधान्यतारतम्यक्रमेण श्रिया सहैकासनस्थे देव्यौ तच्छायासंकाशतया दर्शयति—**एवंभूतेति** ॥ तदाहुः—* देवि त्वामनु नीलया सह मही देव्यः सहस्रं तथेति। उपदिश्यमानधर्माधारादतिदिश्यमानधर्माधारस्य स्वतःप्राप्तवैषम्याविरोधेन साम्यं व्यवस्थाप्यम्। पररूपेऽपि देवीत्रयसंबन्धः प्रमाणसंमतः; यथोक्तं **बलपौष्करे**—* देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः। सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तु चाखिलैः ॥ शङ्खचक्रधरो नित्यं जानुन्यस्तैकहस्तवान्। अभयप्रदहस्तश्च नीलजीमूतसंनिभः ॥ ध्यातव्यो नित्यलोकस्थो भुक्तिमुक्तिफलप्रदः ॥ इति। **नित्यग्रन्थो-**क्तध्याने तु * नागभोगे विन्यस्तवामभुजमित्येतत् संहितान्तरमूलम्। एतेन वर्णभुजादिविप्रतिपत्तिरपि निरस्ता। अचिन्त्यशक्तेरीश्वरस्य स्वच्छन्दवृत्तेः परसंज्ञितरूपेऽपि तत्तत्प्रतिपत्त्यर्थं तत्तत्संहितोक्ता विशेषा नान्योन्यं बाधमर्हन्ति। यथा नरसिंहरूपे सप्तसप्ततिभेदाः; यथा च कृष्णरूपाण्यनन्तानीत्युच्यते। एवं परव्यूहादिष्वपि यथोपदेशं सर्वस्य सत्यत्वम्। गीयते च—* पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः इति। क्वचिद्वल्लभतया क्वचिन्नायकतया निर्देशस्य तत्तद्देव्यनुगुणं तात्पर्यं ग्राह्यम् ॥

एवं देवीपर्यन्तैराम्रेडितातिशयस्य परमभोग्यस्यारण्यचन्द्रिकात्वव्युदासाय नित्यभोक्तृवर्गमाह—**स्वच्छन्देति** ॥ सूरयो हि स्वाम्यभिमतं स्वयं साक्षात्कृत्य, आत्मात्मीयं सर्वं तदर्थे विनियुज्य, तमनुवर्तन्त इति ज्ञापनाय **स्वच्छन्दानु-वर्ती**त्युक्तम्। **स्व**शब्दः पूर्वोत्तरवदीश्वरविषयः। **स्थिति**रिह स्वरूपस्य सर्वकालानुवृत्तिः। **प्रवृत्तिः** एषां कैंकर्यरूपो व्यापारः। स्वरूपादीनां **भेदः** तत्तत्प्रतियोग्यपेक्षया विलक्षणव्यवहारहेतुभूत आकारः। अशेषेत्यादिकं व्याख्यातम्। स्वरूपनित्यत्वे सर्वात्मसाधारणेऽपि सूरिषु विशेषत उक्तेन सदासर्वज्ञत्वलक्षणेन नित्यत्वेन मुक्तव्यावृत्तिः, नित्यनिरवद्यतया वा; निरवद्यत्वं हि दुःखादिदोषगन्धरहितत्वम्; यथोक्तम्—* हताखिलक्लेशमलैः स्वभावत इति। ज्ञानादिविशेषणं वा नित्यनिरवद्यत्वम्; **तेन** कैङ्कर्ये स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमराहित्यसिद्धिः। ज्ञानस्य निरतिशयत्वमीश्वरज्ञानवत्

सर्वविषयत्वम् । क्रियाया ऐश्वर्यस्य च निरतिशयत्वं कैङ्कर्यमात्रे स्थाप्यम् । सर्वविषयत्वे तु परवत्सर्वशरीरत्वादिप्रसङ्गः । अत एव शक्तानामपि जगद्व्यापारेषूदासीनत्वमित्यापातास्तिकपक्षोऽपि निरस्तः । प्रवृत्तिशब्देन क्रियायाः पृथङ्निर्दिष्टत्वादत्र क्रियाविषयमैश्वर्यमिति वा योज्यम् । तदप्येषां परार्थं पराधीनं च । आदिशब्देन कैङ्कर्यानुगुणबलवीर्यादिसंग्रहः । तत्तत्सेवाविशेषनियतासंख्यातावान्तरेच्छादिवैचित्र्याभिप्रायेण **अनन्तगुणगण**शब्दः । शेषादीनां विशेषाः *तया सहासीनमित्यादिश्लोकेषु द्रष्टव्याः । आसनवाहनसेनेशद्वारपालादिभेदेन नानाविधत्वम् । **अनन्तत्व**मिह असंख्यातत्वम् । **परिजनाः** छत्रधारकादयः । **परिचारिकाः** अनुग्रहाविमलाद्याः, तथा कान्तिवारुणीसूत्रवतीरुद्रासुकीर्तिप्रभृतयः शेषादिपत्न्यः; ता अपि हि तेषां यथार्हं सान्तःपुरस्वामिसेवाविशेषार्था एव । एवम् *गुणैर्दास्यमुपागत इति न्यायेन स्वामिविग्रहगुणैरपि कैंकर्ये प्रेरितत्वमभिप्रेत्याह—**परिचरितचरणयुगलेति** ॥

एवं नित्यविग्रहादियुक्तस्य नित्यसूरिसेव्यस्य मुक्तगम्यं निवासस्थानमाह—**परमेति** ॥ *परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभाव इति संबुद्ध्यन्तं केचिद्व्याचक्षते ; तदा पूर्वोक्तानां सर्वेषां परत्वसौलभ्योपयोगित्वज्ञापनाय तदुभयं स्वरूपस्वभावशब्दाभ्यां विवक्षितम्, स्वरूपनिरूपकं निरूपितस्वरूपविशेषकं चेति धर्मवर्गद्वयं वा । एवं सति पूर्वोक्तमेव मुखान्तरेणानवसरे निगमितं स्यात्; इतो वरमनुक्तपरमव्योमप्रकर्षकथनम् । तथा च तद्विशेषणतयैव सप्तम्यन्तत्वेन **श्रीवैकुण्ठगद्ये**ऽप्येतत्पठितम् । परमयोगिनः साक्षात्कृतपरब्रह्मस्वरूपाः श्वेतद्वीपवासिनः ; *ये तु मुक्ता भवन्तीह नरा भरतसत्तम । तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनामिति हि स्मर्यते । परमव्योम्नः स्वरूपं शुद्धसत्त्वमयम् । तमसः परस्यापि परमव्योमस्वरूपस्यापरिच्छेद्यत्वमूर्ध्वादिभागेन व्यवस्थाप्यम् । तत्स्वभावो भोग्यतमत्वादिरूपः । विविधशब्दो भोग्यप्रभृतिषु त्रिष्वप्यन्वेतव्यः । **भोग्यम्** अप्राकृतं स्वाश्रयं शब्दादि । तदुपस्थापकतया स्वीकृतानि **भोगोपकरणानि** । **भोगस्थानानि** क्रीडापर्वतादीनि । स्वरूपगुणसंस्थानादिवैचित्र्यातिशयेन नित्यमपूर्ववदनुभाव्यतया अनन्ताश्चर्यत्वम् । प्रत्येकं महद्भिरसंख्यातैश्च रत्नभूषणभद्रासनादिभिर्योगादनन्तमहाविभवत्वम् ; पर्यङ्कविद्यादिषु हि विचित्रनदीह्रदसभादिविशिष्टं मुक्तगम्यं स्थानमुपदिश्यते—*सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते इति च तलवकारा अधीयते । पूर्वोक्तापरिच्छेद्यत्वे हेतुरनन्तपरिमाणत्वम् । अनित्यसावद्यस्थानान्तरव्यवच्छेदार्थमिह **नित्यनिरवद्यत्वोक्तिः** । अत्र पञ्चोपनिषत्प्रतिपाद्यानां भूतानां तत्संघातरूपाणां च केषांचित् भगवन्नित्येच्छत्वेन नित्यत्वमविरुद्धम् । त्रिगुणवत्कर्मिणां भगवत्स्वरूपतिरोधानादिहेतुत्वाभावान्निरवद्यत्वम् । निरतिशयत्वं स्थानगुणैः सर्वैः सर्वस्थानातिशयित्वम् । यथोक्तं **महाभारते**—*रम्याणि कामचाराणि विमानानि सभास्तथा इत्युपक्रम्य, *एते वै निरयास्तात स्थानस्य परमात्मनः इति, *आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशाः इति च । *कुठि गतिप्रतिघाते इति धातुः ; गतिरवगतिः । ज्ञानप्रतिघातककर्मप्रसङ्गरहिता नित्यसूरयो विकुण्ठाः, तैः संबन्धादत्र **वैकुण्ठ**शब्दोऽप्राकृतस्थानपरः ; *विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ इत्यादिभिस्तत्सिद्धिः । अत्र हि व्यतिरेकविभक्तिस्वारस्यात् *परमे व्योमन् इत्यादिभिरैकार्थ्याच्च परमपदशब्दो न परमात्मस्वरूपपरः । *नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम्, *दिव्यं स्थानमजरं चाप्रमेयम् *एकान्तिनः इत्यारभ्य *तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः इत्यादिभिः स्थानविशेषस्य स्पष्टोक्तेः । न चैतेषामण्डान्तर्वर्तिभगवल्लोकविषयत्वम्, तदन्तर्वर्तिनां सर्वेषामुत्पत्तिविनाशश्रवणात्, एतस्य च नित्यत्वाक्षरत्वाजरत्वोक्तेः, *अण्डं भित्त्वा तथोद्गता इत्यादिभिरण्डबहि-

भूतत्वसूचनाच्च । तथाऽपि त्रिगुणान्तर्गतोऽस्त्विति चेत्, तन्न; तमस्तत्त्वादर्वाचां **सुबालोपनिषदि** प्रलयप्रतिपादनात्, मुक्तगतौ शीर्षकपालप्रभृति तमःपर्यन्तं तत्त्वभेदेन गन्तव्यदेशाभिधानात्, *आदित्यवर्णं तमसः परस्तात्, *तमसः परमो धाता शङ्खचक्रगदाधरः इत्यादेश्च । नाथः ईश्वरः । *नाथृनाधृ याच्ञोपतापैश्वर्याशीःपु इति नाथतेरैश्वर्यार्थत्व-वचनात् तस्मिन् दिव्यदेशे भगवत ऐश्वर्यं स्वेनाप्यपह्नोतुमशक्यमिति भावः ॥

(**स्वसंकल्पेत्यादि** ॥) एवं नित्यविभूतियोग उक्तः । अथ तत्प्रतिद्वन्द्विलीलाविभूतियोगं वदन् *कारणं तु ध्येयः, *यो ब्रह्माणं विदधाति पूर्वम्, इत्यादिप्रसिद्धस्य मुमुक्षुसमाश्रयणीयस्य *यतो वा इमानि भूतानि जायन्ते *जन्माद्यस्य यतः इत्याद्युक्तं लक्षणमप्याह—**स्वसंकल्पेति** ॥ बद्धानामीश्वराभिमतापरिज्ञानेन प्रायशः प्रवृत्तिरिति ज्ञाप-यितुम् अचित्समभिव्याहारेण सर्वचिदचित्साधारणं संकल्पानुविधायित्वमुक्तम्; प्रकृत्यादीनां स्वरूपस्थित्योरीश्वरनित्येच्छा-वशेन नित्यसिद्धत्वमिहाभिप्रेतम्; प्रवृत्तिषु तु संकल्पजन्यत्वम्; प्रकृतेः स्वरूपं त्रैगुण्येन निरूप्यम्; संसारिपुरुषस्य तु संकुचितज्ञानत्वेन; कालस्य तु कलामुहूर्तादिमयत्वेन; त्रयाणां **स्थितिः** पूर्ववत् । **प्रवृत्तिः** व्यापारः । अत्र प्रकृतिग्रहणं प्राकृतानामप्युपलक्षणम् । तेन नारायणशब्देन *नराज्जातानि तत्त्वानि इत्याद्युक्तनिरुक्तिः सूच्यते । प्रकृत्यात्मकजग-दुक्त्या वा कार्यतत्त्वसंग्रहः । लीलाविभूतेरशेषत्वान्यशेषत्वभ्रमसंभवस्थानत्वात् तदपनोदनाय अत्र स्वशेषतैकस्वभावत्व-मुक्तम् । शेषत्वस्य शरीरलक्षणत्वसिद्ध्यै यावत्सत्ताकत्वमिह विवक्षितम्; तथा निरुपाधिकान्यशेषत्वराहित्यं च । अत्र शरीरस्वभावेष्वाधेयत्वादिषु संकल्पानुविधायित्वोक्त्या नियाम्यत्वं शाब्दम् । आधेयत्वमप्यभिप्रेतम् । प्रकृत्यात्मकत्वं भोग्यभोगोपकरणादौ । समष्टिव्यष्टिपुरुषविभागरूपतया पुरुषात्मकत्वं भोक्तृवर्गे । अत्र भोक्तृत्वं कर्मोपाधिकम् । परमपदे तु निरुपाधिकभोक्तॄणां सतामप्यनुक्तिस्तत्रत्यानां स्वाधीनस्वार्थभोक्तृत्वभ्रमराहित्याभिप्रायेण । क्षणलवादिषु कालावच्छेदेषु कालात्मकत्वम् । तेषां जगच्छब्देन ग्रहणम् अभूत् अस्ति भविष्यतीत्यादिरूपेण जगद्विशेषणत्वप्रतीत्यनुसारात् । व्याप्त-स्यापि कालस्य लीलाविभूतिमात्रे पठनम् *कालं स पचते तत्र न कालस्तत्र वै प्रभुः, *कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति नित्यविभूतेरकालकाल्यत्वज्ञापनार्थम् । तत्र तत्तदनित्यसद्भावेऽपि लीलाविभूतिवत् काल-नियमो नास्तीति विशेषः । भोग्यप्रभृति सर्वं प्रत्येकं विविधम् । तत्तदवान्तरविशेषविवक्षया **विचित्रत्वोक्तिः** । आश्चर्य-तया वा; *जगदेतन्महाश्चर्यं रूपं तस्य महात्मनः इति ह्युच्यते । एकैकवर्गव्यक्तीनामसंख्यातत्वादनन्तत्वम् । भोग्य-भोगोपकरणादीनि पूर्ववत् । प्राकृतत्वादिरिह विशेषः । भोगश्चात्र सुखदुःखानुभवात्मकः । महदादीन्यनन्तब्रह्माण्डा-दीनि च संगृह्णता निखिलशब्देन कतिपयजगत्कारणविरिञ्चादिव्यावृत्तिः । निखिलजगदुदयादेरेकैकस्यैव ब्रह्मलक्षणत्वे संभवत्यपि व्यष्टिसृष्ट्यादिनीत्या संभवन्तीं भिन्नकर्तृकत्वशङ्कां निरसितुमिह त्रितयोक्तिः । जगन्निष्ठानामुदयविभवलयानां परमपुरुषलीलात्वोक्तिः सर्वशरीरतया तत्तद्विशिष्टरूपेण तत्तदवस्थो भवतीत्युपादानत्वसूचनार्था । परिपूर्णतया प्रयोजन-निरपेक्षस्य कथं जगद्व्यापार इति शङ्कानिरसनाय लीलाशब्दः । *क्रीडतो बालकस्येव, *क्रीडा हरेरिदं सर्वम् *हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः, *लोकवत्तु लीलाकैवल्यमित्यादिभिस्तत्सिद्धिः । लीलारूपप्रयोजनवतोऽप्यवाप्त-समस्तकामत्वं सर्वत्राविहतेच्छत्वम् ॥

एवं नारायणशब्दोक्तं शरण्यत्वं यथानिरुक्ति संबोधितम्; अथ *सत्यकाम इत्यादेः पूर्वापरपुनरुक्तिपरिहाराय प्रागुक्तेष्वेवार्थेषु इदं समाख्याष्टकं प्रमाणीक्रियत इति केचिद्व्याचख्युः । तत्र चतुर्णां समाख्यात्वं व्यक्तम् । सत्यकामादि-

शब्दानां कथंचित्समाख्यात्वं कल्प्यम् । **परब्रह्मभूते**त्यत्र तु ब्रह्मशब्दमात्रं समाख्या; अन्यथाऽपि नामत्वकल्पने गौरवं स्यात् । अत्र परशब्देन विशेषणं त्वौपचारिकप्रयोगव्यवच्छेदार्थम् । **सत्यकामसत्यसंकल्प**शब्दौ पूर्वं विशेषणमात्रपरतयोक्तौ; इह तु तत्प्रमाणतया यथाश्रुति तत्तद्विशिष्टविषयतयेति विशेषः । लीलापदसूचितं जगन्निमित्तत्वमपि सत्यसंकल्पत्वेन स्थापितम्; जगदुदयादिलीलात्वद्योतितमुपादानत्वं तु * **परब्रह्मभूत** इत्यनेनाभिप्रेतम्, * सर्वं खल्विदं ब्रह्म तज्जलानित्याद्यनुसारात् । एवमभेदश्रुतिबलादुपादानत्वाभिमतस्य ब्रह्मणः स्वरूपपरिणामपक्षेण चिदचिद्गतसर्वदोषान्वयः शङ्क्येतेति तत्परिहाराय स्वयमेव गीतं श्रुत्यर्थमाह—**पुरुषोत्तमेति** ।। अत्र पञ्चम्यादिविभक्तित्रयेऽपि समासो द्रष्टव्यः ।

नन्वेवं भेदाभेदश्रुत्योर्विरोधादन्यतरबाधः स्यादित्यत्र घटकश्रुतिसिद्धमाह—**महाविभूते इति** । विभूतिशब्दोऽत्र नियन्तव्यपरः । * यदण्डम् इति श्लोकार्थ इहानुसंधेयः । शरीरतया विभूतित्वादत्र स्वरूपभेदेऽपि सामानाधिकरण्यं मुख्यमिति भावः । एवं सर्वविलक्षणस्य सर्वनियन्तुर्जगद्व्यापारलीलायां स्ववल्लभासामरस्यमभिप्रेत्याह—**श्रीमन्निति** ।। * विभूतिं प्रति शेषित्वं द्विष्ठमित्यभिप्रयन्नाह—श्रीमन्निति **व्यासार्याः** । विभूतीनामाधेयत्वादिनियमैः शरीरत्वं व्यञ्जयितुमाह—**नारायणेति** ।। नित्यविभूतियोगं शुद्धसृष्ट्युपादानत्वं च प्रभूतोपकारकत्वज्ञापनाय विशेषतः सूचयति—**वैकुण्ठनाथेति** ।। इदं संबुद्धिद्वयं वा; तदा तु तत्त्वादिसाक्षात्कारप्रतिघातुकरहितदेशादिसंबन्धी वैकुण्ठः । अपेक्षितसिद्ध्यर्थं सर्वैरपि याचनीयस्तत्प्रदानादावीश्वरश्च नाथः ।।

एतत् * सत्यकामेत्यादिपदाष्टकं प्राप्याकारनिष्कर्षार्थमिति पक्षमपि प्रगुणीकुर्मः—* सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता इति कामशब्दोदितानां ब्रह्मगुणानामपि प्राप्यतोक्तिमभिप्रेत्याह—**सत्यकामेति** ।। प्राप्यानुप्रविष्टनित्यविग्रहविभूतिद्वययोगेऽपि केचित्सत्यकामशब्दं प्रमाणयन्ति । यद्वा, मुमुक्षूणां भोक्तव्यसृष्टेर्भोगस्य चोपकरणतया मता नित्याः पदार्था अस्य सन्तीति भावः । प्राप्तिदशायां विभूतिद्वयेऽप्यपूर्वानन्तभोग्यस्रष्टृत्वमाह—**सत्यसंकल्पेति** ।। प्रकृष्टभोग्यतयापि निरतिशयबृहत्त्वमाह—**परब्रह्मेति** ।। * ब्रह्म वेद ब्रह्मैव भवतीत्यादिभिरभेदापत्तिशङ्कां परिहरन् बद्धमुक्तविलक्षणतया कैङ्कर्योद्देश्यत्वसंभवमाह—**पुरुषोत्तमेति** ।। कैङ्कर्यस्थानोपकरणादिसमृद्धिमत्त्वमाह—**महाविभूते इति** ।। सपत्नीकस्य कैङ्कर्योद्देश्यत्वं सूचयति—**श्रीमन्निति** ।। संबन्धगुणविभूतिव्यापारैः सर्वैरपि भोग्यत्वातिशयं प्रकाशयितुमाह—**नारायणेति** ।। सूरिसेव्यविग्रहविभूतिविशिष्टस्य देवयानपथिकविश्रमस्थानत्वमभिसंधायाह—**वैकुण्ठनाथेति** ।।

अत्र तृतीयमपि पक्षं ब्रूमः—प्रकृतस्य शरण्यस्य स्वीकृतसर्वभरनिर्वहणक्रमः सत्यकामादिभिरष्टभिः पदैरेव बोध्यते । **सत्यकाम!** काम इह प्रपन्नेभ्यो निरतिशयानन्दप्रदानेच्छा, तस्याः सामर्थ्याविनाभावात्सत्यत्वम्; तच्च अमोघत्वम् । **सत्यसंकल्पो**ऽत्र प्रतिबन्धनिवर्तनविषयः । * सर्वपापेभ्यो मोक्षयिष्यामि इति हि त्वमेवात्थेति भावः । **परब्रह्मभूत** निरतिशयबृहत्त्वविशिष्टस्त्वं स्वाश्रितानपि ज्ञानतो भोगतश्च परमसाम्यपर्यन्तं बृंहयिताऽसि । **पुरुषोत्तम** * यो मामेवमसंमूढ इत्यादिना त्वद्विदां कृतकृत्यत्वोक्त्या त्वन्निर्वाह्यसर्वभरत्वं त्वयैव सूचितम् । यद्वा * षणु दाने पुरु सुनोतीति पुरुषः; बहुप्रदेभ्यः सर्वेभ्य उत्तमत्वात् पुरुषोत्तम । **महाविभूते** विभूतिरिह विभवनम्, प्रभवनम्, नियमनमित्यर्थः । तस्य महत्त्वमपरिच्छिन्नत्वम्; संश्रितान्संसारकारागृहान्निर्गमय्य तदर्थतया सर्वं नियच्छसीति भावः; * अनन्तो देशकालादिपरिच्छेदविवर्जितः । महाविभूतिरित्युक्तो व्याप्तिः सा महती यतः ।। इत्यत्रापि नियन्तृत्वेन व्याप्तिर्विवक्षिता । **श्रीमन्** श्रिया नित्यसंयुक्तस्त्वं त्वदभिमतमाश्रितकृत्यं निर्वहसि । **नारायण** संबन्धमनुसंधाय दायविभागन्यायेन स्वामि-

तया स्वार्थं स्वयं स्वात्मानं [illegible] भावः । **वैकुण्ठनाथ** दिव्यपर्यङ्कसुखासिकायां निजपादमूलसेवां दातुमवस्थितोऽसि । इति त्रिष्वपि पक्षेषु मुखभेदैः पुनरुक्तिपरिहारः सिद्धः ॥

**(अपारेत्यादि ॥)** अथ शरण्यस्य समर्पितसर्वभरस्वीकरणानुगुणाः स्वस्य चाधिकारोपायनिष्पन्दकाः उक्ताश्चानुक्ताश्चाकारा अष्टादशभिः पदैर्निष्कृष्यानुसंधीयन्ते ; तत्र स्वापराधस्वनिकर्षस्वहेयसंबन्धस्वरक्षणविसंवादादिदोषपरिहारोपयुक्तानां गुणविशेषाणां प्रकर्षः प्रथममुच्यते—**अपारेति** ॥ कारुण्यस्यापारत्वम् अवश्यदण्डनीयेष्वस्मादृशेष्वपि प्रवृत्तेः ; यथा—* वधार्हमपि काकुत्स्थः कृपया पर्यपालयदिति। स्वेनाप्युक्तम्—* मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि इति, * गच्छानुजानामि रणार्दितस्त्वम् इत्यादि च । न्यूनाधिकत्वदर्शनजनितावज्ञासाध्वसपरिहारार्थमिह सौशील्योक्तिः । तस्यापारत्वं विशेषज्ञेषु विरिञ्चादिषु विष्णवाद्यवतारैः, अनभिज्ञेषु च मत्स्यकूर्मादिषु तत्तत्स्वरूपैरवतारैः निर्विशेषनीरन्ध्रसंश्लेषात् । वात्सल्यस्य अपारत्वं * रिपूणामपि वत्सलः इत्युक्तम् । औदार्यस्यापारत्वम् अर्थिषूदारत्ववचनहेतुभूतमर्थितप्रदाने स्वप्रयोजनाभिसन्धिमत्त्वम्, संश्रितेभ्यः सविभूतिकं स्वात्मानं दत्त्वा तदनुबन्धिषु पशुमनुष्यपक्ष्यादिष्वपि अविश्रान्तत्वं वा; श्रूयते हि—*नास्यावरपुरुषाः क्षीयन्ते इति, *नास्याब्रह्मवित्कुले भवतीति च । ऐश्वर्यस्य कथनमिहानादिकालं स्वरक्षणविपरीतवृत्तान् केनचिद्व्याजेन स्वयमेव नियम्याभिमुखीकरोतीति ज्ञापयितुम् । तस्य **अपारत्वम्** * संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः इति न्यायेन ब्रह्मादिषु देवेषु सुग्रीवादिषु सुहृत्सु वा विरुन्धानेषु तानपि शरणागतानुगुणीकर्तुं समर्थत्वम् । सौन्दर्यस्य अपारत्वं विरुद्धप्रकृतीनां शूर्पणखादीनां सत्त्वस्थानामृषीणामप्यविशेषेण दृष्टिचित्तापहारितया तुष्टूषाजनकत्वम्, असद्वासनादिशामकत्वं च ; यथोक्तं **श्रीपौष्करे** अर्चावतारप्रकरणे—*संदर्शनादकस्माच्च पुंसां संमूढचेतसाम् । कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः । कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेदिति । अतिसुन्दर[नित्य]विग्रहेण भगवतः परत्वानुसंधानं तत्सांनिध्यकारणमिति च तत्रोक्तम्—* नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर । यस्यास्ति सत्ता हृदये तस्यासौ संनिधिं व्रजेदिति । तत्सूचनार्थमैश्वर्यसौन्दर्ययोरिहाव्यवहितपठनम् ॥

*सर्वस्य शरणं सुहृत्, *सुहृदं सर्वभूतानाम्, *सर्वलोकशरण्याय, *सर्वैर्योग्यमनायासमित्यादिप्रसिद्धस्वभावस्य वायसवानरराक्षसादिविशेषानादरेणाङ्गीकुर्वतस्ते मादृशजनेऽपि गुणवृत्तादिनिकर्षो न त्यागकारणमित्याह—**अनालोचितविशेषेति** ॥ अत्र विशेषशब्दविवक्षितमनालोचितगुणगणेति श्रीवैकुण्ठगद्ये व्यञ्जितम् । प्रपत्तेः सर्वाधिकारत्वमपि अनेन प्रकाशितम् । *दुर्गसंसारकान्तारमपारमभिधावताम् । एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः, *प्रणम्य कृष्णं सहसा, * एकोऽपि कृष्णे सुकृतः प्रणामः इत्यादिषूक्तमल्पयत्नप्रसाध्यत्वमाह—**प्रणतार्तिहरेति** ॥ अनेन स्वस्य एवंविधावस्थाहेतुः अवतारविशेषोऽप्यनुसंहितः; उक्तं हि स्वयमेव—* निरस्तेतरभोगाशो वरदं शरणं गतः इति । अत्र प्रणतशब्दः प्रकृतानुगुण्यात्, *प्रपन्नार्तिहरं विष्णुमित्याद्यनुसाराच्च प्रकृतप्रकरणोपयुक्तप्रपन्नविषयो वा । प्रस्तुतावतारे व्यक्ततमं स्वस्मिन्नुपकारतमं च वात्सल्यगुणं पूर्वं द्विरुक्तमपि * मित्रभावेन संप्राप्तम् * दोषो यद्यपि तस्य स्यादित्यादिस्मरणाय पुनराह—**आश्रितेति** ॥ वात्सल्यगुणोदधौ निग्रहादिकं निमग्नं भवतीत्यभिप्रायेण एकशब्दः । अत एव हि सर्वज्ञत्वादौ स्थितेऽपि अविज्ञातृत्वाद्युक्तिः । उपायान्तरं स्वीक्रियतामित्यत्र * अस्मान्वेत्थ परान्वेत्थ इति प्रकारेण मादृशानामकिचनानामधिकर्तव्यं हिततमं त्वमेव जानासि; त्वदायत्तानुकूल्यस्य च शेषवृत्तिविधानेऽपि *न त्वं सुप्तो न वा [मृ]गतः; सर्वज्ञस्य ते, *त्वयाऽपि लब्धं भगवन्निदानीम्, *यदि मे न दयिष्यसे इत्यादिकं न विज्ञापनीयमित्यभिप्राये-

णाह—**अनवरतेति** ॥ अनवरतनिखिलशब्दाभ्यां ज्ञानस्य कालतो विषयतश्च संकोचो व्युदस्तः । *त्वमेवैवं कुरुष्व माम्, *कुरुष्व मामनुचरमित्यादिन्यायेन त्वदधीनव्यापारस्य मे त्वयैव प्रातिकूल्यनिवर्तनादिकमपि कार्यमित्याह—**अशेषचराचरेति** ॥ निखिलशब्दः स्वरूपस्थित्यादिनियन्तव्यकार्त्स्न्यपरः, सार्वकालिकनियमनकार्त्स्न्यपरो वा । आगमैराचार्यादिभिरन्तरात्मतया च बहुप्रकारं हि नियमनम् । न हि अविधेयं ते किंचित्, येन मे अभिमतं प्रतिबन्धाद्विलम्बेत, अलभ्यं वा स्यात्, इति भावः । परिपूर्णस्य मे त्वदङ्गीकारेण न किंचित्प्रयोजनमित्यत्राह—**अशेषचिदचिदिति** ॥ न हि मदेकवर्जं तव सर्वशेषित्वम्, अतो ममाप्यतिशये तव चार्थः प्रकल्पत इति भावः । तथाऽपि यथावस्थितरक्षापेक्षा तव नास्ति, कथं च त्वं रक्षणीयः? इति शङ्कायामाह—**निखिलजगदाधारेति** ॥ गुणादिवत् त्वदपृथक्सिद्धविशेषणस्य ममापेक्षामन्तरेणैव मत्सत्तादिकं त्वयैव रक्ष्यते, तत्साफल्यार्थं रक्षापेक्षादिकमपि त्वयैव कारयितव्योऽहम्, न हि त्वदधीनसत्ताकस्य मे त्वन्निरपेक्षप्रवृत्तिः संभवतीत्यभिप्रायः । एवमेव हि शेषभूतानां स्वतन्त्रस्वामिना त्वयैव यथेष्टं स्वमुद्दिश्य विनियोगः क्रियते इत्याह **अखिलजगत्स्वामिन्निति** ॥ इष्टानिष्टप्रदानसाधारणेऽस्मिन् मद्विनियोगे किं तवायातमित्यत्राह—**अस्मत्स्वामिन्निति** ॥ मदाचार्यसन्ततिसांमुख्येन ममैवंविधत्वत्संबन्धज्ञानाद्यवस्थाप्रदानरूपोपकारे प्रवृत्तेन त्वया शेषपूरणं कार्यमिति भावः । परिपूर्णतया पूर्वोपकारप्रत्युपकारनिरपेक्षस्य तव अकिंचननित्यसापेक्षसंश्रितरक्षणमात्मीयनित्यगुणपरित्राणमिति सूचयति—**सत्यकामेति** ॥ सर्वशक्तेस्तव नित्यसूरिवर्गे मन्निवेशनमीषत्करम्, न हि त्वद्व्रतं केनापि हन्तुं शक्यमित्याह—**सत्यसंकल्पेति** ॥ तथाऽप्यपेक्षितार्थमन्यः कश्चिदाश्रीयतामित्यत्राह—**सकलेतरविलक्षणेति** ॥ *विष्णुपोतं विना नान्यत्किंचिदस्ति परायणम् *भवतां कथ्यते सत्यं विष्णुरेकः परायणमित्यादिभिः अन्येभ्यस्तव मोक्षप्रदत्वादिरूपं विशेषं पश्यन्नहं मुमुक्षुः कमन्यमाश्रयेयम्; न हि परतन्त्रः कश्चित् स्वतन्त्रकृत्यं प्रार्थनीयः; न च त्वं परतन्त्र इति भावः । यद्यर्थिनं मां नाद्रियसे कथं तव औदार्यप्रथा जायेदित्यभिप्रायेणाह—**अर्थिकल्पकेति** । अर्थी च कल्पकश्चेति विग्रहः । अर्थिनां कल्पद्रुम इति वा । उक्तं हि—*स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य चेति । अर्थिनः कल्पद्रुमा यस्य सः अर्थिकल्पक इति वा विवक्षितम्; यदगीयत—*उदाराः सर्व एवैते इति । अभिमतपुरुषार्थदानार्थमर्थिनामुत्पादकः शास्त्रादिमुखेनार्थित्वापादकश्चेति वा । एवं पूर्वोक्तस्याप्यौदार्यस्य अतिशयप्रदर्शने तात्पर्यादपुनरुक्तिः । *ज्ञातं मया वसिष्ठेनेत्यादिकमनुसंदधानः पाञ्चालीगजेन्द्रादिवदापन्नस्यानन्यगतिकस्य मम एतामापदमवेक्ष्य रक्षितुमर्हसीत्याह—**आपत्सखेति** ॥ आपदि सखिवत् संरक्षक इत्यर्थः । विश्वसनीयत्वस्नेहविषयत्वादिसूचनाय सखिशब्दः । शत्रुमपि *तस्मात्परिश्रान्त इति व्यवस्य न त्वा शरैर्मृत्युवशं नयामीत्यवोचत् ॥

एवं द्वाभ्यामिष्टप्रापकत्वम्, अनिष्टनिवर्तकत्वं च दर्शितम् । अथ तत्र समानाभिप्रायतया नित्ययुक्तामखिलजगन्मातरं पुरस्कुर्वतो मे महान्तोऽप्यपराधास्त्वया क्षन्तव्या इत्याह—**श्रीमन्निति** ॥ संबन्धगुणविभूतिप्रयोजनव्यापारास्ते मदुपेक्षया मन्दफला मा भूवन्, अत आत्मानं नातिवर्तेथा इत्याह—**नारायणेति** ॥ उत्तरखण्डस्थापेक्षया पूर्वं श्रीमन्नित्याद्युक्तम्; इह तु पूर्वखण्डस्थापेक्षया उक्तैः स्वभावैः फलितमाह—**अशरण्यशरण्येति** ॥ स्मर्यते हि—*अगतीनां गतिर्भवानिति । अत एव अनालोचितेत्यादिना न पुनरुक्तिः, तत्र हि तारतम्यानादरे तात्पर्यम् । एतत्सर्वं व्याख्येयविवक्षितप्राप्यप्रापकाकारप्रपञ्चनम् । अस्म्यहमेवम्, एतावतापि किं त्वया लब्धम्, सर्वत्र हि शास्त्रार्थे अधिकारोऽपेक्षित इत्यत्राह—**अनन्यशरण इति** ॥ तत्त्वविदोऽनन्यप्रयोजनस्य मम सिद्धोपायान्तरं नास्ति, *अहमस्म्यपराधानाम्

* न धर्मनिष्ठोऽस्मीत्याद्युक्तावस्थाविशेषविदश्च मे साध्योपायान्तरमपि नास्तीति प्रतिबुद्धोऽस्मि ; अयमेव हि ममात्राधिकार इति भावः । इदं तु व्याख्येयस्योत्तमपुरुषाभिप्रेतमिति ज्ञापनाय, अहमपि न मम शरणमिति व्यञ्जनाय च, अधिकोऽहंशब्दः । अथवा अनन्यशरण इत्युपायान्तरशून्यत्वम्, अहमित्युपायभीरुत्वम्, अतिशङ्काराहित्यम्, प्रयोजनान्तरतदुपायपरित्यागित्वम्, मोक्षार्थप्रपत्त्युन्मुखत्वं च व्यज्यते । एतत्सूचितः कार्पण्यविस्तरः प्रतिवचनवाक्येषु गद्यान्तरयोश्च द्रष्टव्यः । त्वदित्यादिना पूर्वखण्डपदक्रमानुसरणम् । त्वच्छब्दः शरण्यत्वोपयुक्तसर्वाकारवैशिष्ट्यपरः । पादेत्यादिकं प्रागुक्तार्थम् ।

**अत्र द्वयम् ॥ पितरं मातरं दारान् पुत्रान्बन्धून्सखीन्गुरून् ।**
**रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥**
**सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान् ।**
**लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ॥ ६ ॥**

अत्र द्वयमित्यस्य व्याख्यातप्रायमिति शेषः; तात्पर्यं तु पूर्वमेवोक्तम् । यद्वा द्वयम् अर्थानुसंधानेन सह एवमुक्तमिति वा, वक्तव्यमिति वा विवक्षितम् । वाक्यान्तरैः पुनःपुनः प्रपद्यत इति तु नाशङ्कनीयम्, एकसाध्यसिद्ध्यर्थं प्रपत्त्यावृत्तेः प्रतिषेधात्, इह साध्यान्तरायोगाच्च । **पितर**मित्यादिकं तु स्ववाक्यवन्निबन्धनसंवादमुखेन अनन्यशरणत्वादिकं विशदीकृत्य वक्ष्यमाणफलप्रार्थनाप्रस्तावनात्मकमिति द्वयार्थस्य समुदितोक्तिः । तथा ह्यत्र सोपाधिकभोग्यतदुपायत्यागं निरुपाधिकभोग्यतदुपायविशेषपरिग्रहं च स्पष्टयित्वा प्रसादय इत्यादिना सोढुमित्यन्तेनोत्तरखण्डस्य दोषनिवृत्तिप्रार्थना संगृह्यते । पित्रादीनां त्यागोक्त्या भृत्यादिचेतनान्तरत्यागः कैमुत्यसिद्धः । बन्धुशब्द इह संबन्ध्यादिपरः । रत्नानीत्यादिकमुत्कटभोग्यत्वभोगसाधनत्वानामचेतनान्तराणामुपलक्षणम् । चकारेण वा अनुक्तसमुच्चयः । प्रियेषु हितेषु च मोक्षतदुपायानुपयुक्तेषु कुत्रचित् सङ्गोऽपि न युक्त इति ज्ञापनाय पितरमित्यादिविविधोक्तिः ॥

एवं लोकसिद्धप्रियहितान्युदाहृत्य **सर्वधर्मा**नित्यादिना शास्त्रवेद्यानि साधनानि साध्यानि चाह । तत्र सर्वधर्मशब्दः सिद्धसाध्यरूपसपरिकरधर्मकार्त्स्न्यपरः । **सर्वकामा**निति हिरण्यगर्भादिपदपर्यन्तकाम्यविषयः । **अक्षर**शब्द इह आत्ममात्रानुभवगोचरः । धर्माणां कामानां च उपयोगित्वेन वा पित्राद्युदाहरणम् । तच्च यथासंभवं द्रष्टव्यम् । पित्रादीनां त्यागश्चात्र काम्यधर्मोपयोगितया [illegible] वा अनुपादानम् । अत एव * मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, * वृद्धौ च मातापितरावित्याद्युक्तभगवदाज्ञानुपालनं न विरुध्यते । सर्वधर्मशब्देन [illegible]ऽपि तन्निवृत्तौ * [illegible] इति न्यायेन [illegible]त्तिः । तदिह त्रैवर्गिकधर्मेषु प्रयोजनान्तरेषु मोक्षोपायान्तरेषु च साधारणं नैराश्यं त्यागः ; तत्र पुरुषार्थान्तरेष्वल्पास्थिरत्वादिदोषदर्शनान्नैराश्यम् । तत एव तदुपायेष्वपि मुक्तिसाधनेष्वन्येषु स्वावस्थादर्शनेन दुष्करत्वादिना नैराश्यमिति विशेषः । **संत्यज्य** सम्यक् त्यक्त्वा, सवासनं परित्यज्येत्यर्थः । यद्वा पञ्चाङ्गसंयुक्तायाः प्रपत्तेरङ्गत्वेनाङ्गित्वेन वा अनुपादानमिह धर्माणां त्यागः । सोऽयं प्रपत्त्युपकारकत्वबुद्धिविरहः संप्रतिपन्नेषु पुरुषार्थान्तरतदुपायेषु मुक्त्युपायान्तरेषु नित्यनैमित्तिकेषु च समान इति सहोक्तिः । **लोकविक्रान्तचरणा**विति चरणे लोकविक्रान्तत्ववचनमनाश्रितानामप्यात्मप्रकाशनेन सौलभ्यादिव्यञ्जकम् । लोकविक्रान्तेति व्यस्तं वा ; तदा तु लोकेषु विक्रान्तः अधिष्ठातेत्यर्थः । ते स्वतन्त्र-

स्वामिनः परमप्राप्यस्य च। विभुशब्देन फलप्रदानौपयिकगुणपौष्कल्यं व्यज्यते। यद्वा विभुशब्देन परत्वम्, ते इत्यनेन सौलभ्यं च संगृह्यते। **अव्रजम्**—व्रजामीत्यर्थः। अनद्यतनत्वमत्राविवक्षितम्; भूतत्वेन निर्देशस्तु कर्तव्यशेष-नैरपेक्ष्यव्यञ्जनपरः। त्याज्यानां त्यागस्य पूर्वमस्पष्टत्वादिह तत्प्रपञ्चने तात्पर्यम्॥ ६॥

**त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव।**
**त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥ ७॥**

उपायत्वमुपेयत्वं च *माता पिता भ्रातेत्यादिश्रुतिसिद्धसर्वविधबान्धवस्य नारायणस्यैवेत्यभिप्रायेण त्यक्तं सर्वं त्वमेवेत्याह—**त्वमेवेति**॥ त्वत्पादेत्यत्र त्वच्छब्दाभिप्रेतं चानेन विशदीकृतम्। सर्वेषां जन्तूनां सर्वेषु जन्मसु सर्व-विधोपकारकत्वं त्वयि समुचितमित्यभिप्रायेण प्रत्येकं त्वमेवेति सावधारणावृत्तिः। मातापित्रादयो हि तत्प्रयुक्तास्तत्सह-कृताश्च तदभिमतयत्किंचित्करणेनोपकुर्युः, अयं चानन्यप्रयोज्यो निरपेक्षश्च स्वेच्छयैव सर्वप्रकारेणोपकरोति। **माता**, प्रलयदशायामुदरे स्थापयित्वा प्रसवनात्। प्रियप्रवर्तकत्वादिभिश्च **पिता**; *अहं जीवप्रदः पिता इति ह्याह। हित-प्रवर्तकश्च **बन्धुः**, संबन्धान्तरेणाप्यहितनिवर्तनार्हः। **गुरुः**, *गुशब्द इत्याद्युक्तान्धकारनिरोधित्वात्; तत्र चासौ गुरुशरीरक आदिगुरुश्च। **विद्या**, उपायभूतविद्याप्रवर्तकत्वात् तत्फलप्रदत्वाच्च, अकिंचनानामुपासनरूपविद्यायाः स्थाने निवेशाद्वा। **द्रविणम्**, *अमृतं साधनं साध्यं यं पश्यन्ति मनीषिणः इत्युक्तात् साधनत्वात्, साध्यत्वाच्च। **त्वमेव सर्वमिति** उक्तानुक्तसर्वकात्स्न्यपरम्। **मम**—तत्त्वविदोऽकिंचनस्य त्यक्तान्यसाध्यसाधनस्य त्वयि न्यस्तभरस्य च। **देव-देवेति** सर्वप्रकारोत्कर्षपरम्॥ ७॥

**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥ ८॥**
**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥ ९॥**

एवं स्वविषयेऽनुसंहितस्य सर्वविधबन्धुत्वस्य सर्वविषयत्वेन निरुपाधिकत्वं सूचयति—**पिताऽसीति**॥ **लोकस्य**—हिरण्यगर्भादिजन्तुजातस्य। **पूज्यश्च**—पितृत्वगुरुत्वादिभिः सर्वकर्माराध्यत्वश्रुतेश्च समाराध्यः। *गरीयान् ब्रह्मदः पिते-त्युक्तमाह—**गरीयानिति**॥ *गरीयान् पूज्यतम इति तु **भाष्योक्तम्**। **लोकत्रये**—बद्धमुक्तनित्यरूपचेतनवर्गत्रये। यद्वा लोकत्रयशब्देन सर्वलोकवर्तिनां लक्षणा, प्रभावतोऽप्रतिमत्वस्य कण्ठोक्तत्वात्। *न त्वत्समोऽस्तीत्यादिकमिह कारुण्यादिषु योजितम्॥ **तस्मात्**—तवैव सर्वविधबन्धुत्वात्, प्रभावतः कारुण्यादिगुणैश्च सर्वाधिकत्वात्, त्वद्विषयापरा-धस्य पित्रादिसर्वविषयापराधरूपत्वात् सर्वविषयापराधानां त्वदाज्ञातिलङ्घनरूपत्वेन त्वदपराधत्वाच्चेति भावः। **प्रणम्ये-**त्यादिकं प्रपद्य इत्यस्य विवरणम्। प्रकृष्टप्रह्वीभावश्चात्र प्रकरणात् प्रपत्तिरूपः। स च पूर्वकृत एव फलविशेषप्रार्थनार्थ-मिहानूद्यते। कायप्रणिधानमत्र स्वरक्षणार्थस्वव्यापारान्तरनिवृत्तिव्यञ्जकमात्रम्। **प्रणम्य प्रसादये**—प्रपदनरूपं प्रसादन-मनुतिष्ठामि। भक्तिवत् प्रपत्तिरपि प्रसादनविशेषः। मदिष्टविघातानिष्टप्राप्तिहेतुभूतमत्कृतापराधजनिताप्रीतिरूपकालुष्य-रहितं करोमीत्यर्थः। **त्वां**—स्वतः सर्वभूतानां सुहृदं मदपराधात्कलुषितबुद्धिम्। **अहम्**—अकिंचनोऽनन्यगतिः त्वत्पत्न्या

दत्तवरः त्यक्तत्वदितरसाध्यसाधनश्च । **ईशम्**—सापराधनिग्रहादिसमर्थम् । **ईड्यम्**–क्षमादिभिः स्तुत्यम् । *न तस्येशे कश्चन तस्य नाम महद्यशः इति श्रुत्युक्तमनेन पदद्वयेन दर्शितम् । क्षुद्रोऽपि जन्तुः संबन्धविशेषादपराधं सहते, किं पुनस्त्वमित्यभिप्रायेण पित्रादिदृष्टान्तः । **प्रियः प्रियाय**—मत्प्रीतिविषयस्त्वं त्वत्प्रीतिविषयाय मह्यम् । *प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः इति हि स्वयमेवात्थ । **अर्हसि देव सोढु**मिति वक्ष्यमाणसंग्रहः । संसारमोचनमपि ते लीलैवेति **देव**शब्दाभिप्रायः । एतावदन्तं पूर्वखण्डविवरणमिति केचित् ॥ ८ ॥ ९ ॥

**मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान् आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च सर्वान् अशेषतः क्षमस्व ॥ १० ॥**

अथोत्तरखण्डस्थस्यापि सविशेषणनारायणशब्दस्य पूर्वमेव व्याख्यातत्वात्, अवशिष्टयोश्च चतुर्थीनमसोः पाठक्रमादर्थक्रमस्य बलीयस्त्वात् प्रथमं मनोवाक्कायैरित्यादिभिस्त्रिभिर्वाक्यैरिष्टप्राप्तेः पूर्वभाविनीं ममकारनिवृत्तिवाचिनमःशब्दविवक्षितां सर्वानिष्टनिवृत्तिं प्रार्थयते । तत्र सर्वस्य चानिष्टस्येष्टविघातस्य च कर्मसूलत्वात् तन्निवृत्तिः पूर्वमभ्यर्थ्यते । मानसादिभेदेन त्रिविधः पापराशिः, तद्विपाकश्च मन्वादिभिर्विभक्त इति ज्ञापनाय करणत्रयोपादानम् । अकृत्यकरणादेरहेतुकत्वमन्योन्याश्रयादिकं च परिहर्तुमाह—**अनादिकालप्रवृत्ते**ति ॥ हितप्रवृत्तियोग्यैः करणैरेतावन्तं कालमहिते प्रवृत्तोऽस्मीति निर्वेदश्चात्र व्यञ्जितः । *यद्ब्रह्मकल्पेत्यादिप्रक्रियया अनादिकालप्रवृत्तम्, अत एवानन्तम् । प्रथमोऽ**नन्त**शब्दोऽकृत्यकरणकृत्याकरणरूपसामान्यापचारयोरन्वेतव्यः । द्वितीयस्तु भगवदपचारादौ । अकृत्यकरणादिपञ्चकमुत्तरोत्तरं क्रूरतरम् । यद्यपि केषांचित् कृत्यानामकरणमकृत्यकरणात्मकम्, तथाऽपि शरणागतरक्षणादिकृत्याकरणं महत्तरपातककोटौ स्मर्यत इति ज्ञापयितुमकृत्यकरणादुत्तरं कृत्याकरणोक्तिः । अकृत्यकरणान्तर्गतस्यापि भगवदपचारादेः ब्राह्मणपरिव्राजकन्यायेन प्रकृष्टत्वज्ञापनाय पृथगभिधानम् । यद्यप्यकृत्यकरणादेरप्याज्ञातिलङ्घनरूपतया भगवदपचारत्वम्, तच्चात्रापचारानिति विशेष्यनिर्देशेन व्यज्यते; तथाऽपि शिशुपालादीनामिवाव्यवधानेन भगवत्परिवादादिकमिह भगवदपचारशब्दोक्तम् । अकृत्यकरणशब्देन तु स्ववर्णाश्रमादिनिषिद्धानुष्ठानमात्रम् । कृत्याकरणशब्देन स्ववर्णादिनियतधर्मस्य प्राप्तकाले शक्तेनाननुष्ठानम् । भगवदपचाराश्च द्वात्रिंशदपचारादिप्रकरणेषु द्रष्टव्याः । भगवदीयेषु वस्तुषु स्वीयत्वबुद्धिः, अर्चावतारपर्यन्तेष्ववतारेषु प्राकृतत्वबुद्धिः इत्यादयोऽपि भगवदपचाराः । त्वदपचारेति वक्तव्येऽप्यत्र भगवदपचारशब्दस्तत्तत्प्रमाणोपात्तप्रकारसूचनार्थः । अयथाशास्त्रमर्थाद्युपाधिभिर्भागवतविरुद्धाचरणमिह भागवतापचारः । इमौ विपर्यासेन केचित् वर्णयन्ति । एतयोरेवापचारवर्गयोः *न क्षमामि इत्यादिभिर्विशेषिताः केचित्पूर्वोक्तन्यायादसह्यापचारा इति विभज्यन्ते । ते च *विद्याचोरो गुरुद्रोही, *एकाक्षरप्रदातारम्, *यः शूद्रं भगवद्भक्तम्, *मयि द्वेषानुबन्धोऽभूत् संस्तुतावुद्यते तवेत्यादिषु द्रष्टव्याः ॥

एवं निर्निबन्धनभगवद्भागवतद्वेषावज्ञापरिहासादयश्च यथालोकमसह्यापचारा इत्यनुशिष्यन्ते । एते पञ्चापि प्रत्येकमवान्तरोपाधिभिः नानाविधाः तत्तद्विधास्वपि अवान्तरव्यक्तिभेदैरनन्ताः । **आरब्धकार्यान्**—जात्यायुर्भोगरूपविपाकसंज्ञफलप्रदाने प्रवृत्तान् । यद्यपि, *अनारब्धकार्ये एव तु पूर्वे तदवधेरिति उपासने सूत्रितम्, तथाऽपि *साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी इति प्रपत्तौ विशेषवचनादत्रारब्धकार्योपादानम् । अर्थितार्थप्रदस्य शरण्यस्य प्रपत्तृणा-

मार्तितारतम्यानुसारेण यथाप्रार्थितफलप्रदानात् तदिष्टदेहाद्यनुवृत्तौ न प्रत्यक्षादिविरोधः । **अनारब्धकार्यान्**—प्रारब्धकार्यकर्मनिरुद्धावसरतया अनुपक्रान्तफलान् । द्विविधानपि **कृता**नित्यवच्छिनत्ति । **क्रियमाणान्**—आनुकूल्यसङ्कल्पादिमत्त्वेऽपि देशकालादिवैगुण्यात् पूर्वनियुक्तदूरस्थदुर्निवारभृत्यादिमुखेन वा उपक्रान्तानपरिसमाप्तान् । **करिष्यमाणान्**—तद्वदनुबन्धादिमुखेनागत्या प्रमादाद्वा संपतिष्यतः, बुद्धिपूर्वोत्तराघानां पश्चादेव प्रायश्चित्तविधानात् । तेषामप्यत्र संग्रहे तु यथार्हप्रायश्चित्तप्रेरणं क्षमाफलं ग्राह्यम् । **सर्वानशेषत** इति व्यक्तिशक्तिकार्त्स्न्यपरम् । सन्ति हि पापानां बह्व्यः शक्तयः तत्त्वतिरोधायकत्वम्, प्रत्यवायजनकत्वम्, कर्मान्तरानर्हतापादकत्वम्, सजातीयपापारम्भरुचिजनकत्वं चेति । एतास्वन्तिमा वासनेत्युच्यते । सा च प्रत्युत्तरे व्यक्तमनुवदिष्यते । पापशक्तिश्च निग्रहसंज्ञः परमपुरुषबुद्धिविशेष एवेति **क्षमस्वेत्यनेन** व्यज्यते । निग्रहनिवृत्तिरूपो हि प्रसादविशेष इह क्षमा । अत्र भागवतापचारेषु तद्विदितेषु तत्प्रसादनमुखेन भगवतः प्रसादनम् । *मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसीति न्यायात् । तदविदितेषु तु अव्यवधानेन, रहस्यप्रायश्चित्तन्यायात् ॥ १० ॥

**अनादिकालप्रवृत्तं विपरीतज्ञानमात्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥ ११ ॥**

एवं निषिद्धक्षमा प्रार्थिता । अथ सहेतुककाम्यक्षमा प्रार्थ्यते—**अनादिकाले**ति ॥ क्षुद्रपुरुषार्थकामनाया विपरीतज्ञानसापेक्षतया अपचाराणामिव शास्त्रार्थज्ञानपूर्वककाम्यानामपि मात्रया भ्रान्तिहेतु[क]त्वं व्यञ्जयितुमिह विशेषतो विपरीतज्ञानस्य सहोक्तिः । यथावस्थितविषयविरुद्धाकारावगाहिज्ञानमिह **विपरीतज्ञानम्** । तच्चात्र *योऽन्यथा सन्तमात्मानमित्यादिभिरुक्तः स्वात्मनो जगतश्च स्वनिष्ठत्वस्वतन्त्रत्वस्वशेषत्वभगवदन्यनिष्ठत्वादिभ्रम इत्यभिप्रायेणाह—**आत्मविषयं कृत्स्नजगद्विषयं चे**ति ॥ वृत्तशब्दस्य शास्त्रीये प्रसिद्धिप्रकर्षमुपजीव्य **विपरीतवृत्त**मिति बन्धकं काम्यकर्मोच्यते ; अन्यथा पूर्वोक्तेन पुनरुक्तिप्रसङ्गात् । काम्यस्य च विपरीतवृत्तत्वं सात्त्विकत्यागसमदर्शित्वादिविशिष्टहिततमधर्मविपरीतत्वात् । विपरीतवृत्तेऽपि स्वविषयतया पुत्रादिपरविषयतया च [द्वै]वैविध्यं दर्शयति—**अशेषविषय**मिति ॥ **अद्यापि वर्तमानं वर्तिष्यमाणं च** । सद्गुरूपदेशादिभिः परोक्षसम्यग्ज्ञाने निष्पन्नेऽपि बाधितानुवृत्त्यादिनयाद्वासनारागादिभिरनुवर्तमानमित्यर्थः । अत्र **चकारेण** पूर्वक्तविपरीतवृत्तसमुच्चयः । **अद्यापी**त्यनेन च अनादिविपरीतवृत्तसन्ततिः सूच्यते । अत्रापि **सर्वशब्दः** पूर्ववत् कार्त्स्न्यपरः । अशेषत इति चानुसन्धेयम् ॥

इह यथाधिकारं यथाचोदितमनुष्ठितानामपि संसारहेतुधर्माणामभिचाराणामिव अनर्थपर्यवसायितया मुमुक्ष्वपेक्षया पापत्वोक्तेः स्वर्गादिहेतुभूतस्वतन्त्रसंकल्पेऽपि निग्रहविशेषत्वबुद्ध्या काम्यक्षमाप्रार्थनं युक्तम् । यद्यप्येवं पूर्वकृतेषु काम्येषु गतिः, तथाऽपि वर्तमानवर्तिष्यमाणकाम्यक्षमार्थिनां स्वयं तदारम्भ एव न संभवतीति कथं तत्क्षमाप्रार्थनम्? इत्थम्—अज्ञातयादृच्छिकसुकृतन्यायात् सुहृज्जनबुद्ध्या वा संभवतु नेदं चोद्यम् । स्वबुद्धिपूर्वमपि वर्तमानेषु काम्येषु मध्ये निर्विण्णानामपि प्रक्रान्तसमापनमन्तरा लब्धवृष्टेः कारीरीशेषसमापनन्यायेन स्यात् । तत्र पश्चिमांशस्याज्ञासिद्धत्वान्न काम्यत्वदोषः । पूर्वांशस्य तु क्षुद्रफलकामनामूलस्य तत्फलजनकत्वाभावेऽपि तादृशवासनाजनकत्वसंभवात् कर्मयोगस्येव *नेहाभिक्रमनाशोऽस्तीति न्यायेन केषांचित्कर्मणामसमाप्तानां कृतांशस्य विलम्बकारिसाधनान्तरपर्यवसितफलजनकत्वात् तत्क्षान्तिः प्रार्थनीया । अत्र पूर्वापरांशयोरधिकारभेदेऽप्यासमाप्तेरैककर्म्याद्वर्तमानव्यपदेशोऽपि युक्तः । उत्तरकालेऽपि

केनचिद्धेतुना निर्वेदविच्छेदात् नित्यत्वभ्रमात् स्वप्नदोषाद्वा काम्यं संभाव्यते । तस्यानुत्पन्नस्यापि क्षमावेक्षणं शीघ्रं स्वोचितप्रायश्चित्तप्रेरणार्थम्, सौभर्यादिन्यायेन क्रमेण वैराग्यजननार्थं वा । उक्तं हि प्रपन्नमधिकृत्यैव—* अथोपाय-प्रसक्तोऽपि भुक्त्वा भोगाननामयान् । अन्ते विरक्तिमासाद्य विशते वैष्णवं पदमिति ॥ ११ ॥

**मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूतं शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय ॥ १२ ॥**

एवं कर्मनिवृत्तिः प्रार्थिता । अथ कर्महेतुप्रकृतिसंबन्धनिवृत्तिः कर्मनिवृत्त्यैव भवन्त्यपि सर्वेश्वरबुद्धिविशेषाधीनेति ज्ञापयितुमभ्यर्थ्यते—**मदीयेति** ॥ ईश्वरस्य वैषम्यनैर्घृण्यपरिहारार्थं मदीयेत्युक्तम् । अन्योन्याश्रयनिवारणाय बीजाङ्कुर-न्यायमभिप्रेत्याह—**अनादिकर्मप्रवाहप्रवृत्तामिति** ॥ प्रकृतिस्वरूपस्य पुरुषवत् अनादित्वात् तत्प्रवृत्तिमात्रे कर्महेतुक-त्वमुक्तम् । तत्र च *गुणमायासमावृतः इत्यादिप्रसिद्धं प्रतिकूलप्रवृत्तित्रयं भगवत्स्वरूपेत्यादिभिराह—**भगवत्स्वरू-पेति** ॥ **तिरोधानं** नाम क्षेत्रज्ञानां भगवत्स्वरूपविषयज्ञानप्रसरनिरोधः । तथा चात्यन्ततिरोधानादसत्त्वबुद्धिं, सामान्यतो विदितेऽपि भगवति सर्वाश्रयत्वादिधर्मतिरोधानादवरत्वादिबुद्धिं, तदन्येषु स्वनिष्ठत्वादिबुद्धिं च करोतीत्याह—**विपरीत-ज्ञानजननीमिति** ॥ इदं च जीवस्वरूपतिरोधानतन्मूलदेहात्मभ्रमादेरुपलक्षणम् । एवं तत्त्वत्रयतिरोधानफलभूतं विपरीत-ज्ञानान्तरमाह—**स्वविषयाया** इति ॥ प्रकाशमानेषु वस्तुषु तिरोधानं नाम तत्तद्भेदकधर्मग्रहणनिवारणम् । इदमेव हि सर्वत्र भ्रान्तेर्निदानम् । उक्तस्या[प्र]कारत्रयस्य हेतुभूतमवस्थाचतुष्टयं देहेत्यादिभिरुच्यते । **देहेन्द्रियत्वेन**—भोगायतनतया भोगोपकरणतया च । **भोग्यत्वेन**—शब्दादिगुणविशिष्टभूतपञ्चकरूपत्वेन । **सूक्ष्मरूपेण**—देहादिपरिणामरहितांशेन । सेयं प्रकृतिरिदानीं चतुर्भिरप्यंशैरपकरोति । प्रलयदशायां तु सूक्ष्मरूपेणैव तिरोधानमात्रं करोतीति व्यवस्था *देहयोगाद्वा सोऽपीति सूत्रभाष्ये द्रष्टव्या । ईदृश्याः प्रकृतेः दुरत्ययत्वं स्वतन्त्रलीलाप्रवृत्ततयेति *दैवी ह्येषा गुणमयी इत्यादिना त्वयैव गीतमिति सूचयति—**दैवीमिति** ॥ तिरोधानादिहेतुभूतैरवस्थाचतुष्टयानुवृत्तैर्बन्धहेतुभिः सत्त्वादिगुणैः प्रचुरतामाह—**गुणमयीमिति** ॥ सत्त्वादिगुणसमुदाय एव प्रकृतिरिति **सांख्यपक्ष**स्तु *गुणाः प्रकृतिसंभवाः, *प्रकृतेर्गुणसंमूढाः इत्यादिव्यधिकरणप्रयोगबलात् निरस्तः । क्वचित्तु सत्त्वरजस्तमःशब्दानां द्रव्यपर्यन्तः प्रयोगः *तद्गुणसारत्वात्तु तद्व्यपदेशः इति न्यायेन नेतव्यः । एवमनन्तैर्विभागैर्व्यापारैः परिणामैर्गुणैश्च प्रख्यातमाश्चर्यत्वं समाख्याविशेषेणाह—**मायामिति** ॥ मायां मां तारयेति द्विकर्मकतयाऽन्वयः । **दासभूतं** इत्यादिभिर्मूलमन्त्रपदत्रयार्थः सूच्यते । *दासभूताः स्वतः सर्वे, *आत्मदास्यं हरेः स्वाम्यमित्यादिप्रसिद्धं स्वभावतो दासत्वं च्विप्रत्ययाभावेन व्यज्यते । द्वयेऽपि नारशब्दवाच्यानां जीवानां तात्पर्यवृत्त्या दासत्वं ग्राह्यम् । दूरं पलायितेऽपि मयि त्वत्संबन्धस्तावत् दुस्त्यजः । दास्यप्रतिबोधश्च मे संप्रति जात इति भावः । *शरणागतोऽस्मि तवास्मि दासः इति पूर्वोत्तरखण्डार्थनिष्ठत्वं समुच्चित्योक्तम् ।

स्वरूपभरलाभेषु तवैव न ममेति यत् । प्रपन्नस्यानुसन्धानं सारं तदिह दर्शितम् ॥

**अस्मी**ति प्रार्थनाभिप्रायम् । **दासोऽस्मि**—दासवृत्तिपरः स्यामित्यर्थः । अन्यथा तु दासभूत इत्युक्तस्यैव पुनर्वचनमात्रं स्यात् । शरणागतोऽस्मि तवास्मि दासः इति निर्देशौ प्रार्थनात्मनिक्षेपपराविति केचित् । आर्तो वा दृप्तो

वा द्वयवक्ताऽहं तव दयनीय इत्यभिप्रायेणाह—**इति वक्तारमिति** ॥ यद्यप्यत्र फलप्रार्थनार्थं प्रपत्तिकर्तृत्वानुवाद एव युक्तः, तथाऽपि तद्वचनकर्तृत्वानुवादः *भव शरणमितीरयन्तीत्याद्यभिप्रेतवचनप्राशस्त्यादिव्यञ्जनार्थः। **मां**—*स्वयं मृत्पिण्डभूतस्येत्यादिप्रसिद्धस्वरक्षणासमर्थम्। त्रिगुणद्रव्यस्य नित्यतया नाशाभावात् **तारयेत्युक्तम्**। एतेन, *दुरत्यया इत्युक्त स्वयत्नेन दुस्तरत्वं, *मामेव ये प्रपद्यन्ते इत्यादिनाऽभिप्रेतं पराधीनतरणं च गम्यते। एवं नमःशब्दे निवर्तनीयतयाऽभिप्रेतस्य पापस्य भ्रमस्य प्रकृतिसंबन्धस्य च मिथःकार्यत्वं कारणत्वं च यथायोगं द्रष्टव्यम् ॥ १२ ॥

*** तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥**
*** उदारास्सर्वे एवैते ज्ञानी त्वात्मैव मे मतम्। आस्थितः सहि युक्तात्मा मामेवानुत्तमां गतिम् ॥**
*** बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥**
**इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व ॥ १३ ॥**

अथ निर्वेदमान्द्यादीषद्विलम्बक्षमाणामत्रत्यविशदज्ञानभक्त्योरपि कैङ्कर्योपयोगितया चतुर्थ्यभिप्रेतफलकोटिघटितत्वात् स्वयंप्रयोजनं तदुभयं **तेषामित्यादिना** प्रार्थ्यते। *तत्पादभक्तिज्ञानाभ्यां फलमन्यत् कदाचन। न याचेत् पुरुषो विष्णुं याचनान्नश्यति ध्रुवम् ॥ इति तावन्मात्रप्रार्थना ह्यनुज्ञाता। अत्र परभक्तिवचनं तदनन्तरभाविपरज्ञानपरमभक्त्योरप्युपलक्षणम्। तच्च प्रतिवचनभागे व्यञ्जयिष्यते। **ज्ञानी**—*प्रकृतिं विद्धि मे परामित्यादिप्रतिपादितभगवच्छेषत्वैकरसात्मस्वरूपवित् भगवन्तमेव परमप्राप्यं मन्वानः। **नित्ययुक्तः**—ऐश्वर्याद्यर्थिनां स्वाभिलषितप्राप्तौ सिद्धायां भगवता योगो निवर्तते, ज्ञानिनस्तु न तथेति भावः। **एकभक्तिः**—न तु प्रयोजनान्तरविभक्तभक्तिरित्यर्थः। एतदुभयं ज्ञानी विशिष्यत इत्यस्य हेतुः। **अत्यर्थम्**—अत्यभिधेयम्; सर्वज्ञेन सर्वशक्तिना मयाऽपि दुर्वचमिति भावः। *स च मम प्रियः इत्यत्राप्यत्यर्थमित्येतदनुषज्यते। यद्वा स्वप्रीत्यपेक्षया स्वभक्तप्रीतेः प्रकर्षोक्त्या स्तुतिः। **आत्मैव**—सर्वान्तरात्मनो ममाप्यन्तरात्मैव। नन्विदं प्रमाणविरुद्धमित्यत्राह—**मे मतमिति** ॥ प्रकृष्टप्रीतिविषयत्वेनातिवादान्न विरोधः। तथाऽत्यादरहेतुमाह—**आस्थित इति** ॥ **युक्तात्मा**—मद्विरहस्यातिदुःसहतया मयि नित्ययोगप्रवृत्तमनाः। **अनुत्तमां गतिम्**—परमप्राप्यम्। **जन्मनाम्**—पुण्यजन्मनाम्। **ज्ञानवान्**—पूर्वोक्तज्ञानवान्। *वासुदेवः सर्वमिति प्रपद्यत इत्यन्वयः। **सर्वम्**—प्राप्यप्रापकादि। *रामस्य व्यवसायज्ञः इत्यादिनिदर्शितज्ञानविशेषवत्त्वात् महात्मत्वोक्तिः। *महामनाः इति **भाष्यम्**। **सुदुर्लभः**—मत्तः प्रयोजनान्तरार्थिन आर्तादयोऽपि दुर्लभाः। अयं तु कर्मवश्यमध्ये भक्तलाभार्थिना मया देशिकार्थिभिश्चान्यैः सुदुर्लभः, लब्धश्चेदयमलभ्यलाभ इति भावः। उक्तं हि **श्रीपौष्करे** *दुर्लभा भगवद्योगभाविनो भुवि मानवाः। तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदम् ॥ इति। **माम्**—*अज्ञो जन्तुरनीशोऽयमित्युक्तेषु मूर्धाभिषिक्तम्। **श्लोकत्रयोदितज्ञानिनं कुरुष्व** क्रियाफलं त्वद्गामीत्यात्मनेपदेन व्यज्यते। अव्यवहितत्वादिह श्लोकत्रयेत्युक्तम्। परभक्तिश्लोकानां भिन्नप्रकरणस्थतया स्थानत्रयेत्युक्तम्। **माम्**—*या प्रीतिरविवेकानामित्युक्तेषु बाह्यविषयसक्तेष्वग्रगण्यम् ॥ १३ ॥

*** पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया, * भक्त्या त्वनन्यया शक्यः,**
*** मद्भक्तिं लभते पराम् इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व ॥ १४ ॥**

**परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व ॥ १५ ॥**

**परभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवोऽहं तथाविधभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥ १६ ॥**

अथ शरीरपातसमयभाविनो बुद्ध्याकारानभ्यर्थयते—**परभक्तीति** । अथवा मुक्तिदशाभाविनां परभक्त्यादीनामिदमपेक्षणम् । एकस्वभावत्वोक्तिर्हि अत्रत्यपरभक्त्यादिव्यवच्छेदार्था । उक्तानामेव तत्रत्यपरभक्त्यादीनां सादरानुवादेन कैङ्कर्यपर्यन्ततां याचते—**परेति** । अत्र त्वदिति वक्तव्ये भगवच्छब्दः अनुभाव्यपौष्कल्यस्फुटीकरणार्थः । किंकरविशेषणे शेषतैकरतिरूपशब्दे शेषतैकरतिरेव रूपं निरूपकं यस्येति भाव्यम् । **भवानीति** प्रार्थना । त्वत्किङ्करभावात्पूर्वमसत्कल्पोऽहमिति च सूच्यते । एवं द्वयार्थो व्याख्यातः ॥

सर्वज्ञेऽपि स्वतो देवे याच्ञाविज्ञापनादिभिः । तत्तदिष्टप्रदित्सात्मा प्रीतिरेव प्रसाध्यते ॥
तदेव चोदनोपज्ञमपूर्वं तत्त्ववेदिनाम् । आराध्येन्द्राद्यपायेऽपि फलदानाय तिष्ठति ॥ १४ ॥ १५ ॥ १६ ॥

**एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि अनन्ततद्विरोधिपापाक्रान्तोऽपि, अनन्तमदपचारयुक्तोऽपि, अनन्तमदीयापचारयुक्तोऽपि, अनन्तासह्यापचारयुक्तोऽपि, एतत्कार्यकारणभूतानादिविपरीताहङ्कारविमूढात्मस्वभावोऽपि, एतदुभयकार्यकारणभूतानादिविपरीतवासनासंबद्धोऽपि, एतदनुगुणप्रकृतिविशेषसंबद्धोऽपि, एतन्मूलाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखतद्धेतुतदितरोपेक्षणीयविषयानुभवज्ञानसङ्कोचरूपमच्चरणारविन्दयुगलैकान्तिकात्यन्तिक - परभक्तिपरज्ञानपरमभक्तिविघ्नप्रतिहतोऽपि, येनकेनापि प्रकारेण द्वयवक्ता, त्वं केवलं मदीययैव दयया निश्शेषविनष्टसहेतुकमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नः, मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिः, मत्प्रसादादेव साक्षात्कृतयथावस्थितमत्स्वरूपरूपगुणविभूतिलीलोपकरणविस्तारः, अपरोक्षसिद्धमन्नियाम्यतामद्दास्यैकस्वभावात्मस्वरूपः, मदेकानुभवः, मद्दास्यैकप्रियः, परिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवस्त्वं तथाविधमदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भव ॥ १७ ॥**

अथैवमभ्यर्थितस्य भगवतस्तदभ्यनुज्ञादिविषयैः प्रपत्तिजनितप्रसादपरिवाहैः प्रतिवचनैः प्रकृतौपयिकवक्ष्यमाणचरमश्लोकार्थोऽपि प्रतिबोध्यते । तथाहि—अत्र प्रतिहतोऽपीत्यन्तेन अशक्तिपूर्त्या अनागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायतां प्रकाशयता * अनन्यशरणः इत्युक्तविस्तररूपेण प्रथमपादतात्पर्योक्तिः । येनकेनापीत्यादिना त्वमित्यन्तेन द्वितीयपादोक्ताधिकारिकृत्यलाघवादिव्यञ्जनम् । केवलमित्यादिना तु * अहं त्वा इति वाक्याभिप्रेतानिष्टनिवृत्तिपूर्वकेष्टप्राप्तिप्रकाशनम् । एवंभूतोऽसीत्यादिभिः प्रपन्नविषयशोकापनोदनवाक्याभिप्रेतप्रपञ्चनमिति [विषय]विभागः । एवंभूतमत्कैङ्कर्ये-

त्यत्र एवंभूतेति कैङ्कर्यविशेषणम् । उपायतयेत्यत्र गद्यान्तरोक्तक्रमेण साक्षात् परम्परया वेति भाव्यम् । **अवक्लृप्तम्**—मन्नित्येच्छानियमितमित्यर्थः, मदादेशात्मकैः शास्त्रैर्विहितमिति वा । **समस्तवस्तु**शब्देन प्रस्तुतप्रपत्तिव्यतिरिक्तास्तत्त्वज्ञानपूर्वकाः कर्मयोगादय उपासनपर्यन्ता निवृत्तिधर्माः, तदुपयुक्ताश्चामानित्वाद्यात्मगुणाः संगृह्यन्ते । एतेन परिशब्दद्योतितसपरिकरत्यागव्यञ्जनम् । एवं पश्चादपि तदर्हता न संभवतीति नैराश्यरूपत्यागसिद्ध्यर्थमाह—**अनन्ततद्विरोधीति** ॥ उपासनादिविरोधित्वात् प्रवृत्तिधर्मोऽप्यत्र पापशब्देन संगृहीतः । अनन्तमदपचारेत्यादिभिः पूर्ववत् विशेषापचाराभिभूतत्वस्य पृथगुक्तिः । एकैकवर्गस्य दुस्तरत्वद्योतनाय प्रत्येकमानन्त्यनिर्देशः । उक्तानां पापानां निदानं भक्तियोगादिप्रतिबन्धे द्वारभूतम् * अहंकारविमूढात्मेत्यादिषु प्रसिद्धं पूर्वं विपरीतज्ञानशब्दोपात्तेष्वन्यतममाह—**एतत्कार्येति** ॥ कार्यस्याप्यहंकारस्यानादित्वं बीजाङ्कुरन्यायात्प्रवाहरूपेण भाव्यम् । * अथातोऽहंकारादेशः इत्याद्युक्तयथावस्थिताहंकाराद्यवच्छेदार्थं **विपरीत**शब्दः ; अनहमर्थे अहंत्वाभिमानात् स्वातन्त्र्यारोपाच्च विपरीतत्वम् । **विमूढत्व**मिह तिरोहितत्वम् । नित्यं प्रकाशमानस्याप्यात्मनस्तिरोहितत्वमाधेयत्वविधेयत्वशेषत्वादिधर्माणामनवभासादिति ज्ञापनाय **स्वभाव**शब्दः ।

पापस्याहंकारस्य च प्रवाहनिर्वाहकम् *अशेषतः इति पूर्वत्र संक्षिप्तं विशदमनुभाषते—**एतदुभयेति** ॥ वासनाया अपि प्रवाहरूपेणानादित्वम् । यथावस्थिततत्त्वहितपुरुषार्थव्यावृत्त्यर्थोऽत्र विपरीतत्वोक्तिः । पापस्य वासना पापान्तरारम्भरुचिजनकनिग्रहांशः ; अहंकारस्य वासना भूयोभूयस्तादृशभ्रमजनकबुद्धिसंस्कारः । * भगवत्स्वरूपतिरोधानकरीमित्याद्युक्तमनुवदति—**एतदनुगुणेति** ॥ एतच्छब्देन पूर्वोक्तपापाहंकारवासनारूपत्रितयपरामर्शः । अत्रापि कार्यत्वं कारणत्वं च विवक्षितम् । सात्त्विकप्रकृतिव्यवच्छेदाय विशेषशब्दः । **संबद्धः**—दृढबद्ध इत्यर्थः । एतच्च **मितगद्ये** दुर्विवेचेति पदेन विवृतम् । प्रकृतिसंबन्धस्याभिमतप्रतिबन्धकत्वे द्वारं प्रपञ्चयति—**एतन्मूलेति** ॥ दुःखस्य संसारोद्वेगजनकत्वमपि संभवति । सुखस्य तु संसाररुचिजनकत्वेन विघ्नत्वमधिकमित्यभिप्रायेण पूर्वं सुखस्योक्तिः । दुःखवत् सुखमपि आध्यात्मिकादिभेदेन त्रिविधम् । **आध्यात्मिकम्**—आत्माश्रिताचित्समुदायप्रधानहेतुकम् । तादृशं दुःखं द्विविधम्—शारीरं मानसं चेति । तत्र शारीरं * शिरो [यक्ष्मा] रोगः प्रतिश्यायः इत्यादिनोक्तम् ; मानसं * कामक्रोधभयद्वेषेत्यादिना । **आधिभौतिकं** तु * पशुपक्षिमनुष्याद्यैरित्यादिना । **आधिदैविकं** च * शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवम् इति । अत्र **दुःख**शब्दस्य पूर्वकालीनदुःखविषयत्वात् उत्तरत्र दुःखविघ्नगन्धरहितत्वोक्तेरुत्तरकालस्वास्थ्यपरत्वात् तितिक्षायां वा तात्पर्यादविरोधः । त्रिविधमप्येतत् प्रत्येकमवान्तरहेतुस्वरूपवैषम्यादनन्तप्रकारमिति सूचयितुं **तद्धेतु**शब्दः । सुखदुःखहेतवश्च स्वरूपतो बुद्धिविषयतयाऽपि परभक्त्यादिविघ्नाः । **तदितरे**ति उपेक्षणीयविशेषणम् । उपेक्षणीयविषयश्च तृणादिः ; तदनुभवोऽपि अब्रह्मात्मकानुभवरूपत्वेन पूर्वोक्तविपरीतज्ञानविशेषतया स्वरूपतः संस्कारतश्च प्राप्तविषयानुभवविरोधी । **ज्ञानसंकोचः**—तर्कोपदेशसहकृतैः शास्त्रैरपि परावरतत्त्वविषययथावस्थितज्ञानप्रसराभावः । मच्चरणारविन्दयुगलेति स्वयमुक्तिः न दोषाय, ईश्वरस्य यथाभूतार्थशंसिनः सर्वत्र स्वगुणाविष्क्रियादोषरहितत्वात्, तेनापि चरणयोः स्वाश्रितरक्षणसाधनतया संप्रीतिविषयत्वेन स्तुत्यत्वोपपत्तेश्च । तथा चाहुः—* तस्य स्वात्मप्रदाने तु साधनं स्वपदद्वयमिति । अत्र परभक्त्यादिशब्दैः देहपातात्पूर्वभाविनः पश्चाद्भाविनश्चावस्थाविशेषाः संगृह्यन्ते । प्रतिहतोऽपीत्यन्तेषु **अपि**शब्दैस्त्यागानुवादो द्योत्यते । धर्मान्तरनैरपेक्ष्यविशिष्टविधानमपि **द्वयवक्त्रे**त्यनेन सूचितम् । न चैतावता प्रपत्तेस्तदविनाभूताज्ञानां वा निवृत्तिः, * शरणमहं प्रपद्ये इति पूर्वोक्तानुवादत्वेन प्रपत्त्युपश्लिष्टस्यैव द्वयवचनस्यात्र विव-

क्षितत्वात् । येन केनापीत्यस्य तु * आर्तो वा यदि वा दृप्तः, * मित्रभावेन संप्राप्तम्, * विभीषणो वा सुग्रीव यदि वा रावणः स्वयमित्याद्युक्ताधिकारिविशेषानियमे तात्पर्यम् । शरण्यस्य प्रपन्नेष्वादरातिशयादीदृशव्याजमात्रानुभाषणमिति केचित् । एतेन जीवव्यापारनिरपेक्षमोक्षप्रदानादिपक्षाश्च निरस्ताः ।

इतः परं त्वत्प्रवृत्त्यन्तरमनपेक्षितमित्याह—**केवलमिति** ॥ **मदीययैव**—नान्यदीयया, न सहकार्यन्तरापेक्षयेति भावः । दयाऽत्र प्रपत्त्युल्लसिता रक्षणेच्छा । प्रपत्तिजनितप्रसादवैशिष्ट्ये सत्यपि सहजदयायाः प्राधान्यमिह सूचितम् । कर्मणां सुखदुःखजननशक्तिवत् तिरोधायकत्वादिशक्तिरपि निवृत्तेत्यभिप्रायेण निःशेषशब्दः । तेन अशेषत इत्युक्तस्यानूक्तिः । हेतुभूतपापादिसद्भावे पुनरपि विघ्न उत्पद्येतेति तत्परिहारार्थमुक्तम्—**सहेतुकेति** ॥ विघ्नाः पूर्वोक्ताः । एवमनिष्टनिवृत्तिरुक्ता; अथेष्टप्राप्तिं वदन् प्रथमं * तेषां ज्ञानी इत्यादिप्रार्थितज्ञानपूर्वकपरभक्त्यादिप्रदानमाह—**मत्प्रसादलब्धेति** ॥ इह हि परभक्त्यादिवचनं तत्पूर्वभाविज्ञानविशेषस्याप्युपलक्षणम् । अत्र **प्रसाद**शब्दः प्रपत्तिजनितप्रसादनिरस्तप्रतिबन्धनिरुपाधिकसौहार्दपरः । एवं * मत्प्रसादादेव इति वक्ष्यमाणेऽप्यवधारणेन सहकारिनैरपेक्ष्यं द्योत्यते । **मत्स्वरूपे**त्यादिक्रमुत्तरखण्डस्थनारायणशब्दार्थः । **विभूति**शब्दोऽत्र नित्यविभूतिविषयः । उपायदशायां शास्त्रविहिततत्तत्स्थानगुणादिपरिच्छिन्नस्वरूपाद्यनुभवाद्व्यावृत्त्यर्थं यथावस्थितविस्तारशब्दौ; आरोपशङ्कानिवृत्त्यर्थं वा यथावस्थितशब्दः । हेत्वभावादत्र भ्रमाभावः । एवं सर्वविशिष्टपरमभोक्तव्यसाक्षात्कारे नारशब्दार्थस्वस्वरूपाविर्भावमपि स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमनिवृत्तिपूर्वकतद्भोक्तृत्वज्ञापनाय पृथगाह—**अपरोक्षेति** ॥ नियाम्यत्वोक्त्या अत्र व्याप्यत्वधार्यत्वे चाकृष्टे, * अन्तः प्रविष्टः शास्ता, * एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इति श्रुत्यनुसारात् । एतेन * स स्वराडित्युक्तेऽपि मुक्ते पारतन्त्र्यादेरनपायो दर्शितः । नियाम्यत्वं चिदचित्साधारणम्; दासत्वं तु चेतनैकनिष्ठम्; तयोः प्रातिस्विकं प्रयोजनमाह—**मदेकानुभवो मद्दास्यैकप्रिय इति** ॥ ऐश्वर्यकैवल्यपुरुषार्थयोरिव स्वनिष्ठतया स्वतन्त्रतया च स्वात्मानुभवप्रसङ्गोऽपि तदा न संभवतीत्यभिप्रायेण मदेकानुभवशब्दः । स्वाम्यनुभवप्रधाने स्वानुभवे स्वप्राधान्यगन्धनिवृत्त्यर्थं मद्दास्यैकप्रिय इत्युक्तम् । पूर्वोक्तमेवानुभवं परमपुरुषार्थत्वप्रतिबोधाय पूर्ववत् पौष्कल्यादिभिर्विशिनष्टि—**परिपूर्णेति** ॥ तत्प्रयुक्तप्रीतिं तत्परिवाहं च * नित्यकिङ्करो भवानीत्यन्तेन प्रार्थितं प्रयच्छति—**तथाविधेति** ॥ १७ ॥

**एवंभूतोऽसि ॥ १८ ॥**

ईदृशस्वकैङ्कर्यसाम्राज्ययोग्यतामलभ्यलाभत्वव्यक्त्या संतोषार्थमुत्तरकृत्यविधानार्थं चानुवदति—**एवंभूतोऽसीति** ॥ प्रकृत्यात्मविवेकाद्धार्मिकः, परावरतत्त्वविवेकाद्भागवतः, परावरपुरुषार्थविवेकादनन्यप्रयोजनः, स्वपराधिकारविवेकादनन्यसाधनः, पूर्वोक्तात् * अस्तु ते इत्यनुग्रहविशेषात्प्रमितानुष्ठितभरन्यासः, ततश्च मया स्वीकृतभरः, * नित्यकिङ्करो भवेति दत्तवरश्च त्वं मुक्तप्रायोऽसीत्यर्थः । आख्यातेन * सन्तमेनमित्यवस्था व्यज्यते । यद्वा नित्यकिङ्करो भवेति सत्यसंकल्पेनोक्ते तेन वा स्वेन वा प्रत्याख्यातुमशक्यत्वे निवारकान्तराभावे च तदानीमेव तथाविधात्मानमपश्यतः क्रमात्तत्सिद्धिमाह—**एवमिति** ॥ एवं भवितुमुपक्रान्तोऽसीत्यर्थः ॥ १८ ॥

**आध्यात्मिकाधिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्स्व ॥ १९ ॥**

भयावहायां देहेन्द्रियादिविशिष्टदशायां कथं कुत्र च निरपायः कालक्षेप इत्यत्राह—**आध्यात्मिकेति** ।। अत्रत्योत्कटसुखस्याप्युपलक्षणार्थमिह दुःखोक्तिः । श्लोकत्रयाद्युक्तज्ञानभक्तिशालिनं प्रति प्रातिकूल्याविशेषाद्वा दुःखशब्देन सुखस्यापि संग्रहः । गन्धशब्देन वा तद्विवक्षा । तेन सर्वसाधारणः क्षुदादिर्वाऽभिप्रेतः । दुःखस्य द्वयार्थानुसन्धानं प्रति विघ्नत्वं स्यात्, अतस्तद्राहित्योक्तिः । इह च पूर्णविवेकानामाभिमानिकं दुःखं सुखं च नास्ति । सांस्पर्शिकानां तु प्रारब्धकर्मवशात्संभवतामपि प्रतिदिनं कर्मक्षयमोक्षासक्तिदर्शनप्रीत्या द्वयार्थानुसंधानविघ्नत्वं नातीवास्ति । अतो न प्रत्यक्षादिविरोधः । **त्वम्**—अ[त्रत्य]नन्यज्ञानभक्त्यादिप्रार्थनावान् । उच्चारणं प्राधान्येन स्तोतुमर्थानुसन्धाने सहशब्दः । एवमर्थानुसंधानेनेत्यन्वयः । **एवम्**—* अखिलहेयमित्याद्युक्तविशदप्रकारेणेत्यर्थः । एतच्चात्र कृतकृत्यत्वप्रतिसंधानप्रीत्यर्थम्, अस्य च स्वयंप्रयोजनकैङ्कर्यरूपत्वात् । *यन्मुहूर्तमित्यादिन्यायेन भगवदनुभवप्रीत्यनुवृत्त्यर्थं, संभवद्द्वन्द्वतितिक्षार्थं, निर्भरत्वानुसन्धानरसानुवृत्त्यर्थं, निषिद्धकाम्यादिसङ्गनिवृत्त्यर्थं च सदेत्युक्तिः । इदं तु स्वभावार्थशास्त्रप्रासाविरोधेन नेयम्, अन्यथा सर्वप्रमाणविरोधात् । * तस्य तावदेव चिरं यावन्न विमोक्ष्ये *प्रारब्धमात्रं भुक्त्वात्र तत्त्ववित्सुखमाप्नुयात् । * प्रारब्धमेव भोक्तव्यं कर्म ब्रह्मविदामपि । * अनारब्धकार्ये एव तु पूर्वे तदवधेः इति दर्शितः प्रक्रान्तकर्मफलभोगोऽपि प्रपन्नस्य यथाभिलाषं प्रपत्त्युत्पत्तिशरीरावधिरित्यभिप्रायेणाह—**यावच्छरीरपात**मिति ।। आर्तितारतम्यादत्रत्यस्थितिनारतम्यम् । **अत्रैव**—अत्यन्तासन्नमत्सेवानुगुणे, नतु मत्कैङ्कर्यविरुद्धदेशेष्वित्यर्थः । अत्रानेकपुराणादिप्रसिद्धश्रीरङ्गोपादानं भागवताभिमतस्वयंव्यक्तादिभगवत्क्षेत्रान्तराणामप्युपलक्षणम् । **सुखमास्स्व**—कृतकृत्यत्वप्रतिसन्धानेन प्रतिदिनं कर्मक्षयदर्शनेन अविलम्बितानायासपरमपुरुषार्थलाभव्यवसायेन विषमधुकल्पवैषयिकरसवैमुख्यहेतुभूतद्वयार्थानुसन्धानसारस्येन च संतुष्टो वर्तस्वेत्यर्थः । स चायमत्रत्यसेवासौकर्यार्थं उपदेशः; सुखी भवेतिवदनुग्रहोक्तिर्वा । एवमर्थानुसंधानद्वयवचनसुखासिकाभिर्मनोवाक्कायानामयोग्यव्यापारनिवृत्तिरपि स्यात् ।। १९ ।।

**शरीरपातसमये तु केवलं मदीययैव दयया अतिप्रबुद्धो मामेवावलोकयन्, अप्रच्युतपूर्वसंस्कारमनोरथः, जीर्णमिव वस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य, तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भविष्यसि ।। २० ।।**

भवत्वेवं कृतकृत्यस्योत्तरकृत्यं फलम् । देहपातदशा कीदृशी? परमफलं च कदा? इत्याकाङ्क्षायां प्रारब्धशरीरानुवर्तकप्रतिबन्धनिवृत्तौ दयार्णवस्य दिव्यशक्तेः स्वस्य पूर्वकृतरक्षासंकल्पानुगुणमन्यैरनिवार्यमुत्तरकृत्यमाह—**शरीरपातसमय** इति ।। *वाङ्मनसीत्यादिश्रुतिसिद्धाया मनःसंपत्तेः पूर्वावस्थायामित्यर्थः । एतेन *निशि नेतिचेदित्याद्युक्तः कालनियमाभावश्च सूचितः, * ततस्तं म्रियमाणं तु इतिवत् । अत्र तुशब्दोऽधिकार्यन्तराद्विशेषमनुग्रहकार्यं द्योतयति; यद्वा काष्ठपाषाणसंनिभतया स्वेन वा परैर्वा तदानीं प्रबोधस्य दुःसंपादत्वम् । एवं तुशब्दद्योतितमेव विशेषं व्यनक्ति—**केवल**मित्यादिना ।। **केवलं**—पूर्वाभ्यासानपेक्षम्, * यं योगिनः इत्याद्युक्ततादात्विकस्वयत्ननिरपेक्षं च । **मदीययैव**—मत्स्वभावभूतयैव, नान्यदीयया, नापि पूर्वोक्तक्षेत्रवासद्वयार्थानुसंधानजन्यया, नच तादात्विकप्रार्थनासापेक्षयेत्यर्थः । **अतिप्रबुद्धः**—शरीरपातात्पूर्वकाल इव ज्ञानपौष्कल्यवान् । यद्वा न केवलं संकोचाभावमात्रम्, किंतु प्रत्यूषप्रकाशकल्पपूर्वावस्थातोऽति-

शयोऽपि स्यादित्यर्थः । अपरिच्छिन्नस्तु प्रबोधो विशिष्टदेशगत्यनन्तरभावी । अन्तिमदशायामादिभरतादिवदन्यदर्शनं तव न स्यादित्याह—**मामेवावलोकयन्निति** ॥ नित्यमनुचिन्तितं मामेव शुभाश्रयविग्रहविशिष्टं विशदमनुसंदधान इत्यर्थः । अविच्छिन्नसाक्षात्कारं कुर्वन्निति वा, तदानीमवलोकनीयं सर्वं भगवदपृथक्सिद्धतयैव भातीति वा अवधारणस्याभिप्रायः । एवं ज्ञानदर्शने प्रोक्ते; अथ वक्ष्यमाणायाः प्राप्तेः पुरुषार्थत्वाय तदिच्छानुवृत्तिमाह—**अप्रच्युतेति** ॥ भगवानेव मे परमप्राप्य इति शास्त्रजन्यानुभवसंस्कारस्य कालविप्रकर्षकायविश्लेषक्लेशादिभिः प्रच्युतिर्न भविष्यति; तत एव संस्कारमूलः प्र[illegible]ऽपि तदानीं भवतस्त्य[ा]ज्यमानेषु देहतदनुबन्धिषु रागाद्वा, किं भविष्यतीति भयाद्वा न प्रच्यवत इति भावः । * अतिप्रबुद्धः इत्यादिभिः परभक्त्यादित्रयं वा, परमात्मनि विश्रमादनन्तरभाविप्रबोधादिकं वा विवक्षितमिति केचित् ।

लब्धनूतनशुभवस्त्रान्तरस्य जीर्णवस्त्र इव अत्यासन्नदिव्यदेहलाभस्य चिरपरिचितेऽपि भोगायतने जिहासोत्पत्तिमनायासहानप्रीतिं च निदर्शयति—**जीर्णमिव वस्त्रमिति** ॥ * कृतकृत्याः प्रतीक्षन्ते * नोपजनं स्मरन्निदं शरीरमित्यादिभिरभिप्रेतं लब्धपरित्यागक्लेशाभावम्, यमकिंकरादिभयाभावम्, चिकित्सकशल्यप्रयोगन्यायशङ्कितोत्क्रमणदुःखाभावम्, अत्यासन्नपरमपुरुषार्थानुसन्धानहार्दानुग्रहतादात्विकभगवदनुभवातिवाहिकदर्शनजनितहर्षप्रकर्षं च अभिप्रेत्याह—**सुखेनेति** ॥ **इमाम्**—अनाद्यनुवृत्तां भगवत्स्वरूपतिरोधानादिभिरपकारिणीं कारागृहनरकादिवदनुसंहितां दुरत्ययां मदन्यैः त्याजयितुमशक्यां चेति भावः । **प्रकृतिम्**—सततविकारशीलं त्रिगुणद्रव्यम् । उत्क्रान्तिपादे च अर्चिरादिपादे चोक्तं सर्वमभिप्रेत्याह—**स्थूलसूक्ष्मरूपां विसृज्येति** ॥ स्थूलप्रकृतित्यागोऽत्रैव; सूक्ष्मप्रकृतित्यागस्तु * त्रिमात्रभावनातीतो मुक्तये योगिनां नृप । देवयानं परः पन्था योगिनां क्लेशसंक्षयः ॥ इत्याद्युक्तदेवपथेन दिव्यदेशगमनदशायामेव भवति । * एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य *स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा अमृतः संभवतीत्यादिषु ब्रह्मप्राप्तिपर्यन्ताभिधानात् [illegible] । **सुबालोपनिषदि** तु—*अपुनर्भवाय नाड्या कोशं भिनत्ति, कोशं भित्त्वा शीर्षकपालं भिनत्ति, शीर्षकपालं भित्त्वा पृथिवीं भिनत्तीत्यारभ्य * अक्षरं भित्त्वा मृत्युं भिनत्तीत्यन्तेन स्थूलशरीरत्यागपूर्वकतमःपर्यन्तसर्वतत्त्वातिक्रम उक्तः । तदेवं क्रमेण सूक्ष्मप्रकृतिविमोक्षानन्तरं स्वस्यैव प्रसादेन अविलम्बितमनोरथपूर्तिमाह—**तदानीमेवेति** ॥ अपेक्षणीयान्तराभावात् न विलम्ब इति भावः । प्रसाद इह तिरोधायकांशपर्यन्तस्य निग्रहरूपकालुष्यस्य निःशेषनिवृत्त्या सूरिष्विव स्वभावत एवावस्थितं सौहार्दम्; तच्चात्र निर्दुःखनित्यनिरतिशयानन्दमनुभवत्वसावितीच्छैव ॥ २० ॥

## मा ते भूदत्र संशयः ॥ २१ ॥

अत्र तावदस्ति क्षुद्रफलेष्वप्युपायगौरवम्; मोक्षे तु * अनेकजन्मसंसिद्धः * क्लेशेन महता सिद्धैः * क्षपयित्वाऽधिकारान् स्वान् शश्वत्कालेन भूयसेत्यादिभिः कृच्छ्रसाध्यतयोक्ते विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरे गुरूपायसाध्ये न्यासमात्रनिष्ठस्य मादृशस्य निर्यत्नलब्धिवचनमुपच्छन्दनमिति केषांचिच्छङ्का जायेत, अतस्तान् विस्रम्भयितुं भाष्यकारमपदिश्याह—**मा ते भूदत्र संशय** इति ॥ ननूपायलाघवप्राप्यगौरवादिनिमित्तशङ्काविधूननेन महाविश्वासपूर्वकं शरणमुपगतस्य संशयप्रसङ्गाभावादत्र तत्प्रतिषेधो निरर्थकः? मैवम्; तादात्विकमहाविश्वासेनोपाये निष्पन्नेऽपि तस्य फलाविनाभावेऽपि केषांचित्प्रारब्धकर्मविपाकवैचित्र्यात् संशयोऽपि संभवति; न च तेनोपायवैकल्यम्, फलप्रतिबन्धो वा ।

मतिकालुष्यनिवृत्तिस्तु अत्रत्यपरभक्त्यादिवत् स्वयं पुरुषार्थः; अतः प्रसन्नेन भगवता संशयनिवर्तनमुपपद्यत इति। यद्वा, यावत्फललाभं विमर्शदशायामक्षोभणीयो विश्वासो महाविश्वासः; स च तात्कालिक उपायाङ्गम्; पश्चात्तु मदभिप्रायं मद्वाक्यं च परामृशतां मदनुग्रहादेव संशयो न भवत्येवेति ज्ञापनार्थमिह *मा ते भूदित्यादि *निःसंशयः इत्यन्त-मुच्यते इति। **ते**—निश्चितशास्त्रार्थस्य सर्वसुहृदि सर्वशक्तौ च मयि न्यस्तभरस्य च। **अत्र**—मत्प्रयोजनप्रधानायां मन्नित्य-किंकरत्वप्राप्तौ ॥ २१ ॥

***अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन, *रामो द्विर्नाभिभाषते, *सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥ *सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ इति मयैव ह्युक्तम् ॥ २२ ॥**

यद्येतदुपच्छन्दनं तदा मे स्ववचनविरोधः—स्यादित्यभिप्रायेणाह—**अनृतं नोक्तपूर्वं मे** इति॥ इयमनृतानुक्ति-राश्रितविषया, आसुरेषु प्रतारणदर्शनात्। अनुक्तपूर्वमप्यनृतं पश्चात् स्वातन्त्र्यादुच्येतेत्यत्राह—**न च वक्ष्ये कदा-चनेति**॥ इतः पूर्वमिवेति भावः। इदमपि त्वद्वाक्यतया पूर्ववदाशङ्कनीयमित्यत्र *सत्यवादी च राघवः इति प्रसिद्धं लोकोक्तिच्छायया स्वयमेवाह—**रामो द्विर्नाभिभाषत** इति॥ स्वोक्तविरुद्धं नाभिभाषत इत्यर्थः। मम सकृ-दुक्त्यैवार्थिनामपेक्षितार्थः सिध्येदिति वा तात्पर्यम्। एवं सामान्यतः प्रत्यायितस्य प्रकृतपर्यवसानाय रावणानुजपरिग्रहे पार्थोपदेशपर्यवसाने च विशेषत उक्तं श्लोकद्वयमाह—**सकृदेवेति, सर्वधर्मानिति च**॥ वेदवैदिकवाक्यमात्रातिशायि-नोरनयोः शरण्यवाक्ययोरर्थं तदधिकारयोरभिधास्यामः। इदं मोक्षप्रदानोत्सुकेन मयैवोक्तम्; न तु मदादेशभूतदुरधि-गमार्थवेदमुखेन वा संभवद्भ्रमादिदोषपुरुषान्तरमुखेन वेत्याह—**मयैव ह्युक्तमिति**॥ **हिः** प्रसिद्धौ, हेतौ वा॥ २२॥

**अतस्त्वं तव तत्त्वतो मज्ज्ञानदर्शनप्राप्तिषु निस्संशयः सुखमास्स्व ॥ २३ ॥**

**अन्त्यकाले स्मृतिर्या तु तव कैङ्कर्यकारिता। तामेनां भगवन्नद्य क्रियमाणां कुरुष्व मे ॥ २४ ॥**

**॥ इति श्रीभगवद्रामानुजविरचिते गद्यत्रये शरणागतिगद्याख्यं पृथुगद्यम् ॥**

उक्तमेव स्थिरीकरणार्थं संतोषातिशयार्थं च निगमयति—**अत** इति॥ **अतः**—सत्यवादिना सत्यव्रतेन मयो-क्तत्व वाक्यस्य विश्वसनीयतमत्वात्। **त्वम्** प्रामाणिकः। **तव**—*ये प्रपन्ना महात्मानस्ते मे नयनसंपदः इति मत्प्रशंसनीयस्य मत्स्वीकृतभरस्य च। **तत्त्वतः**—संशयविपर्ययराहित्येन। **मज्ज्ञानदर्शनप्राप्तिषु,** यथायोगमत्र परत्र चापेक्षितास्विति शेषः। *निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः। ससंशयान् हेतुबलान्नाध्यावसति माधवः॥ इत्यादिप्रमाणसूचनायाह—**निःसंशय** इति॥ सिद्धस्यैव ज्ञानस्य अनुवृत्तौ संशय इह निवार्यते। अनेनैव निर्भरत्वादि-कमप्याकृष्यते। **सुखमास्स्व** *आध्यात्मिकेत्यादिना पूर्वं मयोक्तमेव तवोचितमिति भावः। *यावच्छरीरपात-मिति पूर्वोक्तस्यानुक्तेरयमभिप्रायः—मत्प्राप्तेः प्रारब्धकर्मप्रतिनियतायुरवसाननिर्बन्धो नास्ति; यावदत्रत्यमदनुभवापेक्षा ताव-दत्र सुखमास्स्व; परिपूर्णानुभवालाभादिह सुखासिकायामप्युद्वेगे सति आयुःशेषशृङ्खलामप्यपोह्य आत्यन्तिकमत्कैङ्कर्याय मत्पदं गमिष्यसि—इति। एतेनानादिकालमाज्ञातिलङ्घनमूलभगवदप्रसादेन संसरतो मे भगवत्कृपामूलसदाचार्याङ्गीकारेण द्वयोच्चारणानूच्चारणपूर्वकस्वरक्षाभरन्यासे सिद्धे, प्रसादनेष्वस्मादभ्यधिकस्याभावात् स्वीकृतभरः श्रियःपतिर्नारायणः काल-

त्रयवर्तिनः सर्वानप्रसादहेतून् यथार्हं क्षान्त्वा, स्वयमेव स्वार्थमेव मां स्वज्ञानदर्शनप्राप्त्यादिप्रदानेन रक्षेदिति विश्वस्तो निर्भरो निर्भयः संतुष्टो भवे[दि]ति निगमितं भवति ॥ २३ ॥ २४ ॥

इति शरणागतिनिगद्यं यतीशरङ्गेशसंलपनरूपम् । व्यवृणुत देशिकदृष्ट्या विमृश्य निश्चित्य वेङ्कटेशकविः ॥

वितमसि निगमान्ते बिभ्रता देशिकत्वं कृतिभिरनुमतेन क्षेमबुद्ध्या मयैवम् ।
यतिपतिपृथुगद्यव्याक्रियायां यथावत्कथितमकथितं च क्षम्यतां नः सयूथ्यैः ॥

**॥ इति रहस्यरक्षायां पृथुगद्याधिकारः प्रथमः ॥**

---

## ॥ श्रीरङ्गगद्यम् ॥

**चिदचित्परतत्त्वानां तत्त्वयाथात्म्यवेदिने । रामानुजाय मुनये नमो मम गरीयसे ॥**

**स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्, क्लेशकर्माद्यशेषदोषासंस्पृष्टम्, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसङ्कल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णवम्, परब्रह्मभूतम्, पुरुषोत्तमम्, श्रीरङ्गशायिनम्, अस्मत्स्वामिनम्, प्रबुद्धनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावोऽहं तदेकानुभवस्तदेकप्रियः परिपूर्णं भगवन्तं विशदतमानुभवेन निरन्तरमनुभूय, तदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥ १ ॥**

**॥ रहस्यरक्षायां मितगद्याधिकारः ॥**

श्रीमल्लक्ष्मणमुनिना शिष्यहितैकाग्रचेतसा कथितम् ।
मितगद्यम[मृ]मितसारं व्यक्तं व्याख्याति वेङ्कटेशकविः ॥

अत्र द्वयार्थानुसंधानरसिकेन भगवता भाष्यकारेण बृहद्गद्ये व्याख्यातमपि द्वयम्, बहुधा श्रोतव्यमिति मन्यमानेभ्यः शिष्येभ्यः पुनरप्याकिंचन्यादिप्रपञ्चनपूर्वकस्वानुष्ठानप्रकाशनप्रक्रिययैव संक्षेपेण व्याक्रियते । तथा हि—अत्रादिमं वाक्यमुत्तरखण्डस्य विवरणम्; द्वितीयं पूर्वखण्डस्य । तेनैवाधिकारविशेषः कार्पण्यरूपमङ्गं च प्रदर्शितम् । तृतीयं तु महाविश्वासाद्यङ्गान्तरज्ञापकम् । अनन्तरं श्लोकद्वयानुपठनेन पूर्वोक्त एवार्थः प्रमाणतः प्रतिष्ठाप्यते । ततः परेण वाक्येन पूर्णप्रपत्त्यकुशले जनेऽपि तत्पूरणानुगुणप्रपत्तिवाक्योच्चारणवैभवं ख्याप्यते । तत्सिद्ध्यर्थं पश्चाच्चतुर्दशभिः संबुद्धिभिर्नारायणशब्दोक्ताः शरण्याकारविशेषाः प्रकाश्यन्ते । *नमोऽस्तु ते इत्यनेन तु प्रकृतोपाये प्राधान्यभूतो न्यासांशः, फलप्रार्थनं वा निगद्यत इति विभागः ॥

(**स्वाधीनेत्यादि** ॥) इह च प्रथमं सविभूतिकस्य भगवतः परमप्राप्यत्वादिसिद्ध्यर्थं चतुर्थ्यन्तपदप्रदर्शितं सर्वेश्वरत्वादिकमाह—**स्वाधीनेति** ॥ स्वशब्देन मुक्तप्राप्यस्य कैङ्कर्योद्देश्यस्य सर्वेश्वरस्य श्रुत्यादिप्रसिद्धं निरतिशयानन्दत्वादिकं

सूच्यते । स्वाधीनशब्देन भगवत्स्वरूपाधीनत्वं तदिच्छाधीनत्वं च विवक्षितम् । सर्वस्य साक्षात्परम्परया वा तदा[श्रय]-श्रिततया तत्स्वरूपाधीनत्वम् । तत्र नित्यानां पदार्थानां तदिच्छाधीनस्वरूपत्वं तदभावे तेषामभावः प्रसजेदिति प्रसङ्ग-मुखेन स्थाप्यम् । तदभिप्रायेण ह्याहुः—*इच्छात एव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः । नित्यं त्वदेकपरतन्त्रनिजस्वरूपा भावत्कमङ्गलगुणा हि निदर्शनं नः ॥ इति । अभाषि च **शारीरकान्ते**—* परमपुरुषभोगो-पकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते इति । अनित्यानां तु तदिच्छाधीनस्वरूपत्वं तदायत्तोत्पत्तिकतया हि प्रसिद्धम् । गुरुद्रव्याणां पतनप्रतिबन्धेन धार्यत्व-मपि तदिच्छाधीनत्वविशेष एव । चेतनशब्द इह जीवविषयः; बद्धमुक्तनित्यरूपेण जीवानां त्रैविध्यम् । अचेतन-शब्दश्चात्र अचिद्द्रव्यपरः । त्रिगुणकालशुद्धसत्त्वरूपेण अचेतनत्रैविध्यम् । द्रव्याणां तदधीनत्वोक्त्या तत्तद्धर्माणां तादधीन्यं कैमुत्यसिद्धमिति तदनुक्तिः । अचेतनद्रव्यस्यापि धर्मभूतज्ञानस्य चेतनग्रहणे विशेषणतयोपात्तत्वादत्र पृथगनु-पादानम् । चेतनमात्रे वा त्रैविध्यान्वयः । चेतनाचेतनानां **स्वरूपं** स्वासाधारणस्वभावैर्निरूप्यं धर्मि, तस्य भेदः तत्तद्व्यक्तितो वर्गतश्च परस्परव्यावृत्तिरूपो धर्मः । **स्थितिः**—कालान्तरेऽपि विद्यमानता; सा च द्रव्याणां स्वरूपेण सर्वकालानुवृत्तिरूपा । तेषां तत्तदवस्थाविशिष्टवेषेण तु कालपरिच्छिन्ना कालतारतम्यवती चेति तद्भेदः । **प्रवृत्तिः**—व्यापारः । निवृत्तिरप्यकरणसंकल्परूपा प्रवृत्तिविशेषः । एतद्भेदस्तत्तत्कार्यादिभिर्द्रष्टव्यः । अत्र स्वेच्छाधीनसर्वत्वोक्त्या स्वार्थसर्वोपादा[न]तृत्वसूचनात् सर्वशेषित्वमपि सिध्यति । तदाहुः—*उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी । इति । एवं भगवतः सर्वाधारत्वादिव्यञ्जनात् तदन्येषां चेतनाचेतनद्रव्याणां तं प्रत्याधेयत्वविधेयत्वशेषत्वनियमेन तदपृथक्सिद्धविशेषणतया तच्छरीरत्वं श्रुतिसिद्धं मुख्यमेव स्थापितं भवति । अत्र च कारणवाक्यार्थः, धर्मधर्मिभेदः, चिदचिद्भेदः, जीवेश्वरभेदः, जीवानामन्योन्यभेदः, तेषां ज्ञातृत्वम्, तत एव कर्तृत्वभोक्तृत्वे, ज्ञातृत्वादेः सर्वथा पराधीनत्वम्, परस्य च विभूतिद्वयवत्त्वं सार्वत्रिकत्रैकालिकसर्वनियन्तृत्वं त्रिविध-परिच्छेदराहित्यम्, कालपरमव्योम्नोस्त्रिगुणविकारातिरिक्तत्वम्, प्राज्ञानधिष्ठितप्रकृतिकारणत्वनिरासादिकं च शारीरक-स्थापितमर्थसिद्धम् ॥

अथ भगवत उक्ताकारान्तर्गतसर्वकारणत्वसर्वनियन्तृत्वादिभिः शङ्कितान् दोषान् परिहरति—**क्लेशकर्मेति** ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च **क्लेशाः** । पुण्यापुण्यरूपं **कर्म** । **आदिशब्देन** *क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः इत्यादिप्रसिद्धविपाकादिसंग्रहः । जात्यायुर्भोगादयो विपाकाः । पूर्वानुभवभाविता आफलोदयं शयानाः संस्कारा आशयाः । कतिपयदोषरहितव्यावृत्त्यर्थमशेषशब्दः । असंस्पृष्टशब्देन स्वभावतोऽनर्हतया कदाचिदपि दोष-स्पर्शो नास्तीति विवक्षितम् । एवं पदद्वयेन * परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे इत्यस्यार्थ उक्तः ॥

**(स्वाभाविकेत्यादि ॥)** अथ *तेजोबलैश्वर्यमित्यादिभिरुक्तान् निरूपितस्वरूपविशेषकधर्मानाह—**स्वाभावि-केति** । स्वाभाविकत्वमिह नित्यत्वम्, अनन्याधीनत्वं च । तेन नित्यानां मुक्तानां च ज्ञानादिभ्य एतज्ज्ञानादेर्व्यव-च्छेदः । तद्बलादिभ्यो व्यवच्छेदस्तु अनवधिकातिशयत्वादपि । स्वापेक्षाया उत्कृष्टावधिरहितोऽतिशयो येषां ते अन-वधिकातिशयाः । **ज्ञानमिह** सर्वविषयनित्यसाक्षात्काररूपम् । **बलम्** अनाघ्रातश्रमप्रसङ्गं सर्वधारकत्वम् । **ऐश्वर्यं** सर्व-नियन्तृत्वम् । **वीर्यं** सर्वोपादानत्वादावपि अविकृतस्वभावत्वम् । **शक्तिः** विश्वोपादानतार्हत्वम्, स्वेतरसर्वदुर्घटनशक्तिर्वा ।

**तेजः** अस्वाधीनसहकारिनिरपेक्षत्वम्, पराभिभवनसामर्थ्यं वा । अत्र व्यूहव्यक्त्यादिक्रमेण ज्ञानबलादिद्वन्द्वत्रिक-निर्देशः । षाड्गुण्यस्य प्रथममुपादानम् अन्येषां गुणानां तदन्तर्भावेन तत्प्राधान्यात् परत्वज्ञापकत्वात् आश्रितानाश्रित-गोचरव्यापारभेदसाधारण्याच्च । अथ षाड्गुण्यविततिरूपाः सौलभ्यज्ञापकाः संश्रितसंग्रहणादौ विशेषत उपयुक्ता गुणा उच्यन्ते । अत्र **सौशील्यं** महतो मन्दैः सह नीरन्ध्रसंश्लेषरसिकता । **वात्सल्यम्** आश्रितेषु दोषतिरस्कारिणी प्रीतिः । **मार्दवम्** अकठिनस्वभावतया सुप्रवेशत्वम्, दण्डनीयेष्वपि सामप्रधानत्वं वा । **आर्जवं** कायवाग्बुद्धिव्यापाराणां परस्परमवि-संवादित्वम् । **सौहार्दं** स्वतः सर्वहितैषित्वम् । **साम्यं** सर्वैरप्याश्रयणीयत्वे समत्वम्, स्वतोऽ[illegible] वा । **कारुण्यं** स्वप्रयोजनान्तरानुद्देशेन परदुःखनिराचिकीर्षा । **माधुर्यम्** उपायदशायामपि रञ्जकत्वेन रसावहत्वम्, द्विषतां जिघांसिता-नामपि दृष्टिचित्तापहारित्वं वा । **गाम्भीर्यं** भक्तानुग्रहादेरगाधत्वम्, आश्रितदोषदर्शनादेः सतोऽपि गोपनेन दुर्ग्रहत्वं वा । **औदार्यं** पात्रलाघवदेयगौरवप्रत्युपकाराद्यनादरेण वितरणशीलत्वम् । **चातुर्यं** [illegible]र्विमुख-वशीकरणविस्रम्भजननसंश्रितदोषाच्छादनविरुद्धानुकूलीकरणादिषु कुशलत्वम् । **स्थैर्यं** शरणागतसंग्रहे दोषप्रदर्शकैः सुहृ-द्भिरप्यकम्पनीयत्वम् । **धैर्यम्** [illegible]ऽप्यभग्नप्रतिज्ञत्वम् । व्यत्ययेन वा [illegible] । प्रबल-प्रतिपक्षोपनिपातेऽपि सावज्ञदृढचित्तत्वं वा धैर्यम् । **शौर्यं** तु भीमेष्वपि परसैन्येषु असहायस्यापि स्वसैन्येष्विव निर्भय-प्रवेशसामर्थ्यम्; तत्र प्रविष्टस्य परनिराकरणपर्यन्तो व्यापारः **पराक्रमः** । सत्यकामसत्यसंकल्पशब्दौ इह भावप्रधानौ, कर्मधारयवृत्तौ वा; **सत्यकामत्वं** नित्यभोग्यवत्त्वम्; **सत्यसंकल्पत्वं** स्वावतारपर्यन्तापूर्वभोग्यसृष्ट्यादावमोघसंकल्पत्वम् । **कृतित्वं** परोपकारकत्वम्, आश्रितरक्षणेन कृतकृत्यत्वं वा, *न मे पार्थास्ति कर्तव्यमित्याद्युक्तं विहितकर्तव्यनिरपेक्षत्वं वा, धर्मसंस्थापकानुष्ठानवत्त्वं वा, परेषां स्वहितप्रवृत्तेः पूर्वमेव कर्तुमुपक्रान्तपरहितत्वं वा, स्वेन कृतं सर्वं प्रति स्वस्यैव शेषित्वं वा । **कृतज्ञता** सकृदञ्जलिकर्तुरपि अनुबन्धिपर्यन्तसंरक्षणाय तत्कृतानुदर्शनम्, अवसरे संश्रितापेक्षितकरणाय स्वकृतप्रत्याख्यानानुदर्शित्वं वा; *शिरसा याचतस्तस्य वचनं न कृतं मयेति ह्याह । आदिशब्देन तत्र तत्र प्रसिद्धा आनृशंस्यादयो गृह्यन्ते । *यथा रत्नानि जलधेरसंख्येयानि पुत्रक इत्यादिसारणाय **असङ्ख्येय**त्वोक्तिः । अत्र दोषा-संस्पृष्टत्वं कल्याणगुणयुक्तत्वं च वदता निर्गुणश्रुतेः पशुच्छागोत्सर्गापवादनयाभ्यां दोषरूपविशेषनिषेधपरत्वं सूच्यते ॥

(**परब्रह्मेत्यादि** ॥) उक्तं सर्वस्मात्परत्वं स्वसाम्यप्रदानपर्यन्तं सौलभ्यं च *नारायणः परं ब्रह्म, *परं ब्रह्म परं धामेत्यादिश्रुतिस्मृतिसिद्धप्रकारेण स्थिरीकरोति—**परब्रह्मेति** ॥ यद्यपि *ब्रह्म परिबृढं सर्वतः इति निरुक्तकारवचनात् ब्रह्मशब्द एव परत्वं वदन्नाम च भवति, तथाऽप्यौपचारिकप्रयोगव्यवच्छेदाय परशब्दः । अत्र बृहति बृंहयतीति निरु-क्तिभ्यां व्यापित्वकारणत्वादिसिद्धया शङ्कितात् दोषान् परिहर्तुं भेदश्रुत्याद्यर्थगर्भया भगवद्गीतानिरुक्तया समाख्यया विशिनष्टि—**पुरुषोत्तममिति** ॥ अनेन ब्रह्मशब्दार्थतया कुदृष्टिविकल्पितप्रकारान्तराणि, तामसतन्त्र[illegible]णि च व्यवच्छिद्यन्ते । अस्य च पञ्चम्यादिविभक्तित्रयेऽपि समासः संभवति । एवं सर्वाधिकत्वेन अस्मदादिभिर्दुरधिगमः स्यादिति शङ्कां परिहरन्, द्वाभ्यां विशेषणाभ्यां सौलभ्यकाष्ठां व्यनक्ति—**श्रीरङ्गशायिनम् अस्मत्स्वामिनमिति** ॥ स्वरूपाद्विग्रहस्य सुखानुसंधेयतया सौलभ्यमधिकम्; तस्मादप्यर्चावतारस्य [illegible] परव्यूहा-दिभ्योऽधिकतमम् । तदा काष्ठाप्राप्तं परत्वमपि तत्र भक्तोपलभ्यं शास्त्रादवसेयम्; यथोक्तम्—*सर्वातिशायि षाड्-गुण्यं संस्थितं मन्त्रबिम्बयोरिति । अत्र मनुष्याणामपि कैङ्कर्योद्देश्यतया अवस्थितस्य निर्भयसेवादियोग्यत्वम् अस्मत्स्वामि-

शब्दाभिप्रेतम् । यथाऽऽहुः—*अर्च्यः सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः इति । यद्वा स्वाचार्यसंतानसेवितत्वेन प्रीत्यतिशयहेतुत्वमभिप्रेत्यात्रास्मत्स्वामिशब्दः । प्राचीनरामानुज इव अहमप्यस्य शीलादिगुणैर्दास्यमुपागत इति च भावः ॥

एवं कैङ्कर्यप्रतिसंबन्धितया अनुभाव्यं निर्धारितम् । अथात्माभिमानानुगुणपुरुषार्थव्यवस्थासिद्ध्यर्थमनुभवितुः किंकरस्य स्वात्मनः स्वरूपाविर्भावदशामाह—**प्रबुद्धेति** ॥ प्रबुद्धं प्रकर्षेणावगतम्, स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमविरहेण सम्यग्दृष्टमित्यर्थः । नियाम्यत्वदासत्वे *स स्वराड्भवति इत्याम्नातायां मुक्तिदशायामप्यनुवृत्ते इति ज्ञापनाय द्वयोरपि नित्यत्वोक्तिः । निरपेक्षस्वातन्त्र्यनिरुपाधिकशेषित्वप्रसङ्गपरिहाराय एकरसशब्दः । अत्रात्मशब्दः स्वविषयः । स्वभावशब्दो यावदात्मभाव्याकारमाह । ईदृशात्मस्वरूपमपि *व्यतिरेकस्तद्भावभावित्वादिति नयेन परमप्राप्यविशेषणतया फलकोटि-निविष्टमनुसंधेयमिति व्यञ्जयितुम् अधिकोऽहंशब्दः । नित्यनियाम्यत्वप्रबोधकाष्ठामाह—**तदेकानुभव** इति ॥ तस्मिन्नेक-स्मिन्नेव प्रधानतया अनुभवो यस्य स तथोक्तः । आविर्भूतस्वरूपस्य हि भगवदपृथक्सिद्धविशेषणतया तत्प्रधानतयैव स्वानुभवम् *अविभागेन दृष्टत्वादित्यसूत्रयत् । नित्यदास्यैकरसत्वाविर्भावस्य फलमाह—**तदेकप्रिय** इति ॥ स एव प्रधानतया नित्यं प्रियो यस्य स तदेकप्रियः । न हि तद्दास्यैकरसस्यास्य *रसो वै सः इत्याद्युक्तस्वाभाविकनिरवधि-कातिशयरसस्वरूपात्तस्मादन्यत्तदानीं प्रधानतयाऽऽस्वाद्यं भवति ॥

तदेवमनुभाव्यानुभवितारावुक्तौ । अथात्रत्यानुभवाद्व्यावृत्तमनुभवप्रकारमाह—**परिपूर्णमिति** ॥ अनन्तगुणविभूति-विशिष्टस्वरूपे अननुभूतांशरहितमित्यर्थः । **भगवन्तं** पराशरादिनिरुक्तप्रकारेणोभयलिङ्गम् । तस्मिन् सामान्यतः सर्वा-कारविषयपरोक्षज्ञानात् परिमिताकारविषयप्रत्यक्षज्ञानाच्च व्यावृत्त्यर्थमाह—**विशदतमानुभवेनेति** ॥ तत्राप्यपरिच्छिन्न-विषयसान्तरप्रत्यक्षाद्व्यवच्छिनत्ति—**निरन्तरमिति** ॥ **अनुभवेन अनुभूय**—अनुभवेन विषयीकृत्येत्यर्थः । तदनुभवेत्यनेन पूर्वोक्तभगवदनुभवानुवादः; यद्वा, तच्छब्देन भगवदनुभवः परामृश्यते; तस्यानुभवोऽपि स्वयंप्रकाशस्य तस्यैव स्वरूपम्; ईदृशोऽयमनुभूयते मयेत्यनुकूलतमभगवदनुभवस्वरूपोल्लेखांशेन जनिता प्रीतिरिहोच्यते । तस्या अनवधिकातिशयत्वेन ऐश्वर्याद्यनुभवजनितप्रीतेर्व्यवच्छेदः । ईश्वरेच्छाधीनेऽपि कैङ्कर्ये स्वप्रीतिकारितत्वोक्तिः नियोगनैरपेक्ष्यं प्रीतेः प्रेरकत्वाति-शयं च व्यनक्ति । कारितशब्द इह शेषतायां वा, तदेकरतौ वा, शेषवृत्तिं प्रति प्रयोज्यकर्तरि किंकरे वा अन्वेतव्यः । अशेषावस्थाशब्देन सेव्यस्य भगवतः परत्वव्यूहत्वादयः, सेवकस्य च मुक्तस्य सदेहत्वविदेहत्वादिरूपा अवस्थाः सर्वा विवक्षिताः । शेषताऽत्र शेषवृत्तिः । अभिमतसर्वशेषवृत्तिषु अप्रतिघातमभिप्रेत्य अशेषशब्दः; स्वामिप्रीत्यर्थत्वाविशेषेण परस्परैकरस्यात्परकृताऽपि शेषवृत्तिः स्वकृतेव भवतीति भावः । ईश्वरस्य मुक्तस्य च स्वच्छन्दानेकदेहपरिग्रहेण वा अनन्तगरुडादिवृत्तिसजातीयकैङ्कर्यसिद्धिः । आत्मा आत्मीयं वा सर्वमशेषशब्देनोच्यते; तदा तस्य शेषता शेषभाव एव । एवंविधायामशेषशेषतायामेव रतिः प्रीतिरिच्छा वा रूपं निरूपकधर्मो यस्य सः अशेषशेषतैकरतिरूपः । **नित्य-किंकरो भवानि**—उत्तरावधिरहितकैङ्कर्यसाम्राज्यवान् भवेयमिति भावः ॥ १ ॥

**स्वात्मनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावानुसन्धानपूर्वकभगवदनवधिकातिशयस्वा-म्याद्यखिलगुणगणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्य-कैङ्कर्यप्राप्त्युपायभूतभक्तितदुपायसम्यग्ज्ञानतदुपायसमीचीनक्रियातदनुगुणसात्त्विकतास्तिक्यादि -**

**समस्तात्मगुणविहीनः, दुरुत्तरानन्ततद्विपर्ययज्ञानक्रियानुगुणानादिपापवासनामहार्णवान्तर्निमग्नः, तिलतैलवत् दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्माया-तिरोहितस्वप्रकाशः, अनाद्यविद्यासञ्चितानन्ताशक्यविस्रंसनकर्मपाशप्रग्रथितः, अनागतानन्तकाल-समीक्षयाऽप्यदृष्टसन्तारोपायः, निखिलजन्तुजातशरण्य, श्रीमन्नारायण, तव चरणारविन्दयुगलं शरणमहं प्रपद्ये ॥ २ ॥**

एवं न्यासोपासनसाधारणाधिकारसिद्ध्यै प्रथमं फलपर उत्तरखण्डो विवृतः। अथोपायपरं पूर्वखण्डं विवृण्वन्, तत्रोत्तमपुरुषविवक्षितमाकिंचन्यरूपं प्रपत्तेर्विशेषाधिकारं [illegible] च व्यनक्ति—**स्वात्मनित्यनियाम्येति** ॥ स्वात्म-शब्दोऽनुसंधातृस्वरूपपरः। अत्र शेषशेषितत्कैङ्कर्यचिन्तनरसेन [illegible] च पूर्वोक्तस्यैव परमपुरुषार्थस्य विस्तरेणानुवादः। नियाम्यशब्दोऽत्र भावप्रधानः। अनवधिकातिशयस्वाम्यम् अनवच्छिन्नसर्वविषयस्वामित्वम्। आदि-शब्देन तथाविधनियन्तृत्वादिसंग्रहः। ऐश्वर्यादिफलान्तरात् कादाचित्कभगवत्कैङ्कर्याच्च व्यावृत्त्यर्थं नित्यकैङ्कर्यशब्दो। उपायभूतेति च्विप्रत्ययरहितप्रयोगेण मोक्षप्रदत्वं भगवद्भक्तेः स्वभावप्राप्तमिति व्यज्यते। भक्तिशब्द इह वेदान्तोदित-सपरिकरभक्तियोगपरः। ज्ञानक्रियाशब्दाभ्यां ज्ञानकर्मयोगौ विवक्षितौ; तयोः सम्यक्त्वं यथावस्थितसकलाङ्गोपसंहार-वत्त्वम्। ज्ञानयोगमन्तरेणापि कर्मयोगेनैवात्मावलोकनपूर्वकभक्तियोगाधिकारारोहणस्य भगव[illegible]-विशेषनियततया तदनादरेणात्र स्वारसिकक्रमनिर्देशः। सात्त्विकता * नित्यसत्त्वस्थः इत्युक्तसत्त्वनिष्ठता; तस्याः फलम् आस्तिक्यादिगुणजातम्, अवस्थाभेदेन तस्या हेतुश्च। * अमानित्वमदम्भित्वम्, * दया सर्वेषु भूतेष्वित्याद्युक्तात्मगुणा-न्तरसंग्रहाय समस्तशब्दः। प्र[illegible]स्त्विह न प्रतिषेधः ॥

(**दुरुत्तरेत्यादि** ॥) एवमुपायान्तरतदुपायपरंपराहानिरुक्ता। अथ पूर्वं पश्चाच्चोपाय[illegible]परंपरान्वय-माह—**दुरुत्तरेति** ॥ दुरुत्तरत्वं भगवत्संकल्पमन्तरेण सनकादिभिरपि लङ्घयितुमशक्यत्वम्। तच्छब्देन पूर्वोक्तभक्त्य-ज्ञानादिपरामर्शः। विपर्ययशब्दोऽत्र विपरीतपरः; स च ज्ञानादिषु त्रिष्वन्वीयते। त्रयाणां हेतुः पापवासना। बीजाङ्कुरन्यायसूचनाय अनादिशब्दः। पापानां वासना स[illegible]हेतुभूतः स्वभावविशेषः। षड्र्मि-संकुलत्वादिविवक्षया महार्णवत्वरूपणम्। एवंविधस्य [illegible]—**तिलतैलवदिति** ॥ दृष्टान्तद्वयेन * दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि। प्रधानेऽवस्थितो व्यापी इति वचनं स्मार्यते। अल्पश्रुतैः पृथक् ज्ञातुम्, अयोगिभिः पृथक् द्रष्टुम्, अनीश्वरैः पृथक्कर्तुं चाशक्यतया **दुर्विवेचत्वोक्तिः**। च[illegible]-ज्ञापनाय त्रिगुणशब्दः। अनुकूलपरिणतेः क्षणमपि [illegible]—**क्षणक्षरणस्वभावेति** ॥ * अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥ व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥ इति परमसंहितोक्तम् **अचेतनप्रकृतिव्याप्ति**शब्दैर्दर्शितम्। प्रकृतौ व्याप्तिरनुप्रवेशः; प्रकृतेर्व्याप्तिः सर्वतः संबन्धः। अत्र तस्या इव तत्संबन्धस्यापि विचित्र[illegible]-न्मायात्वोक्तिः। दुरत्ययभगवन्मायेत्यनेन * मम माया दुरत्यया इति पदत्रयसूचनम्। यद्यप्यात्मस्वरूपं नित्य-तथाऽपि तस्य भगवच्छेषत्वादिविशिष्टाकारगोचरधर्मभूतज्ञाननिरोधमभिप्रेत्य **तिरोहितस्वप्रकाश** इत्युक्तम्। स्वस्वरूप-तिरोस्वप्रकाशम्, धानवचनेन * भगवत्स्वरूपतिरोधानकरीमित्याद्युक्तमप्युपलक्ष्यते ॥

(**अनाद्यविद्येत्यादि ।।**) प्रकृतेस्तिरोधायकत्वं कर्मोपाधिकम् । कर्म च भोगैस्तत्तत्प्रतिपदोक्तप्रायश्चित्तैर्वा निःशेषयितुमशक्यमित्यभिप्रायेणाह—**अनाद्यविद्येति ।।** अत्र अविद्याशब्देन अज्ञानं देहात्मभ्रमादिकं च गृह्यते; तस्याश्च कर्महेतुत्वं रागद्वेषद्वारा । * यद्ब्रह्मकल्पेत्याद्युक्तप्रक्रियया अनाद्यविद्यासंचितत्वेनानन्त्यात् प्रत्येकं प्राबल्याच्च भगवद्व्यतिरिक्तैरशक्यविस्रंसनत्वम् । * पशवः पाशिताः पूर्वं परमेण स्वलीलया । तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ।। इत्याद्युक्तसूचनाय कर्मणः पाशत्वरूपणम् । **प्रग्रथितः** दृढं निबद्धः; * नाभुक्तं क्षीयते कर्म इति हि स्मर्यते । उक्तप्रतिबन्धकभूयस्त्वात् * त्वत्पादकमलादन्यदित्याद्युक्तप्रकारेण कालान्तरेऽप्युपायान्तरसंभावनां प्राङ्न्यायेन प्रतिषेधति—**अनागतेति ।।** वक्ष्यमाणश्रीमत्त्वनारायणत्वाभ्यां फलितम् * सर्वस्य शरणं सुहृत्, * देवानां दानवानां च, *सर्वलोकशरण्याय, * विभीषणो वा सुग्रीव यदि वा रावणः स्वयमित्यादिप्रसिद्धं स्वसंग्रहोपयुक्तं स्वभावमाह—**निखिलजन्तुजातशरण्येति ।।** हिरण्यगर्भादीनामपि संग्रहाय निखिलशब्दः; तेऽपि हि कर्माधीनजन्मभागितया जन्तवः । *पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ।। * एतन्निष्ठस्य मर्त्यस्य मुक्तिर्हस्तस्थिता सदा । तत्संबन्धिन एवापि मुक्तिमेष्यन्ति वै ध्रुवमित्याद्यर्थमभिप्रेत्य जातशब्दः । स चात्र गुणप्रधानतया अन्वितव्रातपरः । पूर्वखण्डपदक्रमानुसारेण श्रीमदित्यादीनि पदानि । श्रीमच्छब्देन * लक्ष्म्या सह हृषीकेशः इत्याद्युक्तं सूच्यते । सर्वशरण्यत्वौपयिकसंबन्धगुणविशेषादिप्रदर्शनाय नारायणशब्दः । कृपोत्तम्भकत्वातिशयादौचित्याच्च चरणग्रहणम् । उपायदशायामपि भोग्यत्वसूचनाय अरविन्दत्वरूपणम् । शरणशब्द इहोपायपरः । उत्तमपुरुषविवक्षिताधिकारिविशेषव्यञ्जनाय अहंशब्दः; अधिकारविरहादुपायान्तरेषु निराशः, प्रत्यवायभयादिदानीमपायेभ्य उपरतः, शरण्यगुणविवेकादतिशङ्कानिर्मुक्तः, संसारे दोषदर्शनात्परित्यक्तप्रयोजनान्तरतदुपायः, परमपुरुषार्थसङ्गात्प्रार्थनान्वितभरन्यासोद्यतश्चेति भावः । **शरणं प्रपद्ये** उपायतया आश्रयामि । अकिंचनोऽनन्यगतिरहं श्रीमति नारायणे स्वात्मरक्षाभरं निक्षिपामीत्युक्तं भवति । अत्र सविशेषणनारायणशब्देन विरोधिभूयस्त्वप्राप्यगौरवोपायलाघवादिमूलशङ्कानिरासहेतवः शरण्याकारा विवक्षिताः ।। २ ।।

**एवमवस्थितस्याप्यर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभवप्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये ।। २ ।।**

अथ तत्फलितं सोपसर्गधातूक्तम् * रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम् । गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनमिति विभज्य निर्दिष्टमङ्गद्वयम् * प्रार्थनामात्रसंतुष्टो जन्तोर्यच्छति वाञ्छितम् । इति निश्चित्य भगवत्प्रार्थना शरणागतिः ।। इत्युक्तप्रकारविशेषोपलक्षितप्रकारि वैशिष्ट्याभिप्रायेणाह—**एवमिति ।।** एवमवस्थितस्येत्यनेन अधिकारवैगुण्यं विरोधिभूयस्त्वं च पूर्ववाक्योक्तमेव शरण्यगुणप्रकर्षव्यञ्जनायानूदितम् । अर्थित्वमात्रेणेति उपायलाघवोक्तिः; अहृदयप्रार्थनावाक्यमात्रमपि * नेहाभिक्रमनाशोऽस्ति इति न्यायात् अन्ततः कार्यकरमिति भावः । अथ वा, अत्र सकृत्कर्तव्यभरन्यासलक्षणतया सद्यः स्वाभीष्टसिद्धिः । स्वानुभवप्रीत्येत्यादिना प्राप्यगौरवप्रकाशनम् । उक्तैर्हेतुभिः संभवन्तीं शङ्कामपाकर्तुं परमकारुणिको भगवानिति सुलभत्वपरत्वसूचकपदद्वयोक्तिः; ईदृशस्य हि सर्वविरोधिनिवर्तनार्हता । समर्थस्य निर्दयत्वे दयालोश्चासमर्थत्वे शरण्यत्वं न स्यादिति तत्सिद्ध्यर्थमुभयोक्तिः । स्वानुभवेत्यत्र स्वशब्दः परमात्मविषयः । ऐकान्तिकत्वम् अनन्यविषयत्वम् । आत्यन्तिकत्वमिह फलान्तरोपाधिकनिवृत्तिरहितत्वम्, अत एव पश्चाद्याव-

त्कालमनुवर्तमानत्वं वा । दास्यकिंकरताशब्दाविह वृत्तिपरौ । रतिशब्देन विश्वासस्य महत्त्वरूपप्रकारोऽभिप्रेतः । प्रार्थनाशब्दस्य इच्छामात्रेऽपि प्रयोगसंभवात् तद्व्यावृत्त्यर्थम् *तदेकोपायता याच्ञेत्युक्तयाचनरूपत्वं व्यञ्जयितुं द्विकर्मकप्रयोगः । सर्वस्य प्रार्थितप्रदानसामर्थ्यम्, कैङ्कर्यप्रतिसंबन्धिनस्तस्योभयलिङ्गत्वं च ज्ञापयितुम्—**भगवन्त**मित्युक्तम् । अस्मिन् वाक्ये प्रातिकूल्यवर्जनस्य च आनुकूल्यसंकल्पस्य चार्थसिद्धत्वमवगन्तव्यम् ॥

**तवानुभूतिसंभूतप्रीतिकारितदासताम् । देहि मे कृपया नाथ न जाने गतिमन्यथा ॥ ४ ॥**

उक्तप्रकारसाध्यसाधनरूपमर्थद्वयं व्याख्येयक्रमेण सुखप्रतिपत्त्यर्थमैतिहासिकश्लोकद्वयेन स्ववाक्यायमानेन संक्षिप्याह—**तवेति** ॥ यद्यपि प्रथमश्लोकेऽपि पूर्वार्धे फलमुपादीयते, तथाऽप्यसौ देहीत्युक्तप्रार्थनाप्राधान्यादुपायपरः । अत्र दासताशब्देन दासवृत्तिर्विवक्षिता, दासभावमात्रस्य च नित्यसिद्धत्वेन [illegible] । **मे** अनन्यप्रयोजनस्य अनन्योपायस्य च । कृपया नाथेति पदाभ्यां गुणविशेषसंबन्धविशेषविशिष्टस्योपायभाव इति व्यज्यते; नाथशब्दो हि नाथ्यत इति व्युत्पत्त्या रक्षणार्थं प्रार्थनीये स्वामिनि रूढः । **न जाने गतिमन्यथा** उक्तप्रकारात्प्रपत्तिमात्रवशीकार्यात् त्वत्तोऽन्यथाभूतं मदर्हमुपायं सर्वशास्त्रपरामर्शेऽपि न पश्यामि, देवतान्तराणां साक्षान्मोक्षप्रदत्वाभावात् मोक्षोपायतया चोदितस्य त्वदुपासनस्य मया दुःसाधत्वादिति भावः । यद्वा अन्यथेत्यनेन *त्वय्यदातरीति विवक्षितम् ॥

**सर्वावस्थोचिताशेषशेषतैकरतिस्तव । भवेयं पुण्डरीकाक्ष त्वमेवैवं कुरुष्व माम् ॥ ५ ॥**

एवं प्रार्थिते कैङ्कर्यरूपे पुरुषार्थे प्रीतिशब्दोक्तं हेत्वंशं विशिंषन्, स्वाभीष्टप्रदाने स्वप्रयत्नान्तरनैरपेक्ष्यं चापेक्षते—**सर्वेति** ॥ सर्वावस्थाशब्दशेषताशब्दौ पूर्वोक्तार्थौ । तत्तद्दशायां स्वाम्यभिमतप्रकार उचितशब्दः । *जायमानं हि पुरुषम्, *कृपामयमपाङ्गं ते सकृन्मयि निपातय इत्याद्युक्तेन सत्त्वोन्मेषहेतुना कटाक्षविशेषेण मामेवं कुरुष्वेत्यभिप्रायेणोक्तम्—**पुण्डरीकाक्षेति** ॥ यद्वा *पुण्डरीकं परं धाम इत्यादिनिरुक्तेनानेन नाम्ना परमपदवासिनः परिचरणं प्रार्थ्यत इति सूच्यते । त्वदितराशक्येऽस्मिन्नर्थे त्वयि च निरपेक्षोपाये किमीदृशभरन्यासरूपव्याजातिरिक्तमत्प्रयत्नेनेत्यभिप्रायेणाह—**त्वमेवेति** ॥ **त्वं** सर्वज्ञः सर्वशक्तिः परमकारुणिकः । **माम्** आकिंचन्यानन्यगतित्वार्थित्वशालिनम् । ञितोर्धात्वोरिह देहि कुरुष्वेति परस्मैपदात्मनेपदाभ्यां स्वस्य भगवतश्च यथार्हं क्रियाफलान्वयः सूच्यते ॥

**एवंभूततत्त्वयाथात्म्यावबोधतदिच्छारहितस्याप्येतदुच्चारणमात्रावलम्बनेनोच्यमानार्थपरमार्थनिष्ठं मे मनस्त्वमेवाद्यैव कारय ॥ ६ ॥**

नन्विह शरण्यशरणागतितत्फलविशेषनिर्धारणपूर्विका फलकामना हि अधिकारिविशेषणम्, न पुनस्तद्वत इव तथाविधतद्वचनमात्रमित्यत्र *अनिच्छन्नप्येवम् इति श्लोकोक्तप्रकारेण सप्रश्रयं प्रतिवक्ति—**एवंभूतेति** ॥ तदिच्छेति इच्छाविषयत्वेन परामृश्यमानार्थत्वात् तत्त्वशब्द इह पुरुषार्थपरः, पुरुषार्थविशेषनिष्कर्षाय जीवात्मपरमात्मतत्त्वपरो वा । अवबोधेच्छा वा तदिच्छेत्युच्यते; तदा पुरुषार्थेच्छाविरहः कैमुत्यात्सिध्यति । श्रियःपतेस्तव प्रसादादद्य साधिकारोऽसि, निरधिकारत्वेऽपि लब्धव्याजेन त्वया शेषपूरणं कार्यमिति द्योतयितुम् अपिशब्दः । एवमधिकारवैकल्यमङ्गवैकल्यमङ्गिवैकल्यं चान्वारुह्योक्तम्—उच्चारणमात्रेति । वैषम्यदोषप्रसङ्गपरिहारहेतुस्तव सिद्ध इत्यभिप्रायेण अवलम्बनशब्दः । उच्यमानार्थः उपायोपेयरूपः । एतच्छब्दोऽप्यत्र तद्विषयः । अन्यतरविषयत्वेऽपि तदितर-

स्यार्थोत्सिद्धिः। परमार्थनिष्ठत्वम् अज्ञानसंशयविपर्ययरहितव्यवसायानुवृत्तिमत्त्वम्। **मे**—* सकृदुच्चारो भवति, * सकृदुच्चरितं येन, * भव शरणमितीरयन्ति ये इत्याद्युक्तवचनमात्रधनस्य त्वदायत्तसर्वसिद्धेः। **मनः**—* चञ्चलं हि मनः कृष्ण, * मनो दुर्निग्रहं चलम्, *बन्धाय विषयासङ्गीत्याद्युक्तदोषमपि हृषीकेशेन त्वया अनुगृहीतानां सम्यङ्मननसाधनम्। शरण्यस्यापेक्षणीयान्तराभावम्, आत्मनस्त्वरातिशयं च व्यनक्ति—**त्वमेवाद्यैवेति**॥ कारयेत्यनेन प्रपत्तावपि स्वस्य प्रयोज्यकर्तृत्वम्, अध्यात्मशास्त्रैराचार्यमुखेनान्तर्यामितया च भगवतः प्रयोजककर्तृत्वं च प्रकाश्यते। अविकलप्रपत्तिप्रयोगस्यापि भाष्यकारस्येदं वाक्यं विकलप्रयोगाणामन्येषामपि शरण्यानुकम्पया क्षिप्रमुपायपूर्तिः स्यादिति ख्यापनार्थम्॥

**अपारकरुणाम्बुधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकमहोदधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, सत्यकाम, सत्यसङ्कल्प, आपत्सख, काकुत्स्थ, श्रीमन्, नारायण, पुरुषोत्तम, श्रीरङ्गनाथ, मम नाथ, नमोऽस्तु ते॥ ७॥**

॥ इति श्रीभगवद्रामानुजविरचिते गद्यत्रये श्रीरङ्गगद्यम्॥

अथाधिकारोपायफलप्रदानेषु यथार्हमुपयुक्तान् भगवतः प्रकारान् वदन्, प्रथमं सर्वोपयोगिगुणविशेषप्रकर्षमाह—**अपारेति**॥ स्वस्मिन्नपि व्याप्तिमभिप्रेत्य अपारत्वोक्तिः; तत्फलितं स्वेनाप्याश्रयणीयत्वमभिप्रेत्याह—**अनालोचितेति**॥ जातिगुणादिनिकर्षानादरेण सर्वैः शरण्यतया वरणीयेत्यर्थः। अनेन प्रपत्तेः सर्वाधिकारत्वं दर्शितम्। कारुणिकोऽपि यदि विषमः स्यात्, समोऽपि यदि निर्घृणः स्यात्, न तदा सर्वशरण्यः स्यादिति तदर्थमुभयोक्तिः। शरणागतिसमनन्तरलक्षणीयौ गुणावाह—**प्रणतार्तिहर आश्रितवात्सल्यैकमहोदधे** इति॥ प्रणता इह प्रकृष्टप्रह्वीभावयुक्ताः प्रपन्नाः, तेषां तत्तदभिमतालाभनिमित्तामार्तिं हरतीति प्रणतार्तिहरः। अनेन तु प्रपत्तेः सकलफलप्रदत्वं च सूच्यते। प्रणतशब्दस्य प्रह्वीभावमात्रपरत्वे तदार्तिहरणादल्पप्रयत्नप्रसाध्यत्वं प्रकाश्यते। वात्सल्येन गुणान्तरतिरस्कारमभिप्रेत्य एकशब्दः, येन सर्वज्ञोऽप्यविज्ञातेव स्वतन्त्रोऽप्यस्वतन्त्र इव स्यात्। कारुण्यादिसद्भावेऽप्यज्ञस्यापूर्णस्याशक्तस्य च निरपेक्षरक्षकत्वं न स्यात्; अतस्तत्सिद्ध्यर्थं गुणत्रयम् अनवरतेत्यादिभिरुच्यते। अनवरतनिखिलशब्दाभ्यां ज्ञानस्य कालतो विषयतश्च निःसकोचत्वोक्तिः; मम अनिष्टनिवर्तनेष्टप्रापणोपयोगिष्वधिकारादिषु किंचिदपि कदाचिदपि तवाज्ञातं नास्तीति भावः। न च तव मादृशाकिंचनपरित्यागहेतुभूतप्रत्युपकारपूर्वोपकारादिप्रयोजनान्तरसापेक्षत्वं गुणवैकल्यं वा कदाचिदप्यस्ति; अतो मद्रक्षणेन स्वगुणान् संरक्षेत्यभिप्रायेणाह—**सत्यकामेति**॥ नित्यभोग्यानन्तकल्याणगुणादिविशिष्टेत्यर्थः। संकल्पमात्रसाधितजगत्स्रष्ट्यादेस्तव मद्रक्षणेऽपि न हि संकल्पादतिरिक्तं संपादनीयमित्यभिप्रायेणाह—**सत्यसंकल्पेति**॥ अमोघसंकल्पेत्यर्थः; त्वयैव ख्यापितं प्रपन्नविषयं त्वद्व्रतं न कैश्चिदपि प्रतिहन्तुं शक्यमिति भावः। उक्तगुणवर्गहेतुकद्रौपदीगजेन्द्रादिसंरक्षणप्रकारं तद्वत्स्वस्याप्यापत्प्रशमनायोद्घाटयति—**आपत्सखेति**॥ आपदि सखा भवतीत्यापत्सखः; सखेव प्रीतिविश्वासगोचरः संरक्षकश्चेति भावः। तदेतत् निषादवानरराक्षससर्वजातिसुलभे सकृत्प्रपन्नसंरक्षणव्रतिनि सर्वलोकशरण्ये विषयवासमात्रसंरक्षितजङ्गमस्थावरजन्तुजाते अवतारविशेषे सुव्यक्तमित्यभिप्रायेणाह—**काकुत्स्थेति**॥ अनेन * वधार्हमपि काकुत्स्थः कृपया पर्यपालयदित्यादिवाक्यमपि सार्थ्यते। अस्य सापराधेष्वप्याश्रितेषु निग्रहोष्मलतानिवारिकया सहधर्मचारिण्या नित्ययोगमाह—**श्रीमन्निति**॥ परहितेष्वपि स्वार्थप्रवृत्त्यनुगुणसंबन्धादिविशेषं व्यनक्ति—**नारायणेति**॥ इदं च पदद्वयं व्याख्येयगतविशिष्टसिद्धोपायोपेयप्रकाशकम्। नारायणशब्दवाच्यजगत्संबन्धादिशङ्कितदोष-

निवृत्त्यर्थं पञ्चदशाध्यायोक्तं काष्ठाप्राप्तं परत्वरूपं वैलक्षण्यं समाख्याति—**पुरुषोत्तमेति** ॥ पुरु सनोतीति पुरुषशब्द-व्युत्पत्त्या बहुप्रदेषूत्तमत्वं वा विवक्षितम्—स्वाश्रितेभ्यः स्वात्मानमपि सविभूतिकं ददातीति । सर्वापेक्षितसाधकसेवानु-गुणां सौलभ्यकाष्ठां सूचयति—**श्रीरङ्गनाथेति** ॥ उक्तं चार्चावतारं प्रस्तुत्य भगवता **शौनकेन**—* तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीमिति । **श्रीपौष्करे** तु अर्चावतारस्योपायविरोधिवर्गनिवर्तक-त्वमपि दर्शितम्—* संदर्शनादकस्माच्च पुंसां संमूढचेतसाम् । कुवासना कुबुद्धिश्च कुतर्कश्च कुनिश्चयः ॥ कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेदिति । स्थानविशेषोऽप्यत्र सेवकानां सत्त्वोन्मेषहेतुत्वाभिप्रायेणोपात्तः । स्वयंव्यक्तसैद्ध-वैष्णवरूपभगवत्क्षेत्रवासिनामपि फलविशेषः प्रदर्शितः **श्रीसात्त्वते**—*दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कलुषैर्वृतम् । तदन्त-काले संशुद्धिं याति नारायणालये ॥ इति । तत्रापि स्वाचार्यपरम्पराचिरसेवनजनितप्रसादातिशयात् स्वदोपानादरेण स्वस्यैवंविधावस्थाप्रदत्वेन प्रार्थितपूरणानुगुणतामभिप्रेत्याह—**मम नाथेति** ॥ स्वापेक्षितसिद्ध्यर्थं याचनीयः स्वामी नाथः । एवमभिमुखीकृते भगवति प्रकृतोपायस्य भरन्यासरूपं प्रधानांशं दमयन्त्यादिवृत्तान्तेषु शरणागतिविषयतया प्रसिद्धेन भगवच्छास्त्रोक्तस्थूलसूक्ष्मादियोजनवता नमःशब्देन निगमयन्, प्रयुज्यमानः सोऽयमुपायस्त्वच्छेषतयैव स्वीक्रियता-मित्यभिप्रायेणाह—**नमोऽस्तु ते** इति ॥ यद्वा अत्र परत्र चापेक्षितं निर्ममत्वसंस्कृतं कैङ्कर्यं नमःशब्दाभिप्रेतम् । अस्त्विति आशासनम् । **ते** इत्यत्र प्रकृत्यंशेन प्राप्यत्वप्रापकत्वशेषित्वादिशालितया निरुपाधिकनमःप्रयोगयोग्यत्वमभि-प्रेतम् । चतुर्थी चात्र तादर्थ्यपरा । इदमेव वाक्यम् [आवृत्त्या] आवर्त्यमानं पृथुगद्योक्तस्य प्रतिवचनस्य संग्रहोऽपि भवति; सूत्रादिष्विव प्रयोजनप्रकर्षे सत्यावृत्तेरभियुक्तसंमतत्वात् । तत्रायमर्थः—मत्प्रपन्नस्य ते यथामनोरथं मत्कैङ्कर्यं भवत्विति । तदेवं रहस्यत्रयोक्तशरण्यशरणागतितत्फलविशेषाः संदर्शिताः ॥

यदत्र संग्रहेणोक्तमनुक्तमपि किंचन । बृहद्गद्याधिकारे तद्व्यक्तं प्रत्यवमृश्यताम् ॥

**॥ इति रहस्यरक्षायां मितगद्याधिकारः समाप्तः ॥**

श्रीः

# ॥ श्रीवैकुण्ठगद्यम् ॥

यामुनार्यसुधाम्भोधिमवगाह्य यथामति । आदाय भक्तियोगाख्यं रत्नं संदर्शयाम्यहम् ॥ १ ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्, क्लेशकर्माद्यशेषदोषासंस्पृष्टम्, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवम्, परमपुरुषम् भगवन्तं नारायणं स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य, ऐकान्तिकात्यन्तिकतत्पादाम्बुजद्वयपरिचर्यैकमनोरथः, तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः, तस्यैव भगवतो नारायणस्य अखिलसत्त्वदयैकसागरस्य अनालोचित [गुणागण] गुणगणाखण्डजनानुकूलामर्यादशीलवतः, स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य, आश्रितवात्सल्यैकजलधेः, भक्तजनसंश्लेषैकभोगस्य, नित्यज्ञानक्रियैश्वर्यादिभोगसामग्रीसमृद्धस्य महाविभूतेः श्रीमतश्चरणारविन्दयुगलमनन्यात्मसंजीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ॥ २ ॥

ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत् ॥ ३ ॥

चतुर्दशभुवनात्मकमण्डं दशगुणितोत्तरं चावरणसप्तकं समस्तं कार्यकारणजातमतीत्य वर्तमाने, परमव्योमशब्दाभिधेये, ब्रह्मादीनां वाङ्मनसागोचरे, श्रीमति वैकुण्ठे दिव्यलोके, सनकविधिशिवादिभिरप्यचिन्त्यस्वभावैश्वर्यैर्नित्यसिद्धैरनन्तैर्भगवदानुकूल्यैकभोगैर्दिव्यपुरुषैर्महात्मभिरापूरिते, तेषामपि इयत्परिणामम् इयदैश्वर्यम् ईदृशस्वभावमिति परिच्छेत्तुमयोग्ये दिव्यावरणशतसहस्रावृते, दिव्यकल्पकतरूपशोभिते, दिव्योद्यानशतसहस्रकोटिभिरावृते, अतिप्रमाणे दिव्यायतने, कस्मिंश्चिद्विचित्रदिव्यरत्नमयदिव्यास्थानमण्टपे, दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशोभिते, दिव्यनानारत्नकृतस्थलविचित्रिते, दिव्यालङ्कारालंकृते, परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैर्दिव्यपुष्पैः शोभमानैर्दिव्यपुष्पोपवनैरुपशोभिते, सङ्कीर्णपारिजातादिकल्पद्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चिदन्तस्स्थपुष्परत्नादिनिर्मितदिव्यलीलामण्टपशतसहस्रोपशोभितैः सर्वदाऽनुभूयमानैरप्यपूर्ववदाश्चर्यमावहद्भिः क्रीडाशैलशतसहस्रैरलंकृतैः कैश्चिन्नारायणदिव्यलीलासाधारणैः कैश्चित्पद्मवनालयादिव्यलीलासाधारणैः साधारणैश्च कैश्चित् शुकशारिकामयूरकोकिलादिभिः कोमलकूजितैराकुलैर्दिव्योद्यानशतसहस्रैरावृते, मणिमुक्ताप्रवालकृतसोपानैर्दिव्यामलामृतरसोदकैर्दिव्याण्डजवरैरतिरमणीयदर्शनैरतिमनोहरमधुरस्वरैराकुलैरन्तस्स्थमुक्तामयदिव्यक्रीडास्थानोपशोभितैर्दिव्यसौग-

न्धिकवापीशतसहस्रैर्दिव्यराजहंसावलीविराजितैरावृते, निरस्तातिशयानन्दैकरसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैर्विराजिते, तत्रतत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते, नानापुष्पासवास्वादमत्तभृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते, चन्दनागुरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने, मध्ये दिव्यपुष्पसञ्चयविचित्रिते महति दिव्ययोगपर्यङ्के अनन्तभोगिनि, श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादिकं सर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनम्, प्रत्यग्रोन्मीलितसरसिजसदृशनयनयुगलम्, स्वच्छनीलजीमूतसङ्काशम्, अत्युज्ज्वलपीतवाससम्, स्वया प्रभया अतिनिर्मलया अतिशीतलया [अतिकोमलया] स्वच्छया माणिक्याभया कृत्स्नं जगदुद्भासयन्तम्, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतसागरम्, अतिसौकुमार्यादीषत्प्रस्विन्नवदालक्ष्यमाणललाटफलकदिव्यालकावलीविराजितम्, प्रबुद्धमुग्धाम्बुजचारुलोचनम्, सविभ्रमभ्रूलतम्, उज्ज्वलाधरम्, शुचिस्मितम्, कोमलगण्डम्, उन्नसम्, उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिश्चतुर्भिराजानुविलम्बिभिर्भुजैर्विराजितम्, अतिकोमलदिव्यरेखालंकृताताम्रकरतलम्, दिव्याङ्गुलीयकविराजितम्, अतिकोमलदिव्यनखावलीविराजिता[नु]तिरक्ताङ्गुलीभिरलंकृतम्, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगलम्, अतिमनोहरकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीतांबरकाञ्चीगुणनूपुरादिभिरत्यन्तसुखस्पर्शैर्दिव्यगन्धैर्भूषणैर्भूषितम्, श्रीमत्या वैजयन्त्या वनमालया विराजितम्, शङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैः सेव्यमानम्, स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्, वैनतेयादिभिः स्वभावतो निरस्तसमस्तसांसारिकस्वभावैर्भगवत्परिचर्याकरणयोग्यैर्भगवत्परिचर्यैकभोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानम्, आत्मभोगेनाननुसंहितपरादिकालम्, दिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तम्, ईषदुन्मीलितमुखाम्बुजोदरविनिर्गतेन दिव्याननारविन्दशोभाजननेन दिव्यगाम्भीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिकगुणगणविभूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिलजनहृदयान्तराण्यापूरयन्तं भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा, [ततो] भगवतो नित्यस्वाम्यम् आत्मनो नित्यदास्यं च यथावस्थितमनुसन्धाय, 'कदाऽहं भगवन्तं नारायणं मम कुलनाथं मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा? कदाऽहं भगवत्पादम्बुजद्वयं शिरसा संग्रहीष्यामि? कदाऽहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तसमस्तेतरभोगाशोऽपगतसमस्तसांसारिकस्वभावस्तत्पादाम्बुजद्वयं प्रवेक्ष्यामि? कदाऽहं भगवत्पादाम्बुजद्वयपरिचर्याकरणयोग्यस्तदेकभोगस्तत्पादौ परिचरिष्यामि?

कदा मां भगवान्स्वकीयया अतिशीतलया दृशाऽवलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यति? इति भगवत्परिचर्यायामाशां वर्धयित्वा तयैवाशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य दूरादेव भगवन्तं शेषभोगे श्रिया सहासीनं वैनतेयादिभिः सेव्यमानम् समस्तपरिवाराय श्रीमते नारायणाय नमः इति प्रणम्योत्थायोत्थाय पुनःपुनः प्रणम्य, अत्यन्तसाध्वसविनयावनतो भूत्वा, भगवत्पार्षदगणनायकैर्द्वारपालैः कृपया स्नेहगर्भया दृशा अवलोकितः, सम्यगभिवन्दितैस्तैस्तैरेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्व इति याचमानः प्रणम्य, आत्मानं भगवते निवेदयेत् ॥ ४ ॥

ततो भगवता स्वयमेवात्मसंजीवनेनामर्यादशीलवता अतिप्रेमान्वितेनावलोकनेनावलोक्य सर्वदेशसर्वकालसर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतोऽनुज्ञातश्च, अत्यन्तसाध्वसविनयावनतः किंकुर्वाणः, कृताञ्जलिपुटो भगवन्तमुपासीत ॥ ५ ॥

ततश्चानुभूयमानभावविशेषः, निरतिशयप्रीत्या अन्यत्किंचित्कर्तुं द्रष्टुं स्मर्तुमशक्तः, पुनरपि शेषभावमेव याचमानः, भगवन्तमेवाविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत ॥ ६ ॥

ततो भगवता स्वयमेवात्मसंजीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहमात्मीयं श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवः सुखमासीत ॥ ७ ॥

॥ इति श्रीभगवद्रामानुजविरचिते गद्यत्रये श्रीवैकुण्ठगद्यं समाप्तम् ॥

॥ समाप्तं च गद्यत्रयम् ॥

अनया गद्यद्वयोक्तगमनिकयैव श्रीवैकुण्ठगद्यमपि गतार्थप्रायम्। एतयोः स्वानुष्ठानोक्तिमुखेन शिष्यशिक्षणं कृतम्; तस्मिंस्तु उपदेशमुखेनेति विशेषः। तत्र यदादौ पठ्यते—* यामुनार्यसुधाम्भोधिमवगाह्य यथामति, आदाय भक्तियोगाख्यं रत्नं संदर्शयाम्यहमिति; इहासौ भक्तियोगशब्दः स्वयंप्रयोजनभगवदनुसंधानपरः; अन्यथा, * तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः इति वाक्ष्यमाणविरोधात्। अत एव * प्रत्यहमात्मोज्जीवनायेत्यादिकमपि न मुक्तितत्साधनपरम्; अपि तु * ज्ञानी तु परमैकान्ती परायत्तात्मजीवनः इत्यादिप्रसिद्धे अत्रत्यावस्थाविशेषे मरुदेशपथिकपानीयन्यायेन अलभ्यलाभाश्वासनाभिप्रायम् ॥

**तेषामपीयत्परिमाणमियदैश्वर्यमीदृशस्वभावमिति परिच्छेत्तुमयोग्ये** इति दिव्यायतनविशेषणे तु महत्तरत्वमेव विवक्षितम्, दिव्यावरणसंवृतत्वादिकथनेनैव तत्परिमाणसिद्धेः। अत्र स्वभावशब्दोऽपि निरतिशयभोग्यत्वादिविषयः। न ह्येवंविधविषयेषु परिच्छेदायोग्यत्वोक्त्या सूरीणां सार्वज्ञ्यहानिः, दिव्यायतनगुणप्रकर्षे तात्पर्याच्च। **प्रविष्टानुन्मादयद्भिः क्रीडोदेशैः** इत्यत्रापि हर्षप्रकर्षजनकत्वे तात्पर्यम्। **श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकम्** इत्यत्र तु वैकुण्ठशब्देन नगराद्यवान्तरप्रदेशो विवक्षितः; स एव प्रशस्तविभूतिरूपत्वादैश्वर्यशब्देनोपचर्यते। नित्यमुक्तविषयं

देव्या आज्ञापनं परिचर्याविशेषेष्विच्छोत्पादनमात्रम्, तेषां सर्वज्ञत्वेन ज्ञानोत्पादननैरपेक्ष्यात्। **पुण्डरीकसदृशचरणयुगलम्** इत्यत्र पुण्डरीकशब्दः पद्मसामान्यमुखेन रक्ताम्बुजपरः। यत्तूक्तम्—**संकल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्** इति, तत्र यद्यपि जगद्व्यापारनोऽश्वरत्वे ब्रह्मलक्षणतया मुक्तेष्विव नित्यसूरिष्वपि सर्वेषु न संभवतः; यद्यपि च भगवान् स्वतः सर्वज्ञः; तथाऽपि *प्रियेण सेनापतिना निवेदितं तथाऽनुजानन्तमुदारवीक्षणैरिति न्यायेन भगवद्दत्ततादृशाधिकारतया तत्तदवसरे जगत्सृष्ट्याद्यर्थं भगवते विज्ञापनवाक्यं विष्वक्सेनो व्याहरति; तदा स्वतः सर्वज्ञो भगवान् तन्निवेदितकारीव क्रीडति; तावन्मात्रेण विष्वक्सेनस्य जगद्व्यापारव्यपदेशरूपस्तुतिः; **न्यस्तसमस्तात्मैश्वर्यम्** इत्येतदपि सेनानिर्वहणाद्यर्थाधिकारप्रदानपरम्; *स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिन्यायेन परिमितविषयो वाऽत्र जगच्छब्दः; अतो हिरण्यगर्भादिवत् क्वाचित्कप्रभूतसृष्ट्यादिमात्रान्नास्मिन् ब्रह्मलक्षणप्रसङ्गः। यदपि **आत्मभोगेनाननुसंहितपरादिकालम्** इति, तदपि भगवतः कालविषयमज्ञानं नाभिप्रैति, आनन्दप्रकर्षप्रशंसायां तात्पर्यात्। यच्च **तत्पादाम्बुजद्वयं प्रवेक्ष्यामि** इति मुमुक्षोरभिसंधिरुच्यते, तत्र पूर्वोक्तस्य शिरसा संग्रहणस्य गाढतमत्वं प्रवेशशब्देनाभिप्रेतम्॥ यदपि **शेषभावाय स्वीकृतः** इति, तत्र यावदात्मभाविकैङ्कर्यकरणाय संकल्पित इत्यर्थः। एवमन्यदपि सर्वं सुसंगतम्॥

द्वयवचनधनानां द्विःप्रयोगानपेक्षे मुषितनिखिलदोषे मुक्त्युपाये स्थितानाम्।
अमृतमिव पयोधेरासमेतद्यतीन्द्राद्व्यवृणुत मितगद्यं वेङ्कटेशः सुमेधाः॥

इति रहस्यरक्षायां मितगद्याधिकारः समाप्तः॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु रहस्यरक्षायां
॥ गद्यत्रयभाष्यं समाप्तम्॥

श्रीमद्वेदान्तदेशिकग्रन्थमालायां
व्याख्यानविभागे
## ॥ प्रथमसम्पुटं समाप्तम्॥

फारम् ५—१८, लिबर्टी प्रेस्, मद्रपुरी.

